तनयः केतुमानिति विश्रुतः ॥ अथ केतुमतः पुत्रो वीरो भीमरथः स्मृतः ॥ ३९ ॥ पुत्रो भीमरथस्यासीद्दिवोदासः प्रजेश्वरः ॥ दिवोदासस्तु धर्मात्मा वाराणस्यधिपोऽभवत् ॥ ४० ॥ एतस्मिन्नेव काले तु पुरीं वाराणसीं द्विजाः ॥ शून्यां निवेशयामास क्षेमको नाम राक्षसः ॥ ४१ ॥ शप्ता हि सा मतिमता निकुम्भेन महात्मना ॥ शून्या वर्षसहस्रं वै भवित्री तु न संशयः ॥ ४२ ॥ तस्यां हि शप्तमात्रायां दिवोदासः प्रजेश्वरः ॥ विषयान्ते पुरीं रम्यां गोमत्यां संन्यवेशयत् ॥ ४३ ॥ भद्रश्रेण्यस्य पूर्वं तु पुरी वाराणसी ह्यभूत् ॥ भद्रश्रेण्यस्य पुत्राणां शतमुत्तमधन्विनाम् ॥ ॥ ४४ ॥ हत्वा निवेशयामास दिवोदासो नराधिपः ॥ भद्रश्रेण्यस्य तद्राज्यं हृतं येन बलीयसा ॥ ४५ ॥ भद्रश्रेण्यस्य पुत्रस्तु दुर्दमो नाम विश्रुतः ॥ दिवोदासेन बालेति घृणयाऽसौ विसर्जितः ॥ ४६ ॥ हैहयस्य तु दायाद्यं हृतवान्वै महीपतिः ॥ आजह्रे पितृदायाद्यं दिवोदासहृतं बलात् ॥ ४७ ॥ भद्रश्रेण्यस्य पुत्रेण दुर्दमेन महात्मना ॥ वैरस्यान्तो महाभागाः कृतश्चाऽऽत्मीयतेजसा ॥ ४८ ॥ दिवोदासाद्दृषद्वत्यां वीरो जज्ञे प्रतर्दनः ॥ तेन बालेन पुत्रेण प्रहृतं तु पुनर्बलात् ॥ ४९ ॥ प्रतर्दनस्य पुत्रौ द्वौ वत्सभर्गौ सुविश्रुतौ ॥ शत्रुजिद्वत्सपुत्रोऽथ तस्य पुत्रो ऋतध्वजः ॥ ५० ॥ अलर्कस्तस्य पुत्रस्तु ब्रह्मण्यः सत्यसंगरः ॥ अलर्कं प्रति राजर्षिं श्लोको गीतः पुरातनैः ॥ ५१ ॥ षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ॥ युवा रूपेण संपन्नः प्रागासीच्च कुलोद्वहः ॥ ५२ ॥ लोपामुद्राप्रसादेन परमायुरवाप सः ॥ तस्याऽऽसीत्सुमहद्राज्यं रूपयौवनशालिनः ॥ ५३ ॥ शापस्यान्ते महाबाहुर्हत्वा क्षेमकराक्षसम् ॥ रम्यां निवेशयामास पुरीं वाराणसीं पुनः ॥ ५४ ॥ संनतेरपि दायादः सुनीथो नाम धार्मिकः ॥ सुनीथस्य तु दायादः क्षेमो नाम महायशाः ॥ ५५ ॥ क्षेमस्य केतुमान्पुत्रः सुकेतुस्तस्य चाऽऽत्मजः ॥ सुकेतुतनयश्चापि धर्मकेतुरिति श्रुतिः ॥ ॥ ५६ ॥ धर्मकेतोस्तु दायादः सत्यकेतुर्महारथः ॥ सत्यकेतुसुतश्चापि विभुर्नाम प्रजेश्वरः ॥ ५७ ॥ आनर्तश्च विभोः पुत्रः सुकुमारश्च तत्सुतः ॥ सुकुमारस्य पुत्रस्तु धृष्टकेतुः सुधार्मिकः ॥ ५८ ॥ धृष्टकेतोस्तु दायादो वेणुहोत्रः प्रजेश्वरः ॥ वेणुहोत्रसुतश्चापि भर्गो नाम प्रजेश्वरः ॥ ५९ ॥ वत्सस्य वत्सभूमिस्तु भर्गभूमिस्तु भार्गजः ॥ एते त्वङ्गिरसः पुत्रा जाता वंशेऽथ भार्गवे ॥ ६० ॥ ब्राह्मणाः क्षत्रिया वैश्यास्तेजोयुक्ताः सहस्रशः ॥ इत्येते काश्यपाः प्रोक्ता नहुषस्य निबोधत ॥ ६१ ॥ इति श्रीब्रह्मपुराणे सोमवंशे वृद्धक्षत्रप्रसूतिनिरूपणं नाम नवमोऽध्यायः ॥ ९ ॥ लोमहर्षण उवाच ॥ उत्पन्नाः पितृकन्यायां विरजायां महौजसः ॥ नहुषस्य तु दायादाः षडिन्द्रोपेन्द्रतेजसः ॥ १ ॥ यतिर्ययातिः शर्यातिरायातिर्यातिरेव च ॥ सुयातिः षष्ठस्तेषां वै ययातिः पार्थिवोऽभवत् ॥ २ ॥ यतिर्ज्येष्ठस्तु तेषां वै ययातिस्तु ततः





परम् ॥ ककुत्स्थकन्यां गां नाम लेभे परमधार्मिकः ॥ यतिस्तु मोक्षमास्थाय ब्रह्मभूतोऽभवन्मुनिः ॥ ३ ॥ तेषां ययातिः पञ्चानां विजित्य वसुधामिमाम् ॥ देवयानीमुशनसः सुतां भार्यामवाप सः ॥ ४ ॥ शर्मिष्ठामासुरीं चैव तनयां वृषपर्वणः ॥ यदुं च तुर्वसुं चैव देवयानी व्यजायत ॥ ॥ ५ ॥ द्रुह्यं चानुं च पूरुं च शर्मिष्ठा वार्षपर्वणी ॥ तस्मै शक्रो ददौ प्रीतो रथं परमभास्वरम् ॥ ६ ॥ आङ्गं च काञ्चनं दिव्यं दिव्यैः परमवाजिभिः ॥ युक्तं मनोजवैः शुभ्रैर्येन कार्यं समुद्वहन् ॥ ७ ॥ स तेन रथमुख्येन षड्रात्रेणाजयन्महीम् ॥ ययातिर्युधि दुर्धर्षस्तथा देवान्सदानवान् ॥ ८॥ स रथः कौरवाणां तु सर्वेषामभवत्तदा ॥ संवर्तवसुनाम्नस्तु कौरवाज्जनमेजयात् ॥ ९ ॥ कुरोः पुत्रस्य राजेन्द्र राज्ञः पारीक्षितस्य ह ॥ जगाम स रथो नाशं शापाद्गर्गस्य धीमतः ॥ १० ॥ गर्गस्य हि सुतं बालं स राजा जनमेजयः ॥ वाक्क्रूरं हिंसयामास ब्रह्महत्यामवाप सः ॥ ११ ॥ स लोहगन्धी राजर्षिः परिधावन्नितस्ततः ॥ पौरजानपदैस्त्यक्तो न लेभे शर्म कर्हिचित् ॥ १२ ॥ ततः स दुःखसंतप्तो नालभत्संविदं क्वचित् ॥ विप्रेन्द्रं शौनकं राजा शरणं प्रत्यपद्यत ॥ १३ ॥ याजयामास यज्ञेन शौनको जनमेजयम् ॥ अश्वमेधेन राजानं पावनार्थं द्विजोत्तमाः ॥ १४ ॥ स लोहगन्धो व्यनशत्तस्यावभृथमेत्य ह ॥ स च दिव्यरथो राज्ञो वशश्चेदिपतेस्तदा ॥ १५ ॥ दत्तः शक्रेण तुष्टेन लेभे तस्माद्बृहद्रथः ॥ बृहद्रथात्क्रमेणैव गतो बार्हद्रथं नृपम् ॥ १६ ॥ ततो हत्वा जरासन्धं भीमस्तं रथमुत्तमम् ॥ प्रददौ वासुदेवाय प्रीत्या कौरवनन्दनः ॥ १७ ॥ सप्तद्वीपां ययातिस्तु जित्वा पृथ्वीं ससागराम् ॥ व्यभजत्स्वं तदा राज्यं पुत्राणां नाहुषस्तदा ॥ १८ ॥ ययातिर्दिशि पूर्वस्यां यदुं ज्येष्ठं न्ययोजयत् ॥ मध्ये पूरुं च राजानमभ्यषिञ्चत्स नाहुषः ॥ १९ ॥ दिशि दक्षिणपूर्वस्यां तुर्वसुं मतिमान्नृपः ॥ तैरियं पृथिवी सर्वा सप्तद्वीपा सपत्तना ॥ २० ॥ यथाप्रदेशमद्यापि धर्मेण प्रतिपाल्यते ॥ प्रजास्तेषां पुरस्तात्तु वक्ष्यामि मुनिसत्तमाः ॥ २१ ॥ धनुर्न्यस्य पृषत्कांश्च पञ्चभिः पुरुषर्षभैः ॥ जरावानभवद्राजा भारमावेश्य बन्धुषु ॥ २२ ॥ निक्षिप्तशस्त्रः पृथिवीं चचार पृथिवीपतिः ॥ प्रीतिमानभवद्राजा ययातिरपराजितः ॥ २३ ॥ एवं विभज्य पृथिवीं ययातिर्यदुमब्रवीत् ॥ जरां मे प्रतिगृह्णीष्व पुत्र कृत्यान्तरेण वै ॥ २४ ॥ तरुणस्तव रूपेण चरेयं पृथिवीमिमाम् ॥ जरां त्वयि समाधाय तं यदुः प्रत्युवाच ह ॥ २५ ॥ यदुरुवाच ॥ अनिर्दिष्टा मया भिक्षा ब्राह्मणस्य प्रतिश्रुता ॥ अनपाकृत्य तां राजन्न ग्रहीष्यामि ते जराम् ॥ २६ ॥ जरायां बहवो दोषाः पानभोजनकारिताः ॥ तस्माज्जरां न ते राजन्ग्रहीतुमहमुत्सहे ॥ २७ ॥ सन्ति ते बहवः पुत्रा मत्तः प्रियतरा नृप ॥ प्रतिग्रहीतुं धर्मज्ञ पुत्रमन्यं वृणीष्व वै ॥ २८ ॥ स एवमुक्तो यदुना राजा कोपसमन्वितः ॥ उवाच वदतां श्रेष्ठो यया

तिर्गर्हयन्सुतम् ॥ २९ ॥ ययातिरुवाच ॥ क आश्रमस्तवान्योऽस्ति को वा धर्मो विधीयते ॥ मामनादृत्य दुर्बुद्धे यदहं तव देशिकः ॥ ३० ॥
एवमुक्त्वा सुतं विप्राः शशापैनं स मन्युमान् ॥ अराज्यास्ते प्रजा मूढ भविष्यन्ति न संशयः ॥ ३१ ॥ द्रुह्युं च तुर्वसुं चैवाप्यनुं च द्विजसत्तमाः ॥
एवमेवाब्रवीद्राजा प्रत्याख्यातश्च तैरपि ॥ ३२ ॥ शशाप तानपि क्रुद्धो ययातिरपराजितः ॥ यथावत्कथितं सर्वं मयाऽस्य द्विजसत्तमाः ॥ ३३ ॥
एवं शप्त्वा सुतान्सर्वांश्चतुरः पुरुपूर्वजान् ॥ तदेव वचनं राजा पुरुमप्याह भो द्विजाः ॥ ३४ ॥ तरुणस्तव रूपेण चरेयं पृथिवीमिमाम् ॥ जरां
त्वयि समाधाय त्वं पुरो यदि मन्यसे ॥ ३५ ॥ स जरां प्रतिजग्राह पितुः पूरुः प्रतापवान् ॥ ययातिरपि रूपेण पूरोः पर्यचरन्महीम् ॥ ३६ ॥
स मार्गमाणः कामानामन्तं नृपतिसत्तमः ॥ विश्वाच्या सहितो रेमे वने चैत्ररथे प्रभुः ॥ ३७ ॥ यदा त्वतृप्तः कामेषु भोगेषु च नराधिपः ॥ तदा
पुरोः सकाशाद्वै स्वां जरां प्रत्यपद्यत ॥ ३८ ॥ यत्र गाथा मुनिश्रेष्ठा गीताः किल ययातिना ॥ योभिप्रत्याहरेत्कामान्सर्वशोऽङ्गानि कूर्मवत् ॥ ३९ ॥
न जातु कामः कामानामुपभोगेन शाम्यति ॥ हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ ४० ॥ यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः
स्त्रियः ॥ नालमेकस्य तत्सर्वमिति कृत्वा न मुह्यति ॥ ४१ ॥ यदा भावं न कुरुते सर्वभूतेषु पापजम् ॥ कर्मणा मनसा वाचा ब्रह्म संपद्यते
तदा ॥ ४२ ॥ यदाऽन्येभ्यो न बिभेति यदा चास्मान्न बिभ्यति ॥ यदा नेच्छति न द्वेष्टि ब्रह्म संपद्यते तदा ॥ ४३ ॥ या दुस्त्यजा दुर्मतिभिर्या
न जीर्यति जीर्यतः ॥ योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम् ॥ ४४ ॥ जीर्यन्ति जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः ॥
धनाशा जीविताशा च जीर्यतोऽपि न जीर्यति ॥ ४५ ॥ यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ॥ तृष्णाक्षयसुखस्यैते नार्हन्ति
षोडशीं कलाम् ॥ ४६ ॥ एवमुक्त्वा स राजर्षिः सदारः प्राविशद्वनम् ॥ कालेन महता चापि चचार विपुलं तपः ॥ ४७ ॥ भृगुतुङ्गे
तपस्तप्त्वा तपसोऽन्ते महायशाः ॥ अनश्नन्देहमुत्सृज्य सदारः स्वर्गमाप्तवान् ॥ ४८ ॥ तस्य वंशे मुनिश्रेष्ठाः पञ्च राजर्षिसत्तमाः ॥ यैर्व्याप्ता
पृथिवी सर्वा सूर्यस्येव गभस्तिभिः ॥ ४९ ॥ यदोस्तु वंशं वक्ष्यामि शृणुध्वं राजसत्कृतम् ॥ यत्र नारायणो जज्ञे हरिर्वृष्णिकुलोद्वहः ॥ ५० ॥
शृण्वन्प्रजावानायुष्मान्कीर्तिमांश्च भवेन्नरः ॥ ययातिचरितं नित्यमिदं शृण्वन्द्विजोत्तमाः ॥ ५१ ॥ इति श्रीब्रह्मपुराणे सोमवंशे ययातिचरित-
निरूपणं नाम दशमोऽध्यायः ॥ १० ॥ ॥ ब्राह्मणा ऊचुः ॥ पुरोर्वंशं वयं सूत श्रोतुमिच्छाम तत्त्वतः ॥ द्रुह्योस्यानोर्यदोश्चैव तुर्वसोश्च पृथक्पृथ-
क् ॥ १ ॥ ॥ लोमहर्षण उवाच ॥ शृणुध्वं मुनिशार्दूलाः पुरोर्वंशं महात्मनः ॥ विस्तरेणाऽऽनुपूर्व्या च प्रथमं वदतो मम ॥ २ ॥ पुरोः पुत्र-

सुवीरोऽभून्मनस्युस्तस्य चाऽऽत्मजः ॥ राजा चाभयदो नाम मनस्योरभवत्सुतः ॥ ३ ॥ तथैवाभयदस्याऽऽसीत्सुधन्वा च महीपतिः ॥ सुधन्वनः सुबाहुस्तु रौद्राश्वस्तस्य चाऽऽत्मजः ॥ ४ ॥ रौद्राश्वस्य दशार्णेयुः कृकणेयुस्तथैव च ॥ कक्षेयुः स्थण्डिलेयुश्च सन्नतेयुस्तथैव च ॥ ५ ॥ ऋचेयुश्च जलेयुश्च स्थलेयुश्च महायशाः ॥ धनेयुश्च वनेयुश्च पुत्रकाश्च दश स्त्रियः ॥ ६ ॥ भद्रा शूद्रा च मद्रा च शलदा मलदा तथा ॥ खलदा च ततो विप्रा नलदा सुरसाऽपि वा ॥ ७ ॥ तथा गोचपला च स्त्रीरत्नकूटा च ता दश ॥ ऋषिर्जातोऽत्रिवंशे च तासां भर्ता प्रभाकरः ॥ ८ ॥ भद्रायां जनयामास सुतं सोमं यशस्विनम् ॥ स्वर्भानुना हते सूर्ये पतमाने दिवो महीम् ॥ ९ ॥ तमोभिभूते लोके च प्रभा येन प्रवर्तिता ॥ स्वस्ति तेऽस्त्विति चोक्त्वा वै पतमानो दिवाकरः ॥ १० ॥ वचनात्तस्य विप्रर्षेर्न पपात दिवो महीम् ॥ अत्रिश्रेष्ठानि गोत्राणि यश्चकार महातपाः ॥ ११ ॥ यज्ञेष्वत्रेर्बलं चैव देवैर्यस्य प्रतिष्ठितम् ॥ स तासु जनयामास पुत्रिकास्वात्मकामजान् ॥ १२ ॥ दश पुत्रान्महासत्त्वांस्तपस्युग्रे रतांस्तथा ॥ ते तु गोत्रकरा विप्रा ऋषयो वेदपारगाः ॥ १३ ॥ स्वस्त्यात्रेया इति ख्याताः किंच त्रिधनवर्जिताः ॥ कक्षेयोस्तनयास्त्वासंस्त्रय एव महारथाः ॥ ॥ १४ ॥ सभानरश्चाक्षुषश्च परमन्युस्तथैव च ॥ सभानरस्य पुत्रस्तु विद्वान्कालानलो नृपः ॥ १५ ॥ कालानलस्य धर्मज्ञः सृञ्जयो नाम वै सुतः ॥ सृञ्जयस्याभवत्पुत्रो वीरा राजा पुरंजयः ॥ १६ ॥ जनमेजयो मुनिश्रेष्ठाः पुरंजयसुतोऽभवत् ॥ जनमेजयस्य राजर्षेर्महाशालोऽभवत्सुतः ॥ १७ ॥ देवेषु यः परिज्ञातः प्रतिष्ठितयशा भुवि ॥ महामना नाम सुतो महाशालस्य धार्मिकः ॥ १८ ॥ जज्ञे वीरः सुरगणैः पूजितः स महामनाः ॥ महामनास्तु पुत्रौ द्वौ जनयामास भो द्विजाः ॥ १९ ॥ उशीनरं च धर्मज्ञं तितिक्षुं च महाबलम् ॥ उशीनरस्य पत्न्यस्तु पञ्च राजर्षिवंशजाः ॥ २० ॥ नृगा कृमिर्नवा दर्वा पञ्चमी च दृषद्वती ॥ उशीनरस्य पुत्रास्तु पञ्च तासु कुलोद्वहाः ॥ २१ ॥ तपसा चैव महता जाता वृद्धस्य चाऽऽत्मजाः ॥ नृगायास्तु नृगः पुत्रः कृम्यां कृमिरजायत ॥ २२ ॥ नवायास्तु नवः पुत्रो दर्वायाः सुव्रतोऽभवत् ॥ दृषद्वत्यास्तु संजज्ञे शिबिरौशीनरो नृपः ॥ २३ ॥ शिबेस्तु शिबयो विप्रा यौधेयास्तु नृगस्य ह ॥ नवस्य नवराष्ट्रं तु कृमेस्तु कृमिला पुरी ॥ २४ ॥ सुव्रतस्य तथाम्बष्ठाः शिविपुत्रान्निबोधत ॥ शिबेस्तु शिबयः पुत्राश्चत्वारो लोकविश्रुताः ॥ २५ ॥ वृषदर्भः सुवीरश्च कैकेयो मद्रकस्तथा ॥ तेषां जनपदाः स्फीताः कैकेया मद्रकास्तथा ॥ २६ ॥ वृषदर्भाः सुवीराश्च तितिक्षोस्तु प्रजास्त्विमाः ॥ तितिक्षुरभवद्राजा पूर्वस्यां दिशि भो द्विजाः ॥ २७ ॥ उषद्रथो महावीर्यः फेनस्तस्य सुतोऽभवत् ॥ फेनात्तु सुतपा जज्ञे ततः सुतपसो बलिः ॥ २८ ॥ जातो मानुषयोनौ तु स राजा काञ्चनेषुधिः ॥

महायोगी स तु बलिर्बभूव नृपतिः पुरा ॥ २९ ॥ पुत्रानुत्पादयामास पञ्च वंशकरान्भुवि ॥ अङ्गः प्रथमतो जज्ञे वङ्गः सुह्मस्तथैव च ॥ ३० ॥ पुण्ड्रः कलिङ्गश्च तथा बालेयं क्षत्रमुच्यते ॥ वालेया ब्राह्मणाश्चैव तस्य वंशकरा भुवि ॥ ३१ ॥ वलेश्च ब्रह्मणा दत्तो वरः प्रीतेन भो द्विजाः ॥ महायोगित्वमायुश्च कल्पस्य परिमाणतः ॥ ३२ ॥ बले चाप्रतिमत्वं वै धर्मतत्त्वार्थदर्शनम् ॥ संग्रामे चाप्यजेयत्वं धर्मे चैव प्रधानताम् ॥३३॥ त्रैलोक्यदर्शनं चापि प्राधान्यं प्रसवे तथा ॥ चतुरो नियतान्वर्णांस्त्वं च स्थापयितेति च ॥ ३४॥ इत्युक्तो विभुना राजा वलिः शान्तिमुपाययौ ॥ कालेन महता विप्राः स्वर्गस्थानमुपागमत्॥३५॥तेषां जनपदाः पञ्च अङ्गा वङ्गाश्च सुह्मकाः ॥ कलिङ्गाः पुण्ड्रकाश्चैव प्रजास्त्वङ्गस्य साम्प्रतम् ॥३६॥ अङ्गपुत्रो महानासीद्राजेन्द्रो दधिवाहनः ॥ दधिवाहनपुत्रस्तु राजा दिविरथोऽभवत् ॥ ३७ ॥ पुत्रो दिविरथस्याऽऽसीच्छक्रतुल्यपराक्रमः ॥ विद्वान्स्वर्गरथो नाम तस्य चित्ररथः सुतः ॥ ३८ ॥ तेन स्वर्गरथेनाथ तदा कालंजरे गिरौ ॥ यजता सह शक्रेण सोमः पीतो महात्मना ॥ ३९ ॥ अथ चित्ररथस्यापि पुत्रो दशरथोऽभवत् ॥ लोमपाद इति ख्यातो यस्य शान्ता सुताऽभवत् ॥ ४० ॥ तस्य दाशरथिर्वीरश्चतुरङ्गो महायशाः ॥ ऋष्यशृङ्गप्रसादेन जज्ञे कुलविवर्धनः ॥ ४१ ॥ चतुरङ्गस्य पुत्रस्तु पृथुलाक्ष इति स्मृतः ॥ पृथुलाक्षसुतो राजा चम्पो नाम महायशाः ॥ ४२ ॥ चम्पस्य तु पुरी चम्पा या मालिन्यभवत्पुरा ॥ पूर्णभद्रप्रसादेन हर्यङ्गस्तत्सुतोऽभवत् ॥ ४३ ॥ ततो वैभाण्डकिश्चैव वारणं शक्रवारणम् ॥ अवतारयामास महीं मंत्रैर्वाहनमुत्तमम् ॥ ४४ ॥ हर्यङ्गस्य सुतस्तत्र राजा भद्ररथः स्मृतः ॥ पुत्रो भद्ररथस्याऽऽसीद्बृहत्कर्मा प्रजेश्वरः ॥ ४५ ॥ बृहद्दर्भः सुतस्तस्य यस्माज्जज्ञे बृहन्मनाः ॥ बृहन्मनास्तु राजेन्द्रो जनयामास वै सुतम् ॥ ४६ ॥ नाम्ना जयद्रथं नाम यस्माद्दृढरथो नृपः ॥ आसीद्दृढरथस्यापि विश्वजिज्जनमेजयः ॥ ४७ ॥ दायादस्तस्य वैकर्णो विकर्णस्तस्य चाऽऽत्मजः ॥ तस्य पुत्रशतं त्वासीदङ्गानां कुलवर्धनम् ॥ ४८ ॥ एतेऽङ्गवंशजाः सर्वे राजानः कीर्तिता मया ॥ सत्यव्रता महात्मानः प्रजावन्तो महारथाः ॥४९॥ ऋचेयोस्तु मुनिश्रेष्ठा रौद्राश्वतनयस्य वै ॥ शृणुध्वं संप्रवक्ष्यामि वंशं राज्ञस्तु भो द्विजाः ॥ ५० ॥ ऋचेयोस्तनयो राजा मतिनारो महीपतिः ॥ मतिनारसुतास्त्वासंस्त्रयः परमधार्मिकाः ॥ ५१ ॥ वसुरोधः प्रतिरथः सुबाहुश्चैव धार्मिकः ॥ सर्वे वेदविदश्चैव ब्रह्मण्याः सत्यवादिनः ॥ ५२ ॥ इला नाम तु यस्याऽऽसीत्कन्या वै मुनिसत्तमाः ॥ ब्रह्मवादिन्यथ स्त्री सा तंसुस्तामभ्यगच्छत ॥ ५३ ॥ तंसोः सुतोऽथ राजर्षिर्धर्मनेत्रः प्रतापवान् ॥ ब्रह्मवादी पराक्रान्तस्तस्य भार्योपदानवी ॥५४॥ उपदानवी ततः पुत्रांश्चतुरोऽजनयच्छुभान् ॥ दुष्यन्तमथ सुष्मन्तं प्रवीरमनघं तथा ॥ ५५ ॥ दुष्य

न्तस्य तु दायादो भरतो नाम वीर्यवान् ॥ स सर्वदमनो नाम नागायुतबलो महान् ॥ ५६ ॥ चक्रवर्ती सुतो जज्ञे दुष्यन्तस्य महात्मनः ॥ शकुन्तलायां भरतो यस्य नाम्ना तु भारतम् ॥ ५७ ॥ भरतस्य विनष्टेषु तनयेषु महीपतेः ॥ मातॄणां तु प्रकोपेण मया तत्कथितं पुरा ॥ ५८ ॥ बृहस्पतेराङ्गिरसः पुत्रो विप्रो महामुनिः ॥ अयाजयद्भरद्वाजो महद्भिः क्रतुभिर्विभुः ॥ ५९ ॥ पूर्वं तु वितथे तस्य कृते वै पुत्रजन्मनि ॥ ततोऽथ वितथो नाम भरद्वाजात्सुतोऽभवत् ॥ ६० ॥ ततोऽथ वितथे जाते भरतस्तु दिवं ययौ ॥ वितथं चाभिषिच्याथ भरद्वाजो वनं ययौ ॥ ६१ ॥ स चापि वितथः पुत्राञ्जनयामास पञ्च वै ॥ सुहोत्रं च सुहोतारं गयं गर्गं तथैव च ॥ ६२ ॥ कपिलं च महात्मानं सुहोत्रस्य सुतद्वयम् ॥ काशिकं च महासत्वं तथा गृत्समतिं नृपम् ॥ ६३ ॥ तथा गृत्समतेः पुत्रा ब्राह्मणाः क्षत्रिया विशः ॥ काशिकस्य तु काशेयः पुत्रो दीर्घतपास्तथा ॥ ६४ ॥ बभूव दीर्घतपसो विद्वान्धन्वन्तरिः सुतः ॥ धन्वन्तरेस्तु तनयः केतुमानिति विश्रुतः ॥ ६५ ॥ तथा केतुमतः पुत्रो विद्वान्भीमरथः स्मृतः ॥ पुत्रो भीमरथस्यापि वाराणस्याधिपोऽभवत् ॥ ६६ ॥ दिवोदास इति ख्यातः सर्वक्षत्रप्रणाशनः ॥ दिवोदासस्य पुत्रोभूद्वीरो राजा प्रतर्दनः ॥ ६७ ॥ प्रतर्दनस्य पुत्रौ द्वौ वत्सो भार्गव एव च ॥ अलर्को राजपुत्रस्तु राजा सन्मतिमानपि ॥ ६८ ॥ हैहयस्य तु दायाद्यं हृतवान्वै महीपतिः ॥ आजह्रे पितृदायाद्यं दिवोदासहृतं बलात् ॥ ६९ ॥ भद्रश्रेण्यस्य पुत्रेण दुर्दमेन महात्मना ॥ दिवोदासेन बालेति घृणयाऽसौ विसर्जितः ॥ ७० ॥ अष्टारथो नाम नृपः सुतो भीमरथस्य वै ॥ तेन पुत्रेण बालस्य प्रहृतं तस्य भो द्विजाः ॥ ७१ ॥ वैरस्यान्तं मुनिश्रेष्ठाः क्षत्रियेण विधित्सता ॥ अलर्कः काशिराजस्तु ब्रह्मण्यः सत्यसंगरः ॥ ७२ ॥ षष्टिं वर्षसहस्राणि षष्टिं वर्षशतानि च ॥ युवा रूपेण संपन्न आसीत्काशिकुलोद्वहः ॥ ७३ ॥ लोपामुद्राप्रसादेन परमायुरवाप सः ॥ वयसोऽन्ते मुनिश्रेष्ठा हत्वा क्षेमकराक्षसम् ॥ ७४ ॥ रम्यां निवेशयामास पुरीं वाराणसीं नृपः ॥ अलर्कस्य तु दायादः क्षेमको नाम पार्थिवः ॥ ७५ ॥ क्षेमकस्य तु पुत्रो वै वर्षकेतुस्ततोऽभवत् ॥ वर्षकेतोश्च दायादो विभुर्नाम प्रजेश्वरः ॥ ७६ ॥ आनर्तस्तु विभोः पुत्रः सुकुमारस्ततोऽभवत् ॥ सुकुमारस्य पुत्रस्तु सत्यकेतुर्महारथः ॥ ७७ ॥ सुतोऽभवन्महातेजा राजा परमधार्मिकः ॥ वत्सस्य वत्सभूमिस्तु भर्गभूमिस्तु भार्गवात् ॥ ७८ ॥ एते त्वाङ्गिरसः पुत्रा जाता वंशेऽथ भार्गवे ॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च मुनिसत्तमाः ॥ ७९ ॥ आजमीढोऽपरो वंशः श्रूयतां द्विजसत्तमाः ॥ सुहोत्रस्य बृहत्पुत्रो बृहतस्तनयास्त्रयः ॥ ८० ॥ अजमीढो द्विमीढश्च पुरुमीढश्च वीर्यवान् ॥ अजमीढस्य पत्न्यस्तु तिस्रो वै यशसाऽन्विताः ॥ ८१ ॥ नीली च केशिनी चैव धूमिनी च वराङ्गनाः ॥ अजमीढस्य केशिन्यां जज्ञे जह्नुः प्रतापवान् ॥ ८२ ॥

आजह्ने यो महासत्रं सर्वमेधमखं विभुम् ॥ पतिलोभेन यं गङ्गा विनीतेव ससार ह ॥ ८३ ॥ नेच्छतः प्लावयामास तस्य गंगा च तत्सदः ॥ तं तया प्लावितं दृष्ट्वा यज्ञवाटं समन्ततः ॥ ८४ ॥ जह्नुरप्यब्रवीद्गङ्गां क्रुद्धो विप्रास्तदा नृपः ॥ एष ते त्रिषु लोकेषु संक्षिप्याऽपः पिबाम्यहम् ॥ अस्य गंगेऽवलेपस्य सद्यः फलमवाप्नुहि ॥ ८५ ॥ ततः पीतां महात्मानो दृष्ट्वा गंगां महर्षयः ॥ उपनिन्युर्महाभागा दुहितृत्वेन जाह्नवीम् ॥ ८६ ॥ युवनाश्वस्य पुत्रीं तु कावेरीं जह्नुरावहत् ॥ गंगाशापेन देहार्धं यस्याः पश्चान्नदीकृतम् ॥ ८७ ॥ जह्नोस्तु दयितः पुत्रो ह्यजको नाम वीर्यवान् ॥ अजकस्य तु दायादो बलाकाश्वो महीपतिः ॥ ८८ ॥ बभूव मृगयाशीलः कुशिकस्तस्य चाऽऽत्मजः ॥ पह्लवैः सह संवृद्धो राजा वनचरैः सह॥८९॥ कुशिकस्तु तपस्तेपे पुत्रमिन्द्रसमं विभुम् ॥ लभेयमिति तं शक्रस्त्रासादभ्येत्य जज्ञिवान् ॥ ९० ॥ स गाधिरभवद्राजा मघवा कौशिकः स्वयम् ॥ विश्वामित्रस्तु गाधेयो विश्वामित्रात्तथाऽष्टकः ॥ ९१ ॥ ( विश्वबाधिः श्वजिचैव तथा सत्यवती द्विजाः ॥ ऋचीकाज्जमदग्निस्तु सत्यवत्यामजायत ॥ विश्वामित्रस्य तु सुता देवरातादयः स्मृताः ॥ प्रख्यातास्त्रिषु लोकेषु तेषां नामानि भो द्विजाः ॥ देवरातः कतिश्चैव यस्मात्कात्यायनः स्मृतः ॥ शालवत्यां हिरण्याक्षो रेणुर्यस्याथ रेणुका ॥ सांकृत्यां गालवा विप्रा मौद्गल्याश्चेति विश्रुताः ॥ तेषां ख्यातानि गोत्राणि कौशिकानां महात्मनाम् ॥ पाणिनो बभ्रवश्चैव ध्यानजप्यास्तथैव च ॥ पार्थिवा देवराताश्च शालङ्कायनसौश्रवाः ॥ लोहिता यामभूताश्च तथा कारीषयः स्मृताः ॥ विश्रुताः कौशिका विप्रास्तथाऽन्ये सैन्धवायनाः ॥ ऋष्यन्तरविवाह्याश्च कौशिका बहवः स्मृताः ॥ पौरवस्य मुनिश्रेष्ठा ब्रह्मर्षेः कौशिकस्य च ॥ संबन्धोऽस्याथ वंशेऽस्मिन्ब्रह्मक्षत्रस्य विश्रुतः ॥ विश्वामित्रात्मजानां तु शुनःशेफोऽग्रजः स्मृतः ॥ भार्गवः कौशिकत्वं हि प्राप्तः स मुनिपुंगवः ॥ देवरातादयश्चापि विश्वामित्रस्य वै सुताः ॥ दृषद्वतीसुतश्चापि विश्वामित्रस्तथाऽष्टकः ) ॥ अष्टकस्य सुतो लौहिः प्रोक्तो जह्नुगणो मया ॥ आजमीढोऽपरो वंशः श्रूयतां मुनिसत्तमाः ॥ ९२ ॥ अजमीढात्तु नीलिन्यां सुशान्तिरुदपद्यत ॥ पुरुजातिः सुशान्तेश्च बाह्याश्वः पुरुजातितः ॥ ९३ ॥ बाह्याश्वतनयाः पञ्च बभूवुरमरोपमाः ॥ मुद्गलः सृञ्जयश्चैव राजा बृहदिषुस्तथा ॥ ९४ ॥ यवीनरश्च विक्रान्तः कृमिलाश्वश्च पञ्चमः ॥ पञ्चैते रक्षणायालं देशानामिति विश्रुताः ॥ ९५ ॥ पञ्चानां ते तु पञ्चालाः स्फीता जनपदावृताः ॥ अलं संरक्षणे तेषां पञ्चाला इति विश्रुताः ॥ ९६ ॥ मुद्गलस्य तु दायादो मौद्गल्यः सुमहायशाः ॥ इन्द्रसेना यतो गर्भं वध्र्यश्वं प्रत्यपद्यत ॥ ९७ ॥ ( पुत्रः सत्यधृतिर्नाम धनुर्वेदस्य पारगः ॥ तस्य सत्यधृते रेतो दृष्ट्वाऽप्सरसमग्रतः ॥ अवस्कन्नं शरस्तम्बे मिथुनं समपद्यत ॥ कृपया तच्च जगृहे





शंतनुर्भूर्गर्यां गतः ॥ कृपः स्मृतः स वै तस्माद्गौतमी च कृपी स्मृता ॥ एते शारद्वताः प्रोक्ता एते ते गौतमाः स्मृताः ॥ अत ऊर्ध्वं प्रवक्ष्यामि दिवोदासस्य संततिम् ॥ दिवोदासस्य दायादो ब्रह्मर्षिर्मित्रयुर्नृपः ॥ मित्रयोस्तु ततः सोमो मैत्रेयास्ते ततः स्मृताः ॥ एतेऽपि संश्रिताः पक्षं क्षत्रोत्पन्नास्तु भार्गवम् ॥ ) आसीत्पञ्चजनः पुत्रः सृञ्जयस्य महात्मनः ॥ सुतः पञ्चजनस्यापि सोमदत्तो महीपतिः ॥ ९८ ॥ सोमदत्तस्य दायादः सहदेवो महायशाः ॥ सहदेवसुतश्चापि सोमको नाम विश्रुतः ॥ तथा गृत्समतेः पुत्रो ह्यजमीढो महाबलः ॥ ९९ ॥ अजमीढसुतो जातः क्षीणे वंशे तु सोमकः ॥ सोमकस्य सुतो जन्तुर्यस्य पुत्रशतं बभौ ॥ १०० ॥ तेषां यवीयान्पृषतो द्रुपदस्य पिता प्रभुः ॥ आजमीढाः स्मृता ह्येते महात्मानस्तु सोमकाः ॥ १०१ ॥ महिषी त्वजमीढस्य धूमिनी पुत्रगृद्धिनी ॥ पतिव्रता महाभागा कुलजा मुनिसत्तमाः ॥ १०२ ॥ सा च पुत्रार्थिनी देवी व्रतचर्यासमन्विता ॥ ततो वर्षायुतं चक्रे तपः परमदुश्चरम् ॥ १०३ ॥ हुत्वाऽग्निं विधिवत्सा तु पवित्रा मितभोजना ॥ अग्निहोत्रकुशेष्वेव सुष्वाप मुनिसत्तमाः ॥ १०४ ॥ धूमिन्या स तया देव्या त्वजमीढः समीयिवान् ॥ ऋक्षं संजनयामास धूम्रवर्णं सुदर्शनम् ॥ १०५ ॥ ऋक्षात्संवरणो जज्ञे कुरुः संवरणात्ततः ॥ यः प्रयागादतिक्रम्य कुरुक्षेत्रं चकार ह ॥ १०६ ॥ पुण्यं च रमणीयं च पुण्यकृद्भिर्निषेवितम् ॥ तस्यान्ववायः सुमहान्यस्य नाम्ना तु कौरवाः ॥ १०७ ॥ कुरोश्च पुत्राश्चत्वारः सुधन्वा सुधनुस्तथा ॥ परीक्षिच्च महाबाहुः प्रवरश्चारिमेजयः ॥ १०८ ॥ परीक्षितस्तु दायादो धार्मिको जनमेजयः ॥ श्रुतसेनोऽग्रसेनश्च भीमसेनश्च नामतः ॥ १०९ ॥ ( सुधन्वनस्तु दायादः सुहोत्रो मतिमान्स्मृतः ॥ च्यवनस्तस्य पुत्रस्तु राजा धर्मार्थकोविदः ॥ च्यवनात्कृतयज्ञस्तु इष्ट्वा यज्ञैस्तु धर्मवित् ॥ विश्रुतं जनयामास पुत्रमिन्द्रसखं नृपम् ॥ चैद्योपरिचरं वीरं वसुं नाम्नाऽन्तरिक्षगम् ॥ चैद्योपरिचराज्जज्ञे गिरिका सप्त मानवान् ॥ महारथो मगधराट् विश्रुतो यो बृहद्रथः ॥ प्रत्यग्रथः क्रथश्चैव यमाहुर्मणिवाहनम् ॥ शाकलश्च जुहुश्चैव मत्स्यः काली च सप्तमः ॥ बृहद्रथस्य दायादः कुशाग्रो नाम विश्रुतः ॥ कुशाग्रस्याऽऽत्मजो विद्वानृषभो नाम वीर्यवान् ॥ जहोस्तु कथयिष्यामि वंशं सर्वगुणान्वितम् ॥ जुहुस्त्वजनयत्पुत्रं सुरथं नाम भूमिपम् ॥ ) एते सर्वे महाभागा विक्रान्ता बलशालिनः ॥ जनमेजयस्य पुत्रस्तु सुरथो मतिमांस्तथा ॥ ११० ॥ सुरथस्य तु विक्रान्तः पुत्रो जज्ञे विदूरथः ॥ विदूरथस्य दायाद ऋक्ष एव महाबलः ॥ १११ ॥ द्वितीयस्तु भरद्वाजान्नाम्ना तेनैव विश्रुतः ॥ द्वावृक्षौ सोमवंशेऽस्मिन्द्वावेव च परीक्षितौ ॥ ११२ ॥ भीमसेनास्त्रयो विप्रा द्वौ चापि जनमेजयौ ॥ ऋक्षस्य तु द्वितीयस्य भीमसेनोऽभवत्सुतः ॥ ११३ ॥ प्रतीपो भीमसेनात्तु प्रतीपस्य तु शन्तनुः ॥ देवापिर्बाह्लिकश्चापि त्रय एव महारथाः ॥ ११४ ॥ शन्तनुस्त्व

[illegible] वंशेऽस्मिन्वै द्विजोत्तमाः ॥ बाह्लिकस्य तु राजर्षेर्वंशं शृणुत भो द्विजाः ॥ ११५ ॥ बाह्लिकस्य सुतश्चैव सोमदत्तो महायशाः ॥ जज्ञिरे सोमदत्तात्तु भूरिर्भूरिश्रवाः शलः ॥ ११६ ॥ उपाध्यायस्तु देवानां देवापिरभवन्मुनिः ॥ च्यवनस्य पुत्रः कृतक इष्ट आसीन्महात्मनः ॥ ११७ ॥ शन्तनुस्त्वभवद्राजा कौरवाणां धुरंधरः ॥ शन्तनोः संप्रवक्ष्यामि वंशं त्रैलोक्यविश्रुतम् ॥ ११८ ॥ गाङ्गं देवव्रतं नाम पुत्रं सोऽजनयत्प्रभुः ॥ स तु भीष्म इति ख्यातः पाण्डवानां पितामहः ॥ ११९ ॥ काली विचित्रवीर्यं तु जनयामास भो द्विजाः ॥ शन्तनोर्दयितं पुत्रं धर्मात्मानमकल्मषम् ॥ १२० ॥ कृष्णद्वैपायनश्चैव क्षेत्रे वैचित्रवीर्यके ॥ धृतराष्ट्रं च पाण्डुं च विदुरं चाप्यजीजनत् ॥ १२१ ॥ धृतराष्ट्रेण गान्धार्यां पुत्रा उत्पादिताः शतम् ॥ तेषां दुर्योधनः श्रेष्ठः सर्वेषामपि स प्रभुः ॥ १२२ ॥ पाण्डोर्धनंजयः पुत्रः सौभद्रस्तस्य चाऽऽत्मजः ॥ अभिमन्योः परीक्षित्तु ततः पारीक्षितः सुतः ॥ १२३ ॥ पारीक्षितस्य काश्यां वै द्वौ पुत्रौ संबभूवतुः ॥ चन्द्रापीडश्च नृपतिः सूर्यापीडश्च मोक्षवित् ॥ १२४ ॥ चन्द्रापीडश्च पुत्राणां शतमुत्तमधन्विनाम् ॥ जानमेजयमित्येवं क्षात्रं भुवि परिश्रुतम् ॥ १२५ ॥ तेषां ज्येष्ठस्तु तत्राऽऽसीत्पुरे वारणसाह्वये ॥ सत्यकर्णो महाबाहुर्यज्वा विपुलदक्षिणः ॥ १२६ ॥ सत्यकर्णस्य दायादः श्वेतकर्णः प्रतापवान् ॥ अपुत्रः स तु धर्मात्मा प्रविवेश तपोवनम् ॥ १२७ ॥ तस्माद्वनगताद्गर्भं यादवी प्रत्यपद्यत ॥ सुबाहोर्दुहिता सुभ्रूर्मालिनी ग्राहमालिनी ॥ १२८ ॥ संभूते स च गर्भे च श्वेतकर्णः प्रजेश्वरः ॥ अन्वगच्छत्कृतं पूर्वं महाप्रस्थानमच्युतम् ॥ १२९ ॥ सा तु दृष्ट्वा प्रियं तं च मालिनी पृष्ठतोऽन्वगात् ॥ सुचारोर्दुहिता साध्वी वने राजीवलोचना ॥ १३० ॥ पथि सा सुषुवे बाला सुकुमारं कुमारकम् ॥ तमपास्य च तत्रैव राजानं साऽन्वगच्छत ॥ १३१ ॥ पतिव्रता महाभागा द्रौपदीव पुरा सती ॥ कुमारः सुकुमारोऽसौ गिरिकुंजे रुरोद ह ॥ १३२ ॥ दयार्थं तस्य मेघास्तु प्रादुरासन्महात्मनः ॥ श्रविष्ठायास्तु पुत्रौ द्वौ पैप्पलादिश्च कौशिकः ॥ १३३ ॥ दृष्ट्वा कृपान्वितौ गृह्य तं प्राक्षालयतां जले ॥ निघृष्टौ तस्य पार्श्वौ तु शिलायां रुधिरप्लुतौ ॥ १३४ ॥ अजश्यामः स पार्श्वाभ्यां घृष्टाभ्यां सुसमाहितः ॥ अजश्यामौ तु तत्पार्श्वौ दैवेन संबभूवतुः ॥ १३५ ॥ अथाजपार्श्व इति वै चक्राते नाम तस्य तौ ॥ स तु रोमकशालायां द्विजाभ्यां परिवर्धितः ॥ १३६ ॥ रोमकस्य तु भार्या तमुद्वहत्पुत्रकारणात् ॥ रोमक्याः स तु पुत्रोऽभूद्ब्राह्मणौ सचिवौ तु तौ ॥ १३७ ॥ तेषां पुत्राश्च पौत्राश्च युगपत्तुल्यजीविनः ॥ स एष पौरवो वंशः पाण्डवानां प्रतिष्ठितः ॥ १३८ ॥ श्लोकोऽपि चात्र गीतोऽयं नाहुषेण ययातिना ॥ जरासंक्रमणे पूर्वं भृशं प्रीतेन धीमता ॥ १३९ ॥ आचन्द्रार्कग्रहा भूमिर्भवेदियमसंशयम् ॥ अपौरवा मही नैव भविष्यति कदाचन ॥ १४० ॥ एष वः पौरवो वंशो विख्यातः कथितो मया ॥ तुर्वसोश्च

प्रवक्ष्यामि द्रुह्योश्चानोर्यदोस्तथा ॥ १४१ ॥ तुर्वसोश्च सुतो वह्निर्गोभानुस्तस्य चाऽऽत्मजः ॥ गोभानोस्तु सुतो राजा त्रैशानुरपराजितः ॥ १४२ ॥ करंधमस्तु त्रैशानोर्मरुत्तस्तस्य चाऽऽत्मजः ॥ अन्यस्त्वाविक्षितो राजा मरुत्तः कथितो मया ॥ १४३ ॥ अनपत्योऽभवद्राजा यज्वा विपुलदक्षिणः ॥ दुहिता संयता नाम तस्याऽऽसीत्पृथिवीपतेः ॥ १४४ ॥ दक्षिणार्थं तु सा दत्ता संवर्ताय महात्मने ॥ दुष्यन्तं पौरवं चापि लेभे पुत्रमकल्मषम् ॥ १४५ ॥ एवं ययातिशापेन जरासंक्रमणे तदा ॥ पौरवं तुर्वसोर्वंशं प्रविवेश द्विजोत्तमाः ॥ १४६ ॥ दुष्यन्तस्य तु दायादः करूरोमः प्रजेश्वरः ॥ करूरोमादथाह्लीदश्चत्वारस्तस्य चाऽऽत्मजाः ॥ १४७ ॥ पाण्ड्यश्च केरलश्चैव कोलश्चोलश्च पार्थिवः ॥ तेषां जनपदाः स्फीताः पाण्ड्याश्चोलाश्च केरलाः ॥ द्रुह्योश्च तनयो राजत्वभ्रुसेतुश्च पार्थिवः ॥ १४८ ॥ अङ्गारसेतुस्तत्पुत्रो मरुतां पतिरुच्यते ॥ यौवनाश्वेन समरे कृच्छ्रेण निहतो बली ॥ १४९ ॥ युद्धं सुमहदप्यासीन्मासान्परिचरद्दश ॥ अङ्गारसेतोर्दायादो गान्धरो नाम पार्थिवः ॥ १५० ॥ ख्यायते यस्य नाम्ना वै गान्धारविषयो महान् ॥ गान्धारदेशजाश्चैव तुरगा वाजिनां वराः ॥ १५१ ॥ अनोस्तु पुत्रो धर्मोऽभूद्धृतस्तस्याऽऽत्मजोऽभवत् ॥ धृताच्छतद्रुहो जज्ञे प्रचेतास्तस्य चाऽऽत्मजः ॥१५२॥ प्रचेतसः सुचेतास्तु कीर्तितास्तनया मया ॥ बभूवुस्तु यदोः पुत्राः पञ्च देवसुतोपमाः ॥१५३॥ सहस्रदः पयोदश्च क्रोष्टा नीलोऽञ्जिकस्तथा ॥ सहस्रदस्य दायादास्त्रयः परमधार्मिकाः ॥ १५४ ॥ हैहयश्च हयश्चैव राजा वेणुहयस्तथा ॥ हैहयस्याभवत्पुत्रो धर्मनेत्र इति श्रुतः ॥१५५॥ धर्मनेत्रस्य कार्तस्तु साहञ्जस्तस्य चाऽऽत्मजः ॥ साहञ्जनी नाम पुरी तेन राज्ञा निवेशिता ॥१५६॥ आसीन्माहिष्मतः पुत्रो भद्रश्रेण्यः प्रतापवान् ॥ भद्रश्रेण्यस्य दायादो दुर्दमो नाम विश्रुतः ॥ १५७ ॥ दुर्दमस्य सुतो धीमान्कनको नाम नामतः ॥ कनकस्य तु दायादाश्चत्वारो लोकविश्रुताः ॥१५८॥ कृतवीर्यः कृतौजाश्च कृतकर्मा तथैव च ॥ कृताग्निस्तु चतुर्थोऽभूत्कृतवीर्यात्तथार्जुनः ॥१५९॥ योऽसौ बाहुसहस्रेण सप्तद्वीपेश्वरोभवत् ॥ जिगाय पृथिवीमेको रथेनाऽऽदित्यवर्चसा ॥१६०॥ स हि वर्षायुतं तप्त्वा तपः परमदुश्चरम् ॥ दत्तमाराधयामास कार्तवीर्योऽत्रिसंभवम् ॥ ॥१६१॥ तस्मै दत्तो वरान्प्रादाच्चतुरो भूरितेजसः ॥ पूर्वं बाहुसहस्रं वै प्रार्थितं सुमहद्वरम् ॥१६२॥ अधर्मेऽधीयमानस्य सद्भिस्तत्र निवारणम् ॥ उग्रेण पृथिवीं जित्वा धर्मेणैवानुरञ्जनम् ॥१६३॥ सङ्ग्रामान्सुबहूञ्जित्वा हत्वा चारीन्सहस्रशः ॥ सङ्ग्रामे वर्तमानस्य वधं चाभ्यधिकाद्रणे ॥ १६४ ॥ तस्य बाहुसहस्रं तु युध्यतः किल भो द्विजाः ॥ योगाद्योगेश्वरस्येव प्रादुर्भवति मायया ॥ १६५ ॥ तेनेयं पृथिवी सर्वा सप्तद्वीपा सपत्तना ॥ ससमुद्रा सनगरा उग्रेण विधिना जिता ॥ १६६ ॥ तेन सप्तसु द्वीपेषु सप्त यज्ञशतानि वै ॥ प्राप्तानि विधिना राज्ञा श्रूयन्ते मुनिसत्तमाः ॥१६७॥

सर्वे यज्ञा मुनिश्रेष्ठाः सहस्रशतदक्षिणाः ॥ सर्वे काञ्चनयूपाश्च सर्वे काञ्चनवेदयः ॥ १६८ ॥ सर्वैर्देवैर्मुनिश्रेष्ठा विमानस्थैरलंकृतैः ॥ गन्धर्वै रप्सरोभिश्च नित्यमेवोपशोभिताः ॥ १६९ ॥ यस्य यज्ञे जगौ गाथां गन्धर्वो नारदस्तथा ॥ वरीदासात्मजो विद्वान्महिम्ना तस्य विस्मितः ॥ १७० ॥ नारद उवाच ॥ न नूनं कार्तवीर्यस्य गतिं यास्यन्ति पार्थिवाः ॥ यज्ञैर्दानैस्तपोभिर्वा विक्रमेण श्रुतेन च ॥ १७१ ॥ स हि सप्तसु द्वीपेषु चर्मी खड्गी शरासनी ॥ रथी द्वीपाननुचरन्योगी संदृश्यते नृभिः ॥ १७२ ॥ अनष्टद्रव्यता चैव न शोको न च विभ्रमः ॥ प्रभावेण महाराज्ञः प्रजा धर्मेण रक्षतः ॥१७३॥ स सर्वरत्नभोगाढ्यश्चक्रवर्ती बभूव ह ॥ स एव पशुपालोऽभूत्क्षेत्रपालः स एव च ॥ १७४ ॥ स एव वृष्ट्या पर्जन्यो योगित्वादर्जुनोऽभवत् ॥ स वै बाहुसहस्रेण ज्याघातकठिनत्वचा ॥ १७५ ॥ भाति रश्मिसहस्रेण शरदीव च भास्करः ॥ स हि नागान्मनुष्येषु माहिष्मत्यां महाद्युतिः ॥ १७६ ॥ कर्कोटकसुताञ्जित्वा पुर्यां तस्यां न्यवेशयत् ॥ स वै वेगं समुद्रस्य प्रावृट्कालेऽम्बुजेक्षणः ॥ १७७ ॥ क्रीडन्निव भुजोद्भिन्नं प्रतिस्रोतश्चकार ह ॥ लुण्ठिता क्रीडता तेन नदी तद्ग्राममालिनी ॥१७८॥ चलदूर्मिसहस्रेण शङ्किताऽभ्येति नर्मदा ॥ तस्य बाहुसहस्रेण क्षिप्यमाणे महोदधौ ॥ १७९ ॥ भयान्निलीना निश्चेष्टाः पातालस्था महासुराः ॥ चूर्णीकृतमहावीचिं चलन्मीनमहातिमिम् ॥१८०॥ मारुताविद्धफेनौघमावर्तक्षोभसंकुलम् ॥ प्रावर्तयत्तदा राजा सहस्रेण च बाहुना ॥ १८१ ॥ देवासुरसमाक्षिप्तः क्षीरोदमिव मन्दरः ॥ तत्संक्षोभेण चकितास्तार्क्ष्यागमनशंकिताः ॥ १८२॥ सहसोत्पतिता भीता भीमं दृष्ट्वा नृपोत्तमम् ॥ नता निश्चलमूर्धानो बभूवुस्ते महोरगाः ॥१८३॥ सायाह्ने कदलीखण्डाः कम्पिता इव वायुना ॥ स वै बद्ध्वा धनुर्ज्याभिरुत्सिक्तं पञ्चभिः शरैः ॥ १८४ ॥ लङ्केशं मोहयित्वा तु सबलं रावणं बलात् ॥ निर्जित्य वशमानीय माहिष्मत्यां बबन्ध तम् ॥ १८५ ॥ श्रुत्वा तु बद्धं पौलस्त्यं रावणं त्वर्जुनेन ह ॥ ततो गत्वा पुलस्त्यस्तमर्जुनं ददृशे स्वयम् ॥ १८६ ॥ मुमोच रक्षः पौलस्त्यं पुलस्त्येनानुयाचितः ॥ यस्य बाहुसहस्रस्य बभूव ज्यातलस्वनः ॥ १८७ ॥ युगान्ते तोयदस्येव स्फुरतो ह्यशनेरिव ॥ अहो बत मृधे वीर्यं भार्गवस्य यदच्छिनत् ॥ १८८ ॥ राज्ञो बाहुसहस्रं तु हैमं तालवनं यथा ॥ तृषितेन कदाचित्स भिक्षितश्चित्रभानुना ॥ १८९ ॥ स भिक्षामददद्वीरः सप्त द्वीपान्विभावसोः ॥ पुराणि ग्रामघोषांश्च विषयांश्चैव सर्वशः ॥ १९० ॥ जज्वलुस्तस्य सर्वाणि चित्रभानुदिधक्षया ॥ स तस्य पुरुषेन्द्रस्य प्रभावेण महात्मनः ॥ १९१ ॥ ददाह कार्तवीर्यस्य शैलांश्चैव वनानि च ॥ स शून्यमाश्रमं रम्यं वरुणस्याऽऽत्मजस्य वै ॥ १९२ ॥ ददाह बलवद्भीतश्चित्रभानुः स हैहयः ॥ यं लेभे वरुणः पुत्रं पुरा भास्वन्तमुत्तमम् ॥ १९३ ॥ वसिष्ठो नाम स मुनिः ख्यात आपव इत्युत ॥ यत्रापवस्तु तं क्रोधा





च्छतवानर्जुनं विभुः ॥ १९४ ॥ यस्मान्न वर्जितमिदं वनं ते मम हैहय ॥ तस्मात्ते दुष्करं कर्म कृतमन्यो हनिष्यति ॥ १९५ ॥ रामो नाम महाबाहुर्जामदग्न्यः प्रतापवान् ॥ छित्वा बाहुसहस्रं ते प्रमथ्य तरसा बली ॥ १९६ ॥ तेजस्वी ब्राह्मणस्त्वां तु वधिष्यति स भार्गवः ॥ अनष्टद्रव्यता यस्य बभूवामित्रकर्षिणः ॥ १९७ ॥ प्रतापेन नरेन्द्रस्य प्रजा धर्मेण रक्षतः ॥ प्राप्तस्ततोऽस्य मृत्युर्वै तस्य शापान्महामुनेः ॥ १९८ ॥ वरस्तथैव भो विप्राः स्वयमेव वृतः पुरा ॥ तस्य पुत्रशतं त्वासीत्पञ्च शेषा महात्मनः ॥ १९९ ॥ कृतास्त्रा बलिनः शूरा धर्मात्मानो यशस्विनः ॥ शूरसेनश्च शूरश्च वृषणो मधुपध्वजः ॥ २०० ॥ जयध्वजश्च नाम्नाऽऽसीदावन्त्यो नृपतिर्महान् ॥ कार्तवीर्यस्य तनया वीर्यवन्तो महाबलाः ॥ २०१ ॥ जयध्वजस्य पुत्रस्तु तालजङ्घो महाबलः ॥ तस्य पुत्रशतं ख्यातास्तालजंघा इति श्रुताः ॥ २०२ ॥ तेषां कुले मुनिश्रेष्ठा हैहयानां महात्मनाम् ॥ वीतिहोत्राः सुव्रताश्च भोजाश्चावन्तयः स्मृताः ॥ २०३ ॥ तौण्डिकेराश्च विख्यातास्तालजंघास्तथैव च ॥ भरताश्च सुजाताश्च बहुत्वान्नानुकीर्तिताः ॥ २०४ ॥ वृषप्रभृतयो विप्रा यादवाः पुण्यकर्मिणः ॥ वृषो वंशधरस्तत्र तस्य पुत्रोऽभवन्मधुः ॥ २०५ ॥ मधोः पुत्रशतं त्वासीद्वृषणस्तस्य वंशकृत् ॥ वृषणाद्वृष्णयः सर्वे मधोस्तु माधवाः स्मृताः ॥ २०६ ॥ यादवा यदुनाम्ना ते निरुच्यन्ते च हैहयाः ॥ न तस्य वित्तनाशः स्यान्नष्टं प्रति लभेच्च सः ॥ २०७ ॥ कार्तवीर्यस्य यो जन्म कथयेदिह नित्यशः ॥ एते ययातिपुत्राणां पञ्च वंशा द्विजोत्तमाः ॥ २०८ ॥ कीर्तिता लोकवीराणां ये लोकान्धारयन्ति वै ॥ भूतानीव मुनिश्रेष्ठाः पञ्च स्थावरजङ्गमान् ॥ २०९ ॥ श्रुत्वा पञ्च विसर्गांस्तु राजा धर्मार्थकोविदः ॥ वशी भवति पञ्चानामात्मजानां तथेश्वरः ॥ २१० ॥ लभेत्पञ्च वरांश्चैव दुर्लभानिह लौकिकान् ॥ आयुः कीर्तिन्तथा पुत्रानैश्वर्यं भूतिमेव वै ॥ २११ ॥ धारणाच्छ्रवणाच्चैव पञ्चवर्गस्य भो द्विजाः ॥ क्रोष्टोर्वंशं मुनिश्रेष्ठाः शृणुध्वं गदतो मम ॥ २१२ ॥ यदोर्वंशधरस्याथ यज्विनः पुण्यकर्मिणः ॥ क्रोष्टोर्वंशं हि श्रुत्वैव सर्वपापैः प्रमुच्यते ॥ यस्यान्ववायजो विष्णुर्हरिर्वृष्णिकुलोद्वहः ॥ २१३ ॥ इति श्रीब्रह्मपुराणे ययातिवंशानुकीर्तनं नामैकादशोऽध्यायः ॥ ११ ॥ ॥ लोमहर्षण उवाच ॥ गान्धारी चैव माद्री च क्रोष्टोर्भार्ये बभूवतुः ॥ गान्धारी जनयामास अनमित्रं महाबलम् ॥ १ ॥ माद्री युधाजितं पुत्रं ततोऽन्यं देवमीढुषम् ॥ तेषां वंशस्त्रिधा भूतो वृष्णीनां कुलवर्धनः ॥ २ ॥ माद्र्याः पुत्रौ तु जज्ञाते शुभौ वृष्ण्यन्धकावुभौ ॥ जज्ञाते तनयौ वृष्णेः श्वफल्कश्चित्रकस्तथा ॥ ३ ॥ श्वफल्कस्तु मुनिश्रेष्ठा धर्मात्मा यत्र वर्तते ॥ नास्ति व्याधिभयं तत्र नावर्षभयमेव च ॥ ४ ॥ कदाचित्काशिराजस्य विषये मुनिसत्तमाः ॥ त्रीणि वर्षाणि विषये नावर्षत्पाकशासनः ॥ ५ ॥

॥ १२ ॥

स तत्र चाऽऽनयामास श्वफल्कं परमार्चितम् ॥ श्वफल्कपरिवर्तेन ववर्ष हरिवाहनः ॥ ६ ॥ श्वफल्कः काशिराजस्य सुतां भार्यामविन्दत ॥ गान्दिनीं नाम गां सा तु ददौ विप्राय नित्यशः ॥ ७ ॥ दाता यज्वा च वीरश्च श्रुतवानतिथिप्रियः ॥ अक्रूरः सुषुवे तस्माच्छ्वफल्काद्भूरिदक्षिणः ॥ ॥ ८ ॥ उपमद्गुस्तथा मद्गुर्मेदुरश्चारिमेजयः ॥ अविक्षितस्तथाऽऽक्षेपः शत्रुघ्नश्चारिमर्दनः ॥ ९ ॥ धर्मधृग्यतिधर्मा च धर्मोक्षाऽन्धकरुस्तथा ॥ आवाहप्रतिवाहौ च सुन्दरी च वराङ्गना ॥ १० ॥ अक्रूरेणोग्रसेनायां सुगात्र्यां द्विजसत्तमाः ॥ प्रसेनश्चोपदेवश्च जज्ञाते देववर्चसौ ॥ ११ ॥ चित्रकस्याभवन्पुत्राः पृथुर्विपृथुरेव च ॥ अश्वग्रीवोऽश्वबाहुश्च स्वपार्श्वकगवेषणौ ॥ १२ ॥ अरिष्टनेमिरश्वस्तु सुधर्मा धर्मभृत्तथा ॥ सुबाहुर्बहुबाहुश्च श्रविष्ठाश्रवणे स्त्रियौ ॥ १३ ॥ असिक्न्यां जनयामास शूरं वै देवमीढुषम् ॥ महिष्यां जज्ञिरे शूरा भोज्यायां पुरुषा दश ॥ १४ ॥ वसुदेवो महाबाहुः पूर्वमानकदुन्दुभिः ॥ जज्ञे यस्य प्रसूतस्य दुन्दुभ्यः प्राणदन्दिवि ॥ १५ ॥ आनकानां च संह्रादः सुमहानभवद्दिवि ॥ पपात पुष्पवर्षश्च शूरस्य भवने महत् ॥ १६ ॥ मनुष्यलोके कृत्स्नेऽपि रूपे नास्ति समो भुवि ॥ यस्याऽऽसीत्पुरुषाग्र्यस्य कान्तिश्चन्द्रमसो यथा ॥ १७ ॥ देवभागस्ततो जज्ञे तथा देवश्रवाः पुनः ॥ अनाधृष्टिः कनवको वत्सवानथ गृञ्जमः ॥ १८ ॥ श्यामः शमीको गण्डूषः पञ्च वास्य वराङ्गनाः ॥ पृथुकीर्तिः पृथा चैव श्रुतदेवा श्रुतश्रवा ॥१९॥ राजाधिदेवी च तथा पञ्चैता वीरमातरः ॥ आवत्यः श्रुतदेवायां जगृहुः सुषुवे सुतः ॥ श्रुतश्रवायां चैद्यस्तु शिशुपालोऽभवन्नृपः ॥२०॥ हिरण्यकशिपुर्योऽसौ दैत्यराजोऽभवत्पुरा ॥ पृथुकीर्त्यां तु संजज्ञे तनयो वृद्धशर्मणः ॥ २१ ॥ करूषाधिपतिर्वीरो दन्तवक्रो महाबलः ॥ पृथां दुहितरं चक्रे कुन्तिस्तां पाण्डुरावहत् ॥ २२ ॥ यस्यां स धर्मविद्राजा धर्माज्जज्ञे युधिष्ठिरः ॥ भीमसेनस्तथा वातादिन्द्राच्चैव धनंजयः ॥ २३ ॥ लोके प्रतिरथो वीरः शक्रतुल्यपराक्रमः ॥ अनमित्राच्छिनिर्जज्ञे कनिष्ठाद्वृष्णिनन्दनात् ॥ २४ ॥ शैनेयः सत्यकस्तस्माद्युयुधानश्च सात्यकिः ॥ उद्धवो देवभागस्य महाभागः सुतोऽभवत् ॥२५॥ पण्डितानां परं प्राहुर्देवश्रवसमुत्तमम् ॥ अश्मक्यां प्राप्तवान्पुत्रमनाधृष्टिर्यशस्विनम् ॥ ॥ २६ ॥ निवृत्तशत्रुं शत्रुघ्नं श्रुतदेवा त्वजायत ॥ श्रुतदेवात्मजातस्तु नैषादिर्यः परिश्रुतः ॥२७॥ एकलव्यो मुनिश्रेष्ठा निषादैः परिवर्धितः ॥ वत्सावते त्वपुत्राय वसुदेवः प्रतापवान् ॥ अद्भिर्ददौ सुतं वीरं शौरिः कौशिकमौरसम् ॥ २८ ॥ गण्डूषाय त्वपुत्राय विष्वक्सेनो ददौ सुतान् ॥ चारुदेष्णं सुदेष्णं च पञ्चालं कृतलक्षणम् ॥२९॥ असंग्रामेण यो वीरो नाऽऽवर्तत कदाचन ॥ रौक्मिणेयो महाबाहुः कनीयान्द्विजसत्तमाः ॥ ३० ॥ वायसानां सहस्राणि यं यान्तं पृष्ठतोऽन्वयुः ॥ चारुनद्योपभोक्ष्यामश्चारुदेष्णहतानिति ॥ ३१ ॥ तन्त्रिजस्तन्त्रिपालश्च सुतौ कनवकस्य तौ ॥ वीरुश्चाश्वहनु



 

श्चैव वीरौ तावथ गृञ्जिमौ ॥ ३२ ॥ श्यामपुत्रः शमीकस्तु शमीको राज्यमावहत् ॥ जुगुप्समानो भोजत्वाद्राजसूयमवाप सः ॥ ३३ ॥ अजातशत्रुः शत्रूणां जज्ञे तस्य विनाशनः ॥ वसुदेवसुतान्वीरान्वर्णयिष्याम्यतः परम् ॥ ३४ ॥ वृष्णेस्त्रिविधमेवं तु बहुशाखं महौजसम् ॥ धारयन्विपुलं वंशं नानर्थैरिह पूज्यते ॥ ३५ ॥ याः पत्न्यो वसुदेवस्य चतुर्दश वरांगनाः ॥ पौरवी रोहिणी नाम मदिरादिस्तथा पराः ॥ ३६ ॥ वैशाखी च तथा भद्रा सुनाम्नी चैव पञ्चमी ॥ सहदेवा शान्तिदेवा श्रीदेवी देवरक्षिता ॥ ३७ ॥ वृकदेव्युपदेवी च देवकी चैव सप्तमी ॥ सुतनुर्वडवा चैव द्वे एते परिचारिके ॥ ३८ ॥ पौरवी रोहिणी नाम बाह्लिकस्याऽऽत्मजाऽभवत् ॥ ज्येष्ठा पत्नी मुनिश्रेष्ठा दयिताऽऽनकदुन्दुभेः ॥ ३९ ॥ लेभे ज्येष्ठं सुतं रामं शारणं शठमेव च ॥ दुर्दमं दमनं शुभ्रं पिण्डारकमुशीनरम् ॥ ४० ॥ चित्रा नाम कुमारी च रोहिणीतनया नव ॥ चित्रा सुभद्रेति पुनर्विख्याता मुनिसत्तमाः ॥४१॥ वसुदेवाच्च देवक्यां जज्ञे शौरिर्महायशाः॥ रामाच्च निशठो जज्ञे रेवत्यां दयितः सुतः ॥४२॥ सुभद्रायां रथी पार्थाद‌भिमन्युरजायत ॥ अक्रूरात्काशिकन्यायां सत्यकेतुरजायत ॥४३॥ वसुदेवस्य भार्यासु महाभागासु सप्तसु ॥ ये पुत्रा जज्ञिरे शूरा नामतस्तान्निबोधत ॥ ४४ ॥ भोजश्च विजयश्चैव शान्तिदेवासुतावुभौ ॥ वृकदेवः सुनामायां गदश्चाऽऽस्तां सुतावुभौ ॥४५॥ अगावहं महात्मानं वृकदेवी व्यजायत ॥ कन्या त्रिगर्तराजस्य भार्या वै शिशिरायणेः ॥ ४६ ॥ जिज्ञासां पौरुषे चक्रे न चस्कन्दे च पौरुषम् ॥ कृष्णायससमप्रख्यो वर्षे द्वादशमे तथा ॥ ४७ ॥ मिथ्याभिशस्तो गार्ग्यस्तु मन्युनाऽभिसमीरितः ॥ घोषकन्यामुपादाय मैथुनायोपचक्रमे ॥ ४८ ॥ गोपाली चाप्सरास्तस्य गोपस्त्रीवेषधारिणी ॥ धारयामास गार्ग्यस्य गर्भं दुर्धरमच्युतम् ॥ ४९ ॥ मानुष्यां गर्गभार्यायां नियोगाच्छूलपाणिनः ॥ स कालयवनो नाम जज्ञे शूरो महाबलः ॥ ५० ॥ वृत्तपूर्वार्धकायस्तु सिंहसंहननो युवा ॥ अपुत्रस्य स राज्ञस्तु ववृधेऽन्तःपुरे शिशुः ॥ ५१ ॥ यवनस्य मुनिश्रेष्ठाः स कालयवनोऽभवत् ॥ आयुध्यमानो नृपतिः पर्यपृच्छद्द्विजोत्तमम् ॥ ५२ ॥ वृष्ण्यन्धककुलं तस्य नारदोऽकथयद्विभुः ॥ अक्षौहिण्या तु सैन्यस्य मथुरामभ्ययात्तदा ॥ ५३ ॥ दूतं संप्रेषयामास वृष्ण्यन्धकनिवेशनम् ॥ ततो वृष्ण्यन्धकाः कृष्णं पुरस्कृत्य महामतिम् ॥ ५४ ॥ समेता मन्त्रयामासुर्यवनस्य तदा भयात् ॥ कृत्वा च निश्चयं सर्वे पलायनमरोचयन् ॥ ५५ ॥ विहाय मथुरां रम्यां मानयन्तः पिनाकिनम् ॥ कुशस्थलीं द्वारवतीं निवेशयितुमीप्सवः ॥ ५६ ॥ इति कृष्णस्य जन्मेदं यः शुचिर्नियतेन्द्रियः ॥ पर्वसु श्रावयेद्विद्वाननृणः स सुखी भवेत् ॥ ५७ ॥ इति श्रीब्रह्मपुराणे कृष्णजन्मानुकीर्तनं नाम द्वादशोऽध्यायः ॥ १२ ॥ ॥ लोमहर्षण उवाच ॥ क्रोष्टोरथाभवत्पुत्रो वृजिनीवान्महायशाः ॥ वार्जिनीवतमिच्छन्ति स्वाहिं स्वाहाकृतां वरम् ॥ १ ॥

स्वाहिपुत्रोऽभवद्राजा उषद्गुर्वदतां वरः ॥ महाक्रतुभिरीजे यो विविधैर्भूरिदक्षिणैः ॥ २ ॥ ततः प्रसूतिमिच्छन्वै उषद्गुः सोऽग्र्यमात्मजम् ॥ जज्ञे चित्र
रथस्तस्य पुत्रः कर्मभिरन्वितः ॥ ३ ॥ आसीच्चैत्ररथिर्वीरो यज्वा विपुलदक्षिणः ॥ शशबिन्दुः परं वृत्तं राजर्षीणामनुष्ठितः ॥४॥ पृथुश्रवाः पृथुयशा
राजाऽऽसीच्छाशविन्दवः ॥ शंसन्ति च पुराणज्ञाः पार्थश्रवसमन्तरम् ॥ ५ ॥ अन्तरस्य सुयज्ञस्तु सुयज्ञतनयोऽभवत् ॥ उषतो यज्ञमखिलं स्वधर्मे
च कृतादरः ॥ ६ ॥ शिनेयुरभवत्पुत्र उषतः शत्रुतापनः ॥ मरुतस्तस्य तनयो राजर्षिरभवन्नृपः ॥ ७ ॥ मरुतोऽलभत ज्येष्ठं सुतं कम्बलबर्हिषम् ॥
चचार विपुलं धर्मममर्षात्प्रत्यभागपि ॥ ८ ॥ स सत्प्रसूतिमिच्छन्वै पुत्रं कम्बलबर्हिषः ॥ बभूव रुक्मकवचः शतप्रसवतः सुतः ॥ ९ ॥
निहत्य रुक्मकवचः शतं कवचिनां रणे ॥ धन्विनां निशितैर्बाणैरवाप श्रियमुत्तमाम् ॥ १० ॥ जज्ञे च रुक्मकवचात्पराजित्परवीरहा ॥ जज्ञिरे
पञ्च पुत्राश्च महावीर्याः पराजितः ॥ ११ ॥ रुक्मेषुः पृथुरुक्मश्च ज्यामघः पालितो हरिः ॥ पालितं च हरिं चैव विदेहेभ्यः पिता ददौ ॥ १२ ॥
रुक्मेषुरभवद्राजा पृथुरुक्मस्य संश्रयात् ॥ ताभ्यां प्रव्राजितो राजा ज्यामघोऽवसदाश्रमे ॥ १३ ॥ प्रशान्तश्च तदा राजा ब्राह्मणैश्चावबोधितः ॥
जगाम धनुरादाय देशमन्यं ध्वजी रथी ॥ १४ ॥ नर्मदाकूलमेकाकी मेखलां मृत्तिकावतीम् ॥ ऋक्षवन्तं गिरिं जित्वा शुक्तिमत्यामुवास सः ॥१५॥
ज्यामघस्याभवद्भार्या शैब्या बलवती सती ॥ अपुत्रोऽपि च राजा स नान्यां भार्यामविन्दत ॥ १६ ॥ तस्याऽऽसीद्विजयो युद्धे तत्र कन्यामवाप सः ॥
भार्यामुवाच संत्रस्तः स्नुषेयं ते जनेश्वरः ॥१७॥ एतच्छ्रुत्वाऽब्रवीदेनं कस्य देव स्नुषेति वै ॥ अब्रवीत्तदुपश्रुत्य ज्यामघो राजसत्तमः ॥१८॥ राजोवाच ॥
यस्ते जनिष्यते पुत्रस्तस्य भार्योपपादिता ॥ १९ ॥ लोमहर्षण उवाच ॥ उग्रेण तपसा तस्याः कन्यायाः सा व्यजायत ॥ पुत्रं विदर्भं सुभगा शैब्या
परिणता सती ॥ २० ॥ राजपुत्र्यां तु विद्वांसौ स्नुषायां क्रथकैशिकौ ॥ पश्चाद्विदर्भोऽजनयच्छूरौ रणविशारदौ ॥ २१ ॥ भीमो विदर्भस्य सुतः
कुन्तिस्तस्याऽऽत्मजोऽभवत् ॥ कुन्तेर्धृष्टः सुतो जज्ञे रणधृष्टः प्रतापवान् ॥ २२ ॥ धृष्टस्य जज्ञिरे शूरास्त्रयः परमधार्मिकाः ॥ आवन्तश्च दशार्हश्च
बली विषहरश्च सः ॥ २३ ॥ दशार्हस्य सुतो व्योमा व्योम्नो जीमूत उच्यते ॥ जीमूतपुत्रो विकृतिस्तस्य भीमरथः सुतः ॥ २४ ॥ अथ भीमरथ
स्याऽऽसीत्पुत्रो नवरथस्तथा ॥ तस्य चाऽऽसीद्दशरथः शकुनिस्तस्य चाऽऽत्मजः ॥ २५ ॥ तस्मात्करम्भः कारम्भिर्देवरातोऽभवन्नृपः ॥ देवक्षत्रोऽ
भवत्तस्य दैवक्षत्रिर्महायशाः ॥ २६ ॥ देवगर्भसमो जज्ञे दैवक्षत्रस्य नन्दनः ॥ मधूनां वंशकृद्राजा मधुर्मधुरवागपि ॥ २७ ॥ मधोर्जज्ञेऽथ वैदर्भ्यां
पुरुद्वान्पुरुषोत्तमः ॥ ऐक्ष्वाकी चाभवद्भार्या मधोस्तस्यां व्यजायत ॥ २८ ॥ सत्वान्सर्वगुणोपेतः सात्वतां कीर्तिवर्धनः ॥ इमां विसृष्टिं विज्ञाय





ज्यामघस्य महात्मनः ॥ युज्यते परमप्रीत्या प्रजावांश्च भवेत्सदा ॥ २९ ॥ लोमहर्षण उवाच ॥ सात्वतात्सत्त्वसंपन्नात्कौशल्या सुषुवे सुतान् ॥
भाजिनं भजमानं च दिव्यं देवावृधं नृपम् ॥३०॥ अन्धकं च महाबाहुं वृष्णिं च यदुनन्दनम् ॥ तेषां विसर्गाश्चत्वारो विस्तरेणेह कीर्तिताः ॥ ३१ ॥
भजमानस्य सृञ्जय्यां बाह्यका चोपबाह्यका ॥ आस्तां भार्ये तयोस्तस्माज्जज्ञिरे बहवः सुताः ॥ ३२ ॥ क्रिमिश्च क्रमणश्चैव धृष्टः शूरः पुरंजयः ॥ एते
बाह्यकसृञ्जय्यां भजमानाद्विजज्ञिरे ॥ ३३ ॥ आयुताजित्सहस्राजिच्छताजित्त्वथ दासकः ॥ उपबाह्यकसृञ्जय्यां भजमानाद्विजज्ञिरे ॥ ३४ ॥ यज्वा
देवावृधो राजा चचार विपुलं तपः ॥ पुत्रः सर्वगुणोपेतो मम स्यादिति निश्चितः ॥ ३५ ॥ संयुज्यमानस्तपसा पर्णाशाया जलं स्पृशन् ॥ सदो
पस्पृशतस्तस्य चकार प्रियमापगा ॥ ३६ ॥ चिन्तयाऽभिपरीता सा न जगामैव निश्चयम् ॥ कल्याणत्वान्नरपतेस्तस्य सा निम्नगोत्तमा ॥ ३७ ॥
नाध्यगच्छत्तु तां नारीं यस्यामेवंविधः सुतः ॥ भवेत्तस्मात्स्वयं गत्वा भवाम्यस्य सहानुगा ॥३८॥ अथ भूत्वा कुमारी सा बिभ्राणा परमं वपुः ॥ वर
यामास नृपतिं तामियेष च स प्रभुः ॥३९॥ तस्यामाधत्त गर्भं स तेजस्विनमुदारधीः ॥ अथ सा दशमे मासि सुषुवे सरितां वरा ॥ ४० ॥ पुत्रं सर्वगु
णोपेतं बभ्रुं देवावृधं द्विजाः ॥ अत्र वंशे पुराणज्ञा गायन्तीति परिश्रुतम् ॥ ४१ ॥ गुणान्देवावृधस्यापि कीर्तयन्तो महात्मनः ॥ यथैवाग्रे तथा दूरात्प
श्यामस्तावदन्तिकात् ॥ ४२॥ बभ्रुः श्रेष्ठो मनुष्याणां देवैर्देवावृधः समः ॥ षष्टिश्च षट् च पुरुषाः सहस्राणि च सप्त च ॥ ४३ ॥ एतेऽमृतत्वं प्राप्ता वै
बभ्रोर्देवावृधादपि॥यज्वा दानपतिर्धीमान्ब्रह्मण्यः स दृढायुधः ॥ ४४ ॥ तस्यान्ववायः सुमहान्भोजा ये मार्तिकावताः॥ अन्धकात्काश्यदुहिता चतुरोऽ
लभताऽऽत्मजान् ॥४५॥ कुकुरं भजमानं च ससकं बलबार्हिषम् ॥ कुकुरस्य सुतो वृष्णिर्वृष्टेस्तु तनयस्तथा ॥४६ ॥ कपोतरोमा तस्याथ तित्तिरिस्तनयोऽ
भवत् ॥ जज्ञे पुनर्वसुस्तस्मादभिजिच्च पुनर्वसोः॥४७॥तथा वै पुत्रमिथुनं बभूवाभिजितः किल ॥ आहुकः आहुकश्चैव ख्यातौ ख्यातिमतां वरौ॥४८॥
इमां चोदाहरन्त्यत्र गाथां प्रति तमाहुकम् ॥ श्वेतेन परिवारेण किशोरप्रतिमो महान् ॥ ४९ ॥ अशीतिवर्मणा युक्त आहुकः प्रथमं व्रजेत् ॥ नापुत्र
वान्नाशतदो नासहस्रशतायुषः ॥ ५० ॥ नाशुद्धकर्मा नायज्वा यो भोजमभितो व्रजेत् ॥ पूर्वस्यां दिशि नागानां भोजस्य प्रययुः किल ॥ ५१ ॥
सोमात्सङ्गानुकर्षाणां ध्वजिनां सवरूथिनाम् ॥ रथानां मेघघोषाणां सहस्राणि दशैव तु ॥ ५२ ॥ रौप्यकाञ्चनकक्षाणां सहस्राण्येकविंशतिः ॥ ताव
येव सहस्राणि उत्तरस्यां तथा दिशि॥५३॥आभूमिपाला भोजास्तु सन्ति ज्याकिङ्किणीकिनः॥आहुः किं चाप्यवन्तिभ्यः स्वसारं ददुरन्धकाः॥५४॥
आहुकस्य तु काश्यायां द्वौ पुत्रौ संबभूवतुः ॥ देवकश्चोग्रसेनश्च देवगर्भसमावुभौ ॥ ५५ ॥ देवकस्याभवन्पुत्राश्चत्वारस्त्रिदशोपमाः ॥ देववानुपदेवश्च

संदेवो देवरक्षितः ॥ ५६ ॥ कुमार्यः सप्त चास्याथ वसुदेवाय ता ददौ ॥ देवकी शान्तिदेवा च सुदेवा देवरक्षिता ॥ ५७ ॥ वृकदेव्युपदेवी च सुनाम्नी चैव सप्तमी ॥ नवोग्रसेनस्य सुतास्तेषां कंसस्तु पूर्वजः ॥ ५८ ॥ न्यग्रोधश्च सुनामा च तथा कङ्कः सुभूषणः ॥ राष्ट्रपालोऽथ सुतनुरना वृष्टिस्तु पुष्टिमान् ॥ ५९ ॥ तेषां स्वसारः पञ्चाऽऽसन्कंसा कंसवती तथा ॥ सुतनू राष्ट्रपाली च कंका चैव वराङ्गना ॥ ६० ॥ उग्रसेनः सहा पत्यो व्याख्यातः कुकुरोद्भवः ॥ कुकुराणामिमं वंशं धारयन्नमितौजसाम् ॥ आत्मनो विपुलं वंशं प्रजावानाप्नुयान्नरः ॥६१॥ इतिश्रीब्रह्मपुराणे वृष्णि वंशनिरूपणं नाम त्रयोदशोऽध्यायः ॥ १३ ॥ लोमहर्षण उवाच ॥ भजमानस्य पुत्रो वै रथमुख्यो विदूरथः ॥ राजाधिदेवः शूरस्तु विदूरथसुतोऽभवत् ॥१॥ राजाधिदेवस्य सुता जज्ञिरे वीर्यवत्तराः ॥ दत्तातिदत्तौ बलिनौ शोणाश्वः श्वेतवाहनः॥२॥ शमी च दण्डशर्मा च दन्तशत्रुश्च शत्रुजित् ॥ श्रवणा च श्रविष्ठा च स्वसारौ संबभूवतुः ॥ ३ ॥ शमिपुत्रः प्रतिछत्रः प्रतिछत्रस्य चाऽऽत्मजः ॥ स्वयंभोजः स्वयंभोजाद्धृदीकः संबभूव ह ॥ ॥ ४ ॥ तस्य पुत्रा बभूवुर्हि सर्वे भीमपराक्रमाः ॥ कृतवर्माऽग्रजस्तेषां शतधन्वा तु मध्यमः ॥ ५ ॥ देवान्तश्च नरान्तश्च भिषग्वैतरणश्च यः ॥ सुदान्तश्चातिदान्तश्च निकाश्यः कामदम्भकः ॥६॥ देवान्तस्याभवत्पुत्रो विद्वान्कम्बलबर्हिषः ॥ असमौजाः सुतस्तस्य नासमौजाश्च तावुभौ ॥७॥ अजातपुत्राय सुतान्प्रददावसमौजसे ॥ सुदंष्ट्रश्च सुचारुश्च कृष्ण इत्यन्धकाः स्मृताः ॥ ८ ॥ गान्धारी चैव माद्री च क्रोष्टुभार्ये बभूवतुः ॥ गान्धारी जनयामास ह्यनमित्रं महाबलम् ॥ ९ ॥ माद्री युधाजितं पुत्रं ततो वै देवमीढुषम् ॥ अनमित्रममित्राणां जेतारमपराजितम् ॥ १० ॥ अनमित्रसुतो निघ्नो निघ्नतो द्वौ बभूवतुः ॥ प्रसेनश्चाथ सत्राजिच्छत्रुसेनाजितावुभौ ॥ ११ ॥ प्रसेनो द्वारवत्यां तु निवसन्त्स महामणिम् ॥ दिव्यं स्यमन्तकं नाम स सूर्यादुपलब्धवान् ॥ १२ ॥ तस्य सत्राजितः सूर्यः सखा प्राणसमोऽभवत् ॥ स कदाचिन्निशापाये रथेन रथिनां वरः ॥ ॥ १३ ॥ तोयकूलमपः स्प्रष्टुमुपस्थातुं ययौ रविम् ॥ तस्योपतिष्ठतः सूर्यो विवस्वानग्रतः स्थितः ॥ १४ ॥ विस्पष्टमूर्तिर्भगवांस्तेजोमण्डलवा न्विभुः ॥ अथ राजा विवस्वन्तमुवाच स्थितमग्रतः ॥ १५ ॥ यथैव व्योम्नि पश्यामि सदा त्वां ज्योतिषां पते ॥ तेजोमण्डलिनं देवं तथैव पुरतः स्थितम् ॥ १६ ॥ को विशेषोऽस्ति मे त्वत्तः सहायत्वं गतस्य वै ॥ एतच्छ्रुत्वा तु भगवान्मणिरत्नं स्यमन्तकम् ॥ १७ ॥ स्वकण्ठा दवमुच्याथ एकान्ते न्यस्तवान्विभुः ॥ ततो विग्रहवन्तं तं ददर्श नृपतिस्तदा ॥ १८ ॥ प्रीतिमानथ तं दृष्ट्वा मुहूर्तं कृतवान्कथाम् ॥ तमभि प्रस्थितं भूयो विवस्वन्तं स सत्राजित् ॥ १९ ॥ लोकानुद्भासयन्स्वामिन्येन त्वं सततं विभो ॥ तदेतन्मणिरत्नं मे भगवन्दातुमर्हसि ॥ २० ॥





ततः स्यमन्तकमणिं दत्तवान्भास्करस्तदा ॥ स तमाबध्य नगरीं प्रविवेश महीपतिः ॥ २१ ॥ तं जनाः पर्यधावन्त सूर्योऽयं गच्छतीति ह ॥ स्वां पुरीं स विसिष्माय राजा त्वन्तःपुरं तथा ॥ २२ ॥ तं प्रसेनजितं दिव्यं मणिरत्नं स्यमन्तकम् ॥ ददौ भ्रात्रे नरपतिः प्रेम्णा सत्राजिदुत्तमम् ॥ २३ ॥ स मणिः स्यन्दते रुक्मं वृष्ण्यन्धकनिवेशने ॥ कालवर्षी च पर्जन्यो न च व्याधिभयं ह्यभूत् ॥ २४ ॥ लिप्सां चक्रे प्रसेनस्य मणिरत्ने स्यमन्तके ॥ गोविन्दो न च तं लेभे शक्तोऽपि न जहार सः ॥ २५ ॥ कदाचिन्मृगयां यातः प्रसेनस्तेन भूषितः ॥ स्यमन्तककृते सिंहाद्वधं प्राप वनेचरात् ॥ २६ ॥ अथ सिंहं प्रधावन्तमृक्षराजो महाबलः ॥ निहत्य मणिरत्नं तदादाय प्राविशद्बिलम् ॥ २७ ॥ ततो वृष्ण्यन्धकाः कृष्णं प्रसेनवधकारणात् ॥ प्रार्थनां तां मणेर्बुद्ध्वा सर्व एव शशङ्किरे ॥ २८ ॥ स शङ्क्यमानो धर्मात्मा ह्यकारी तस्य कर्मणः ॥ आहरिष्ये मणिमिति प्रतिज्ञाय वनं ययौ ॥ २९ ॥ यत्र प्रसेनो मृगयां व्यचरत्तत्र चाप्यथ ॥ प्रसेनस्य पदं गृह्य पुरुषैराप्तकारिभिः ॥ ३० ॥ ऋक्षवन्तं गिरिवरं विन्ध्यं वा गिरिसत्तमम् ॥ अन्वेषयन्परिश्रान्तः स ददर्श महामनाः ॥ ३१ ॥ साश्वं हतं प्रसेनं तु नाविन्दत च तन्मणिम् ॥ अथ सिंहः प्रसेनस्य शरीरस्याविदूरतः ॥ ३२ ॥ ऋक्षेण निहतो दृष्टः पदैर्ऋक्षस्तु सूचितः ॥ पदैस्तैरन्वियायाथ गुहामृक्षस्य माधवः ॥ ३३ ॥ स हि ऋक्षबिले वाणीं शुश्राव प्रमदेरिताम् ॥ धात्र्या कुमारमादाय सुतं जाम्बवतो द्विजाः ॥ ३४ ॥ क्रीडयन्त्या च मणिना मा रोदीरित्यथेरिताम् ॥ ३५ ॥ ॥ धात्र्युवाच ॥ सिंहः प्रसेनमवधीत्सिंहो जाम्बवता हतः ॥ सुकुमारक मा रोदीस्तव ह्येष स्यमन्तकः ॥ ३६ ॥ व्यक्तितस्तस्य शब्दस्य तूर्णमेव बिलं ययौ ॥ प्रविश्य तत्र भगवांस्तदृक्षबिलमञ्जसा ॥ ३७ ॥ स्थापयित्वा बिलद्वारे यदूँल्लाँङ्गलिना सह ॥ शार्ङ्गधन्वा बिलस्थं तु जाम्बवन्तं ददर्श सः ॥ ३८ ॥ युयुधे वासुदेवस्तु बिले जाम्बवता सह ॥ बाहुभ्यामेव गोविन्दो दिवसानेकविंशतिम् ॥३९॥ प्रविष्टेऽथ बिले कृष्णे बलदेवपुरःसराः ॥ पुरीं द्वारवतीमेत्य हतं कृष्णं तदा जगुः ॥४०॥ वासुदेवोऽपि निर्जित्य जाम्बवन्तं महाबलम् ॥ लेभे जाम्बवतीं कन्यामृक्षराजस्य संमताम् ॥ ४१ ॥ मणिं स्यमन्तकं चैव जग्राहाऽऽत्मविशुद्धये ॥ अनुनीयर्क्षराजं तु निर्ययौ च ततो बिलात् ॥ ४२ ॥ उपायाद्द्वारकां कृष्णः स विनीतैः पुरःसरैः ॥ एवं स मणिमाहृत्य विशोध्याऽऽत्मानमच्युतः ॥ ४३ ॥ ददौ सत्राजिते चैव सर्वसात्वतसंसदि ॥ एवं मिथ्याभिशस्तेन कृष्णेनामित्रघातिना ॥ ॥ ४४ ॥ आत्मा विशोधितः पापाद्विनिर्जित्य स्यमन्तकम् ॥ सत्राजितो दश त्वासन्भार्यास्तासां शतं सुताः ॥ ४५ ॥ ख्यातिमन्तस्त्रयस्तेषां भगंकारस्तु पूर्वजः ॥ वीरो वातमतिश्चैव वसुमेधस्तथैव च ॥ ४६ ॥ कुमार्यश्चापि तिस्रो वै दिक्षु ख्याता द्विजोत्तमाः ॥ सत्यभामोत्तमा तासां

व्रतिनी च दृढव्रता ॥ ४७ ॥ तथा प्रस्वापिनी चैव भार्यां कृष्णाय तां ददौ ॥ सभाक्षो भङ्गकारिस्तु नावेयश्च नरोत्तमो ॥ ४८ ॥ जज्ञाते गुणसं
पन्नौ विश्रुतौ रूपसंवृतौ ॥ माद्र्याः पुत्रस्तु जज्ञेऽथ वृष्णिपुत्रो युधाजितः ॥ ४९ ॥ जज्ञाते तनयौ वृष्णेः श्वफल्कश्चित्रकस्तथा ॥ श्वफल्कः
काशिराजस्य सुतां भार्यामविन्दत ॥ ५० ॥ गान्दिनीं नाम तस्यास्तु गाश्चास्य प्रददौ पिता ॥ तस्यां जज्ञे महाबाहुः श्रुतवानितिविश्रुतः ॥ ५१ ॥
अक्रूरोऽथ महाभागो जज्ञे विपुलदक्षिणः ॥ उपमद्गुस्तथा मद्गुर्मुदरश्चारिमर्दनः ॥ ५२ ॥ आरिक्षेपस्तथोपेक्षः शत्रुहा चारिमेजयः ॥ धर्मभृच्चापि
धर्मा च गृध्रभोजान्धकस्तथा ॥ ५३ ॥ आवाहप्रतिवाहौ च सुन्दरी च वराङ्गना ॥ विश्रुताश्वस्य महिषी कन्या चास्य वसुंधरा ॥ ५४ ॥ रूप
यौवनसंपन्ना सर्वसत्वमनोहरा ॥ अक्रूरेणोग्रसेनायां सुतौ वै कुलनन्दनौ ॥ ५५ ॥ वसुदेवश्चोपदेवो जज्ञाते देववर्चसौ ॥ चित्रकस्याभवन्पुत्राः
पृथुर्विपृथुरेव च ॥ ५६ ॥ अश्वग्रीवोऽश्वबाहुश्च सुपार्श्वकगवेषणौ ॥ अरिष्टनेमिश्च सुता धर्मो धर्मभृदेव च ॥ ५७ ॥ सुबाहुर्बहुबाहुश्च
श्रविष्ठाश्रवणे स्त्रियौ ॥ इमां मिथ्याभिशस्तिं यः कृष्णस्य समुदाहृताम् ॥ ५८ ॥ वेद मिथ्याभिशापास्तं न स्पृशन्ति कदाचन ॥ ५९ ॥
इति श्रीब्रह्मपुराणे स्यमन्तकमत्याननयननिरूपणं नाम चतुर्दशोऽध्यायः ॥ १४ ॥ ॥ लोमहर्षण उवाच ॥ यत्तु सत्राजिते कृष्णो मणिरत्नं स्यम
न्तकम् ॥ ददावहारयद्बभ्रुर्भोजेन शतधन्वना ॥ १ ॥ सदा हि प्रार्थयामास सत्यभामामनिन्दिताम् ॥ अक्रूरोऽन्तरमन्विष्यन्मणिं चैव स्यमन्तक
म् ॥ २ ॥ सत्राजितं ततो हत्वा शतधन्वा महाबलः ॥ रात्रौ तं मणिमादाय ततोऽक्रूराय दत्तवान् ॥ ३ ॥ अक्रूरस्तु तदा विप्रा रत्नमादाय चोत्त
मम् ॥ समयं कारयांचक्रे नाऽऽवेद्योऽहं त्वयेत्युत ॥ ४ ॥ वयमभ्युपवत्स्यामः कृष्णेन त्वां प्रधर्षितम् ॥ ममाद्य द्वारका सर्वा वशे तिष्ठत्यसंशयम् ॥
॥ ५ ॥ हते पितरि दुःखार्ता सत्यभामा मनस्विनी ॥ प्रययौ रथमारुह्य नगरं वारणावतम् ॥ ६ ॥ सत्यभामा तु तद्वृत्तं भोजस्य शतधन्वनः ॥
भर्तुर्निवेद्य दुःखार्ता पार्श्वस्थाऽश्रूण्यवर्तयत् ॥ ७ ॥ पाण्डवानां च दग्धानां हरिः कृत्वोदकक्रियाम् ॥ कुल्यार्थे चापि पाण्डूनां न्ययोजयत
सात्यकिम् ॥ ८ ॥ ततस्त्वरितमागम्य द्वारकां मधुसूदनः ॥ पूर्वजं हलिनं श्रीमानिदं वचनमब्रवीत् ॥ ९ ॥ ॥ श्रीकृष्ण उवाच ॥ हतः प्रसेनः
सिंहेन सत्राजिच्छतधन्वना ॥ स्यमन्तकस्तु मद्गामी तस्य प्रभुरहं विभो ॥ १० ॥ तदारोह रथं शीघ्रं भोजं हत्वा महारथम् ॥ स्यमन्तको महाबा
हो अस्माकं स भविष्यति ॥ ११ ॥ ॥ लोमहर्षण उवाच ॥ ततः प्रववृते युद्धं तुमुलं भोजकृष्णयोः ॥ शतधन्वा ततोऽक्रूरं सर्वतोदिशमैक्षत ॥
॥ १२ ॥ संरब्धौ तावुभौ तत्र दृष्ट्वा भोजजनार्दनौ ॥ शक्तोऽपि शापाद्धार्दिक्यमक्रूरो नान्वपद्यत ॥ १३ ॥ अपयाने ततो बुद्धिं भोजश्चक्रे भया



र्दितः ॥ योजनानां शतं साग्रं हृदया प्रत्यपद्यत ॥ १४ ॥ विख्याता हृदया नाम शतयोजनगामिनी ॥ भोजस्य वडवा विप्रा यथा कृष्णमयोधयत् ॥ १५ ॥ क्षीणां जवेन हृदयामध्वनः शतयोजने ॥ दृष्ट्वा रथस्य स्वां वृद्धिं शतधन्वानमर्दयत् ॥ १६ ॥ ततस्तस्या हतायास्तु श्रमात्खेदाच्च भो द्विजाः ॥ खमुत्पेतुरथ प्राणाः कृष्णो राममथाब्रवीत ॥ १७ ॥ ॥ श्रीकृष्ण उवाच ॥ तिष्ठेह त्वं महाबाहो दृष्टदोषा हया मया ॥ पद्भ्यां गत्वा हरिष्यामि मणिरत्नं स्यमन्तकम् ॥ १८ ॥ पद्भ्यामेव ततो गत्वा शतधन्वानमच्युतः ॥ मिथिलामभितो विप्रा जघान परमास्त्रवित् ॥ १९ ॥ स्यमन्तकं च नापश्यद्धत्वा भोजं महाबलम् ॥ निवृत्तं चाब्रवीत्कृष्णं मणिं देहीति लाङ्गली ॥ २० ॥ नास्तीति कृष्णश्चोवाच ततो रामो रुषाऽन्वितः ॥ धिक्शब्दपूर्वमसकृत्प्रत्युवाच जनार्दनम् ॥ २१ ॥ ॥ बलराम उवाच ॥ भ्रातृत्वान्मर्षयाम्येष स्वस्ति तेऽस्तु व्रजाम्यहम् ॥ कृत्यं न मे द्वारकया न त्वया न च वृष्णिभिः ॥ २२ ॥ प्रविवेश ततो रामो मिथिलामरिमर्दनः ॥ सर्वकामैरुपहृतैर्मैथिलेनाभिपूजितः ॥ ॥ २३ ॥ एतस्मिन्नेव काले तु बभ्रुर्मतिमतां वरः ॥ नानारूपान्क्रतून्सर्वानाजहार निरर्गलान् ॥ २४ ॥ दीक्षामयं स कवचं रक्षार्थं प्रविवेश ह ॥ स्यमन्तककृते प्राज्ञो गान्दीपुत्रो महायशाः ॥ २५ ॥ अथ रत्नानि चान्यानि धनानि विविधानि च ॥ षष्टिं वर्षाणि धर्मात्मा यज्ञेष्वेव न्ययोजयत् ॥ २६ ॥ अक्रूरयज्ञा इति ते ख्यातास्तस्य महात्मनः ॥ बह्वन्नदक्षिणाः सर्वे सर्वकामप्रदायिनः ॥ २७ ॥ अथ दुर्योधनो राजा गत्वा स मिथिलां प्रभुः ॥ गदाशिक्षां ततो दिव्यां बलदेवादवाप्तवान् ॥ २८ ॥ संप्रसाद्य ततो रामो वृष्ण्यन्धकमहारथैः ॥ आनीतो द्वारकामेव कृष्णेन च महात्मना ॥ २९ ॥ अक्रूरश्चान्धकैः सार्धमायातः पुरुषर्षभः ॥ हत्वा सत्राजितं सुप्तं सहबन्धुं महाबलः ॥ ३० ॥ ज्ञातिभेदभयात्कृष्णस्तमुपेक्षितवांस्तदा ॥ अपयाते तदाऽक्रूरे नावर्षत्पाकशासनः॥३१॥अनावृष्ट्या तदा राष्ट्रमभवद्बहुधा कृशम् ॥ ततः प्रसादयामासुरक्रूरं कुकुरान्धकाः ॥ ३२ ॥ पुनर्द्वारवतीं प्राप्ते तस्मिन्दानपतौ ततः ॥ प्रववर्ष सहस्राक्षः कक्षे जलनिधेस्तदा ॥ ३३ ॥ कन्यां च वासुदेवाय स्वसारं शीलसंमताम् ॥ अक्रूरः प्रददौ धीमान्प्रीत्यर्थं मुनिसत्तमाः ॥ ३४ ॥ अथ विज्ञाय योगेन कृष्णो बभ्रुगतं मणिम् ॥ सभामध्यगतः प्राह तमक्रूरं जनार्दनः ॥ ३५ ॥ ॥ श्रीकृष्ण उवाच ॥ यत्तद्रत्नं मणिवरं तव हस्तगतं विभो ॥ तत्प्रयच्छ च मानार्हं मयि माऽनार्यकं कृथाः ॥ ३६ ॥ षष्टिवर्षगते काले यो रोषोऽभून्ममानघ ॥ स संरूढोऽसकृत्प्राप्तस्ततः कालात्ययो महान् ॥ ३७ ॥ स ततः कृष्णवचनात्सर्वसात्त्वतसंसदि ॥ प्रददौ तं मणिं बभ्रुरक्लेशेन महामतिः ॥ ३८ ॥ ततस्तमार्जवात्प्राप्तं बभ्रोर्हस्तादरिंदमः ॥ ददौ हृष्टमनाः कृष्णस्तं मणिं बभ्रवे पुनः ॥ ३९ ॥

स कृष्णहस्तात्संप्रातं मणिरत्नं स्यमन्तकम् ॥ आबध्य गान्दिनीपुत्रो विरराजांशुमानिव ॥ ४० ॥ इति श्रीब्रह्मपुराणे सोमवंशकथनं नाम पञ्चदशोऽध्यायः ॥ १५ ॥ मुनय ऊचुः ॥ अहो सुमहदाख्यानं भवता परिकीर्तितम् ॥ भारतानां च सर्वेषां पार्थिवानां तथैव च ॥ १ ॥ देवानां दानवानां च गन्धर्वोरगरक्षसाम् ॥ दैत्यानामथ सिद्धानां गुह्यकानां तथैव च ॥ २ ॥ अत्यद्भुतानि कर्माणि विक्रमा धर्मनिश्चयाः ॥ विविधाश्च कथा दिव्या जन्म चाग्र्यमनुत्तमम् ॥ ३ ॥ सृष्टिः प्रजापतेः सम्यक्त्वया प्रोक्ता महामते ॥ प्रजापतीनां सर्वेषां गुह्यकाप्सरसां तथा ॥ ४ ॥ स्थावरं जङ्गमं सर्वमुत्पन्नं विविधं जगत् ॥ त्वया प्रोक्तं महाभाग श्रुतं चैतन्मनोहरम् ॥ ५॥ कथितं पुण्यफलदं पुराणं श्लक्ष्णया गिरा ॥ मनःकर्णसुखं सम्यक्प्रीणात्यमृतसंमितम् ॥ ६ ॥ इदानीं श्रोतुमिच्छामः सकल मण्डल भुवः ॥ वक्तुमर्हसि सर्वज्ञ परं कौतूहलं महत् ॥ ७ ॥ यावन्तः सागरा द्वीपास्तथा वर्षाणि पर्वताः ॥ वनानि सरितः पुण्यदेवादीनां महामते ॥ ८ ॥ यत्प्रमाणमिदं सर्वं यदाधारं यदात्मकम् ॥ संस्थानमस्य जगतो यथावद्वक्तुमर्हसि ॥ ९ ॥ लोमहर्षण उवाच ॥ मुनयः श्रूयतामेतत्संक्षेपाद्वदतो मम ॥ नास्य वर्षशतेनापि वक्तुं शक्योऽतिविस्तरः ॥ १० ॥ जम्बूप्लक्षाह्वयौ द्वीपौ शाल्मलश्चापरो द्विजाः ॥ कुशः क्रौञ्चस्तथा शाकः पुष्करश्चैव सप्तमः ॥ ११ ॥ एते द्वीपाः समुद्रैस्तु सप्त सप्तभिरावृताः ॥ लवणेक्षुसुरासर्पिर्दधिदुग्धजलैः समम् ॥ १२ ॥ जम्बूद्वीपः समस्तानामेतेषां मध्यसंस्थितः ॥ तस्यापि मध्ये विप्रेन्द्रा मेरुः कनकपर्वतः ॥ १३ ॥ चतुरशीतिसाहस्रैर्योजनैस्तस्य चोच्छ्रयः ॥ प्रविष्टः षोडशाधस्ताद्द्वात्रिंशन्मूर्ध्नि विस्तृतः ॥ १४ ॥ मूले षोडशसाहस्रैर्विस्तारस्तस्य सर्वतः ॥ भूपद्मस्यास्य शैलोऽसौ कर्णिकाकारसंस्थितः ॥ १५ ॥ हिमवान्हेमकूटश्च निषधस्तस्य दक्षिणे ॥ नीलः श्वेतश्च शृङ्गी च उत्तरे वर्षपर्वताः ॥ १६ ॥ लक्षप्रमाणौ द्वौ मध्ये दश हीनास्तथाऽपरे ॥ सहस्राद्वितयोच्छ्रायास्तावद्विस्तारिणश्च ते ॥ १७ ॥ भारतं प्रथमं वर्षं ततः किंपुरुषं स्मृतम् ॥ हरिवर्षं तथैवान्यन्मेरोर्दक्षिणतो द्विजाः ॥ १८ ॥ रम्यकं चोत्तरं वर्षं तस्यैवानु हिरण्मयम् ॥ उत्तराः कुरवश्चैव यथा वै भारतं तथा ॥ १९ ॥ नवसाहस्रमेकैकमेतेषां द्विजसत्तमाः ॥ इलावृतं च तन्मध्ये सौवर्णो मेरुरुच्छ्रितः ॥ २० ॥ मेरोश्चतुर्दिशं तत्र नवसाहस्रविस्तृतम् ॥ इलावृतं महाभागाश्चत्वारश्चात्र पर्वताः ॥ २१ ॥ विष्कम्भा वितता मेरोर्योजनायुतविस्तृताः ॥ पूर्वेण मन्दरो नाम दक्षिणे गन्धमादनः ॥ २२ ॥ विपुलः पश्चिमे पार्श्वे सुपार्श्वश्चोत्तरे स्थितः ॥ कदम्बस्तेषु जम्बूश्च पिप्पलो वट एव च ॥ २३ ॥ एकादशशतायामाः पादपा गिरिकेतवः ॥ जम्बूद्वीपस्य सा जम्बूर्नामहेतुर्द्विजोत्तमाः ॥ २४ ॥ महागजप्रमाणानि जम्ब्वास्तस्याः फलानि वै ॥ पतन्ति भूभृतः पृष्ठे शीर्यमाणानि सर्वतः ॥ २५ ॥ रसेन तेन विख्याता तत्र जम्बूनदी

ति वै ॥ सरित्प्रवर्तते सा च पीयते तन्निवासिभिः ॥ २६ ॥ न स्वेदो न च दौर्गन्ध्यं न जरा नेन्द्रियक्षयः ॥ तत्पानस्वस्थमनसां जनानां तत्र जायते ॥ २७ ॥ तीरमृत्तद्रसं प्राप्य सुखवायुविशोषिता ॥ जाम्बूनदाख्यं भवति सुवर्णं सिद्धभूषणम् ॥ २८ ॥ भद्राश्वं पूर्वतो मेरोः केतुमालं च पश्चिमे॥वर्षे द्वे तु मुनिश्रेष्ठास्तयोर्मध्ये त्विलावृतम्॥२९॥वनं चैत्ररथं पूर्वे दक्षिणे गन्धमादनम्॥वैभ्राजं पश्चिमे तद्वदुत्तरे नन्दनं स्मृतम् ॥३०॥ अरुणोदं महाभद्रमसितोदं समानसम्॥सरांस्येतानि चत्वारि देवभोग्यानि सर्वदा॥३१॥शान्तवांश्चक्रकुम्भश्च कुररी माल्यवांस्तथा ॥ वैकङ्कप्रमुखा मेरोः पूर्वतः केसराचलाः॥३२॥त्रिकूटः शिशिरश्चैव पतङ्गो रुचकस्तथा॥निषधादयो दक्षिणतस्तस्य केसरपर्वताः ॥३३॥ शिखिवासः सवैदूर्यः कापिलो गन्धमादनः॥जारुधिप्रमुखास्तद्वत्पश्चिमे केसराचलाः ॥ ३४ ॥ मेरोरनन्तरास्ते च जठरादिष्ववस्थिताः ॥ शङ्खकूटोऽथ ऋषभो हंसो नागस्तथाऽपरे: ॥ ३५ ॥ कालञ्जराद्याश्च तथा उत्तरे केसराचलाः ॥ चतुर्दश सहस्राणि योजनानां महापुरी ॥ ३६ ॥ मेरोरुपरि विप्रेन्द्रा ब्रह्मणः कथिता दिवि ॥ तस्यां समन्ततश्चाष्टौ दिशासु विदिशासु च ॥३७॥ इन्द्रादिलोकपालानां प्रख्याताः प्रवराः पुरः ॥ विष्णुपादविनिष्क्रान्ता प्लावयन्तीन्दुमण्डलम्॥ ॥ ३८ ॥ समन्ताद्ब्रह्मणः पुर्यां गङ्गा पतति वै दिवः ॥ सा तत्र पतिता दिक्षु चतुर्धा प्रत्यपद्यत ॥ ३९ ॥ सीता चालकनन्दा च चक्षुर्भद्रा च वै क्रमात् ॥ पूर्वेण सीता शैलाच्च शैलं यान्त्यन्तरिक्षगा ॥ ४० ॥ ततश्च पूर्ववर्षेण भद्राश्वेनैति साऽर्णवम् ॥ तथैवालकनन्दा च दक्षिणेनैत्य भारतम् ॥ ४१ ॥ प्रयाति सागरं भूत्वा सप्तभेदा द्विजोत्तमाः ॥ चक्षुश्च पश्चिमगिरीनतीत्य सकलांस्ततः ॥ ४२ ॥ पश्चिमं केतुमालाख्यं वर्षमन्वेति साऽर्णवम् ॥ भद्रा तथोत्तरागिरीनुत्तरांश्च तथा कुरून् ॥ ४३ ॥ अतीत्योत्तरमम्भोधिं समभ्येति द्विजोत्तमाः ॥ आनीलनिषधायामौ माल्यवद्गन्धमादनौ ॥ ४४ ॥ तयोर्मध्यगतो मेरुः कर्णिकाकारसंस्थितः ॥ भारताः केतुमालाश्च भद्राश्वाः कुरवस्तथा ॥ ४५ ॥ पत्राणि लोकशैलस्य मर्यादाशैलबाह्यतः ॥ जठरो देवकूटश्च मर्यादापर्वतावुभौ ॥ ४६ ॥ तौ दक्षिणोत्तरायामावानीलनिषधायतौ ॥ गन्धमादनकैलासौ पूर्वपश्चात्तु तावुभौ ॥ ४७ ॥ अशीतियोजनायामावर्णवान्तर्व्यवस्थितौ ॥ निषधः पारियात्रश्च मर्यादापर्वतावुभौ ॥ ४८ ॥ तौ दक्षिणोत्तरायामावानीलनिषधायतौ ॥ मेरोः पश्चिमदिग्भागे यथा पूर्वौ तथा स्थितौ ॥ ४९ ॥ त्रिशृंगो जारुधिश्चैव उत्तरौ वर्षपर्वतौ ॥ पूर्वपश्चायतावेतावर्णवान्तर्व्यवस्थितौ ॥ ५० ॥ इत्येते हि मया प्रोक्ता मर्यादापर्वता द्विजाः ॥ जठरावस्थिता मेरोर्येषां द्वौ द्वौ चतुर्दिशम् ॥ ५१ ॥ मेरोश्चतुर्दिशं ये तु प्रोक्ताः केसरपर्वताः ॥ शीतान्ताद्या द्विजास्तेषामतीव हि मनोहराः ॥ ५२ ॥ शैलानामन्तरद्रोण्यः सिद्धचारणसेविताः ॥ सुरम्याणि तथा तासु काननानि पुराणि

च ॥ ५३ ॥ लक्ष्मीविष्ण्वग्निसूर्येन्द्रदेवानां मुनिसत्तमाः ॥ तास्त्वायतनवर्याणि जुष्टानि नरकिंनरैः ॥ ५४ ॥ गन्धर्वयक्षरक्षांसि तथा दैतेयदानवाः ॥
क्रीडन्ति तासु रम्यासु शैलद्रोणीष्वहर्निशम् ॥ ५५ ॥ भौमा ह्येते स्मृताः स्वर्गा धर्मिणामालया द्विजाः ॥ नैतेषु पापकर्तारो यान्ति जन्मशतै
रपि ॥ ५६ ॥ भद्राश्वे भगवान्विष्णुरास्ते हयशिरा द्विजाः ॥ वाराहः केतुमाले तु भारते कूर्मरूपधृक् ॥ ५७ ॥ मत्स्यरूपश्च गोविन्दः कुरु
ष्वास्ते सनातनः ॥ विश्वरूपेण सर्वत्र सर्वः सर्वेश्वरो हरिः ॥ ५८ ॥ सर्वस्याऽऽधारभूतोऽसौ द्विजा आस्तेऽखिलात्मकः ॥ यानि किंपुरुषाद्यानि
वर्षाण्यष्टौ द्विजोत्तमाः ॥ ५९ ॥ न तेषु शोको नाऽऽयासो नोद्वेगः क्षुद्भयादिकम् ॥ स्वस्थाः प्रजा निरातङ्काः सर्वदुःखविवर्जिताः ॥ ६० ॥ दश
द्वादशवर्षाणां सहस्राणि स्थिरायुषः ॥ नैतेषु भौमान्यन्यानि क्षुत्पिपासादि नो द्विजाः ॥ ६१ ॥ कृतत्रेतादिका नैव तेषु स्थानेषु कल्पना ॥ सर्वे
ष्वेतेषु वर्षेषु सप्त सप्त कुलाचलाः ॥ नद्यश्च शतशस्तेभ्यः प्रसृता या द्विजोत्तमाः ॥ ६२ ॥ इति श्रीब्रह्मपुराणे भुवनकोशद्वीपवर्णनं नाम षोडशोऽ
ध्यायः ॥१६॥ लोमहर्षण उवाच ॥ उत्तरेण समुद्रस्य हिमाद्रेश्चैव दक्षिणे ॥ वर्षं तद्भारतं नाम भारती यत्र संततिः ॥ १ ॥ नवयोजनसाहस्रो विस्ता
रश्च मुनीश्वराः ॥ कर्मभूमिरियं स्वर्गमपवर्गं च इच्छताम् ॥ २ ॥ महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः ॥ विन्ध्यश्च पारियात्रश्च सप्तात्र कुल
पर्वताः ॥ ३ ॥ अतः संप्राप्यते स्वर्गो मुक्तिमस्मात्प्रयाति वै ॥ तिर्यक्त्वं नरकं चापि यान्त्यतः पुरुषा द्विजाः ॥ ४ ॥ इतः स्वर्गश्च मोक्षश्च मध्यं
चान्ते च गच्छति ॥ न खल्वन्यत्र मर्त्यानां कर्म भूमौ विधीयते ॥ ५ ॥ भारतस्यास्य वर्षस्य नव भेदान्निशामय ॥ इन्द्रद्वीपः कसेरुमांस्ता
म्रपर्णो गभस्तिमान् ॥ ६ ॥ नागद्वीपस्तथा सौम्यो गन्धर्वस्त्वथ वारुणः ॥ अयं तु नवमस्तेषां द्वीपः सागरसंवृतः ॥ ७ ॥ योजनानां सहस्रं च
द्वीपोऽयं दक्षिणोत्तरात् ॥ पूर्वे किरातास्तिष्ठन्ति पश्चिमे यवनाः स्थिताः ॥८॥ ब्राह्मणाः क्षत्रिया वैश्या मध्ये शूद्राश्च भागशः ॥ इज्यायुद्धवणिज्याद्यै
र्वृत्तिमन्तो व्यवस्थिताः ॥९॥ शतद्रुचन्द्रभागाद्या हिमवत्पादनिःसृताः॥वेदस्मृतिमुखाश्चान्याः पारियात्रोद्भवा मुने ॥ १० ॥ नर्मदासुरसाद्याश्च नद्यो
विन्ध्यविनिःसृताः ॥ तापीपयोष्णीनिर्विन्ध्याकावेरीप्रमुखा नदीः ॥११॥ ऋक्षपादोद्भवा ह्येताः श्रुताः पापं हरन्ति याः ॥ गोदावरीभीमरथीकृष्णवे
ण्यादिकास्तथा॥१२॥सह्यपादोद्भवा नद्यः स्मृताः पापभयापहाः॥कृतमालाताम्रपर्णीप्रमुखा मलयोद्भवाः॥१३॥त्रिसांध्यऋषिकुल्याद्या महेन्द्रप्रभवाः
स्मृताः ॥ ऋषिकुल्याकुमाराद्याः शुक्तिमत्पादसंभवाः॥१४॥आसां नद्युपनद्यश्च सन्त्यन्यास्तु सहस्रशः ॥ तास्विमे कुरुपञ्चालमध्यदेशादयो जनाः
॥१५॥पूर्वदेशादिकाश्चैव कामरूपनिवासिनः ॥ पौण्ड्राः कलिङ्गा मगधा दाक्षिणात्याश्च सर्वशः ॥ १६ ॥ तथा परान्त्याः सौराष्ट्राः शूद्राभीरास्त





थाऽर्बुदाः॥मारुका मालवाश्चैव पारियात्रनिवासिनः॥१७॥सौवीराः सैन्धवापन्नाः शाल्वाः शाकलवासिनः॥मद्रारामास्तथाऽम्बष्ठाः पारसीकादयस्तथा ॥ १८ ॥ आसां पिबन्ति सलिलं वसन्ति सरितां सदा ॥ समोपेता महाभागा हृष्टपुष्टजनाकुलाः ॥ १९ ॥ चत्वारि भारते वर्षे युगान्यत्र महामुने ॥ कृतं त्रेता द्वापरं च कलिश्चान्यत्र न क्वचित् ॥ २० ॥ तपस्तप्यन्ति यतयो जुह्वते चात्र यज्विनः ॥ दानानि चात्र दीयन्ते परलोकार्थमादरात् ॥ २१ ॥ पुरुषैर्यज्ञपुरुषो जम्बूद्वीपे सदेज्यते ॥ यज्ञैर्यज्ञमयो विष्णुरन्यद्वीपेषु चान्यथा ॥ २२ ॥ अत्रापि भारतं श्रेष्ठं जम्बूद्वीपे महामुने ॥ यतो हि कर्मभूरेषा अतोऽन्या भोगभूमयः ॥ २३ ॥ अत्र जन्मसहस्राणां सहस्रैरपि सत्तम ॥ कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसंचयात् ॥ २४ ॥ गायन्ति देवाः किल गीतकानि धन्यास्तु ये भारतभूमिभागे ॥ स्वर्गापवर्गास्पदहेतुभूते भवन्ति भूयः पुरुषा मनुष्याः ॥ २५ ॥ कर्माण्यसंकल्पिततत्फलानि संन्यस्य विष्णौ परमात्मरूपे ॥ अवाप्य तां कर्ममहीमनन्ते तस्मिँल्लयं ये त्वमलाः प्रयान्ति ॥ २६ ॥ जानीम नैतत्क्व वयं (?) विलीने स्वर्गप्रदे कर्मणि देहबन्धम् ॥ प्राप्स्यन्ति धन्याः खलु ते मनुष्या ये भारतेनेन्द्रियविप्रहीनाः ॥ २७ ॥ नववर्षं च भो विप्रा जम्बूद्वीपमिदं मया ॥ः लक्षयोजनविस्तारं संक्षेपात्कथितं द्विजाः ॥ २८ ॥ जम्बूद्वीपं समावृत्य लक्षयोजनविस्तरः ॥ भो द्विजा वलयाकारः स्थितः क्षारोदधिर्बहिः ॥ २९ ॥ इति श्रीब्रह्मपुराणे भुवनकोशे जम्बूद्वीपनिरूपणं नाम सप्तदशोऽध्यायः ॥ १७ ॥ लोमहर्षण उवाच ॥ क्षारोदेन यथा द्वीपो जम्बूसंज्ञोऽभिवेष्टितः ॥ संवेष्ट्य क्षारमुदधिं प्लक्षद्वीपस्तथा स्थितः ॥ १ ॥ जम्बूद्वीपस्य विस्तारः शतसाहस्रसंमितः ॥ स एव द्विगुणो विप्राः प्लक्षद्वीपेऽप्युदाहृतः ॥ २ ॥ सप्त मेधातिथेः पुत्राः प्लक्षद्वीपेश्वरस्य वै ॥ श्रेष्ठः शान्तमयो नाम शिशिरस्तदनन्तरम् ॥ ३ ॥ सुखोदयस्तथाऽऽनन्दः शिवः क्षेमक एव च ॥ ध्रुवश्च सप्तमस्तेषां प्लक्षद्वीपेश्वरा हि ते ॥४॥ पूर्वं शान्तभयं वर्षं शिशिरं सुखदं तथा ॥ आनन्दं च शिवं चैव क्षेमकं ध्रुवमेव च ॥ ५ ॥ मर्यादाकारकास्तेषां तथाऽन्ये वर्षपर्वताः ॥ सप्तैव तेषां नामानि शृणुध्वं मुनिसत्तमाः ॥ ६ ॥ गोमेदश्चैव चन्द्रश्च नारदो दुन्दुभिस्तथा ॥ सोमकः सुमनाः शैलो वैभ्राजश्चैव सप्तमः ॥ ७ ॥ वर्षाचलेषु रम्येषु वर्षेष्वेतेषु चानघाः ॥ वसन्ति देवगन्धर्वसहिताः सततं प्रजाः ॥ ८ ॥ तेषु पुण्या जानपदाश्चिराच्च म्रियते जनः ॥ नाऽऽधयो व्याधयो वाऽपि सर्वकालं सुखं हि तत् ॥९॥ तेषां नद्यश्च सप्तैव वर्षाणां तु समुद्रगाः ॥ नामतस्ताः प्रवक्ष्यामि श्रुताः पापं हरन्ति याः ॥ १० ॥ अनुतप्ता शिखी चैव विपाशा त्रिदिवा क्रमुः ॥ अमृता सुकृता चैव सप्तैतास्तत्र निम्नगाः ॥ ११ ॥ एते शैलास्तथा नद्यः प्रधानाः कथिता द्विजाः ॥ क्षुद्रनद्यस्तथा शैलास्तत्र सन्ति सहस्रशः ॥ १२ ॥ ताः पिबन्ति सदा हृष्टा नदीर्जन

॥ १८ ॥

पदास्तु ते ॥ अवसर्पिणी नदी तेषां न चैवोत्सर्पिणी द्विजाः ॥ १३ ॥ न तिष्ठति युगावस्था तेषु स्थानेषु सप्तसु ॥ त्रेतायुगसमः कालः सर्वदैव द्विजोत्तमाः ॥ १४ ॥ प्लक्षद्वीपादिके विप्राः शाकद्वीपान्तिकेषु वै ॥ पञ्चवर्षसहस्राणि जना जीवन्त्यनामयाः ॥ १५ ॥ धर्मश्चतुर्विधस्तेषु वर्णाश्रम विभागजः ॥ वर्णांश्च तत्र चत्वारस्तान्बुधाः प्रवदामि वः ॥ १६ ॥ आर्यकाः कुरवश्चैव विविश्वा भाविनश्च ते ॥ विप्रक्षत्रियवैश्यास्ते शूद्राश्च मुनि सत्तमाः ॥ १७ ॥ जम्बूवृक्षप्रमाणस्तु तन्मध्ये सुमहातरुः ॥ प्लक्षस्तन्नामसंज्ञोऽयं प्लक्षद्वीपो द्विजोत्तमाः ॥ १८ ॥ इज्यते तत्र भगवांस्तैर्वर्णैरार्यकादिभिः ॥ सोमरूपी जगत्स्रष्टा सर्वः सर्वेश्वरो हरिः ॥ १९ ॥ प्लक्षद्वीपप्रमाणेन प्लक्षद्वीपः समावृतः ॥ तथैवेक्षुरसोदेन परिवेषानुकारिणा ॥ २० ॥ इत्येतद्वो मुनिश्रेष्ठाः प्लक्षद्वीपमुदाहृतम् ॥ संक्षेपेण मया भूयः शाल्मलं मे निबोधत ॥ २१ ॥ शाल्मलस्येश्वरो वीरो वपुष्मांस्तु ततो द्विजाः ॥ तेषां तु नामसंज्ञानि सप्तवर्षाणि तानि वै ॥ २२ ॥ श्वेतोऽथ हरितश्चैव जीमूतो रोहितस्तथा ॥ वैद्युतो मानसश्चैव सुप्रभश्च द्विजोत्तमाः ॥ २३ ॥ शाल्मलेन समुद्रोऽसौ द्वीपेनेक्षुरसोदकः ॥ विस्ताराद्विगुणेनाथ सर्वतः संवृतः स्थितः ॥ २४ ॥ तत्रापि पर्वताः सप्त विज्ञेया रत्नयोनयः ॥ वर्षाभिव्यञ्जकास्तऽत्र तथा सप्तैव निम्नगाः ॥ २५ ॥ कुमुदश्चोन्नतश्चैव तृतीयस्तु वलाहकः ॥ द्रोणो यत्र महौषध्यः स चतुर्थो महीधरः ॥ २६ ॥ कङ्कस्तु पञ्चमः षष्ठो महिषः सप्तमस्तथा ॥ ककुद्मान्पर्वतवरः सरिन्नामान्यतो द्विजाः ॥ २७ ॥ श्रोणी तोया वितृष्णा च चन्द्राशुक्रा विमोचनी ॥ निवृत्तिः सप्तमी तासां स्मृतास्ताः पापशान्तिदाः ॥ २८ ॥ श्वेतं च लोहितं चैव जीमूतं हरितं तथा ॥ वैद्युतं मानसं चैव सुप्रभं नाम सप्तमम् ॥ २९ ॥ सप्तैतानि तु वर्षाणि चातुर्वर्ण्ययुतानि च ॥ वर्णाश्च शाल्मलेये च वर्तन्त्येषु द्विजोत्तमाः ॥ ३० ॥ कपिलाश्चारुणाः पीताः कृष्णाश्चैव पृथक्पृथक् ॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव यजन्ति तम् ॥ ३१ ॥ भगवन्तं समस्तस्य विष्णुमात्मानमव्ययम् ॥ वायुभूतं मखश्रेष्ठैर्यज्विनो यज्ञसंस्थितम् ॥ ३२ ॥ देवानामत्र सांनिध्यमतीव सुमनोहरे ॥ शाल्मलिश्च महावृक्षो नामनिर्वृत्तिकारकः ॥ ३३ ॥ एष द्वीपः समुद्रेण सुरोदेन समावृतः ॥ विस्ताराच्छाल्मलेश्चैव समेन तु समन्ततः ॥ ३४ ॥ सुरोदकः परिवृतः कुशद्वीपेन सर्वतः ॥ शाल्मलस्य तु विस्ताराद्विगुणेन समन्ततः ॥ ३५ ॥ ज्योतिष्मतः कुशद्वीपे सप्तपुत्रान्निबोधत ॥ उद्भिदो वेणुमांश्चैव स्वैरथो रन्धनो धृतिः ॥ ३६ ॥ प्रभाकरोऽथ कपिलस्तन्नाम्ना वर्षपर्वतः ॥ तस्मिन्वसन्ति मनुजाः सह दैतेयदानवैः ॥ ३७ ॥ तथैव देवगन्धर्वा यक्षकिंपुरुषादयः ॥ वर्णास्तत्रापि चत्वारो निजानुष्ठानतत्पराः ॥ ३८ ॥ दमिनः शुष्मिणः स्नेहा मन्देहाश्च द्विजोत्तमाः ॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चानुक्रमोदिताः ॥ ३९ ॥ यथोक्तकर्मकर्तृत्वात्स्वाधिकारक्षयाय ते ॥





तत्र ते तु कुशद्वीपे ब्रह्मरूपं जनार्दनम् ॥ ४० ॥ यजन्तः क्षपयन्त्युग्रमधिकारफलप्रदम् ॥ विद्रुमो हेमशैलश्च द्युतिमान्पुष्टिमांस्तथा ॥ ४१ ॥ कुशेशयो हरिश्चैव सप्तमो मन्दराचलः ॥ वर्षाचलास्तु सप्तैते द्वीपे तत्र द्विजोत्तमाः ॥ ४२ ॥ नद्यश्च सप्त तासां तु शृणु नामान्यनुक्रमात् ॥ धूतपापा शिवा चैव पवित्रा संमतिस्तथा ॥४३॥ विद्युदम्भो मही चान्या सर्वपापहरास्त्विमाः ॥ अन्याः सहस्रशस्तत्र क्षुद्रनद्यस्तथाऽचलाः ॥ ४४ ॥ कुशद्वीपे कुशस्तम्बः संज्ञया तस्य तत्स्मृतम् ॥ तत्प्रमाणेन स द्वीपो घृतोदेन समावृतः ॥४५॥ घृतोदश्च समुद्रोऽसौ क्रौञ्चद्वीपेन संवृतः ॥ क्रौञ्चद्वीपो मुनिश्रेष्ठाः श्रूयतां चापरो महान् ॥ ४६ ॥ कुशद्वीपस्य विस्ताराद्द्विगुणो यस्य विस्तरः ॥ क्रौञ्चद्वीपे द्युतिमतः पुत्राः सप्त महात्मनः ॥ ४७ ॥ तन्नामानि च वर्षाणि तेषां चक्रे महीपतिः ॥ कुशगो मन्दगश्चोष्णः पीवरोऽथान्धकारकः ॥ ४८ ॥ मुनिश्च दुन्दुभिश्चैव सप्तैते तत्सुता द्विजाः ॥ तत्रापि देवगन्धर्वसेविताः सुमनोरमाः ॥ ४९ ॥ वर्षाचला मुनिश्रेष्ठास्तेषां नामान्यतः परम् ॥ क्रौञ्चश्च वामनश्चैव तृतीयश्चान्धकारकः ॥ ५० ॥ देवव्रतो धमश्चैव तथाऽन्यः पुण्डरीकवान् ॥ दुन्दुभिश्च महाशैलो द्विगुणास्ते परस्परम् ॥ ५१ ॥ द्वीपाद्वीपेषु वै शैलास्तथा द्वीपानि ते तथा ॥ वर्षेष्वेतेषु रम्येषु वर्षशैलवरेषु च ॥ ५२ ॥ निवसन्ति निरातङ्काः सह देवगणैः प्रजाः ॥ पुष्कला पुष्करा धन्यास्ते ख्याताश्च द्विजोत्तमाः ॥ ५३ ॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चानुक्रमोदिताः ॥ तत्र नद्यो मुनिश्रेष्ठा याः पिबन्ति शृणुध्व ताः ॥ ५४ ॥ सप्त प्रधानाः शतशस्तत्राऽन्याः क्षेत्रनिम्नगाः ॥ गौरी कुमुद्वती चैव संध्या रात्रिर्मनोजवा ॥ ५५ ॥ ख्यातिश्च पुण्डरीका च सप्तैता वर्षनिम्नगाः ॥ तत्रापि वर्णैर्भगवान्पुष्कराद्यैर्जनार्दनः ॥ ५६ ॥ योगिरुद्रस्वरूपस्तु इज्यते यज्ञसंनिधौ ॥ क्रौञ्चद्वीपः समुद्रेण दधिमण्डोदकेन तु ॥ ५७ ॥ आवृतः सर्वतः क्रौञ्चद्वीपतुल्येन मानतः ॥ दधिमण्डोदकश्चापि शाकद्वीपेन संवृतः ॥ ५८ ॥ क्रौञ्चद्वीपस्य विस्ताराद्द्विगुणेन द्विजोत्तमाः ॥ शाकद्वीपेश्वरस्यापि भव्यस्य सुमहात्मनः ॥ ५९ ॥ सप्तैव तनयास्तेषां ददौ वर्षाणि सप्त सः ॥ जलदश्च कुमारश्च सुकुमारो मनीरकः ॥ ६० ॥ कुसुमोदश्च मोदाकिः सप्तमश्च महाद्रुमः ॥ तत्संज्ञान्येव तत्रापि सप्त वर्षाण्यनुक्रमात् ॥ ६१ ॥ तत्रापि पर्वताः सप्त वर्षविच्छेदकारकः ॥ पूर्वं तत्रोदयगिरिर्जलधारस्तथाऽपरः ॥ ६२ ॥ तथा रैवतकः श्यामस्तथैवाम्भोगिरिर्द्विजाः ॥ आस्तिकेयस्तथा रम्यः केसरी पर्वतोत्तमः ॥ ६३ ॥ शाकश्चात्र महावृक्षः सिद्धगन्धर्वसेवितः ॥ यत्पत्रवातसंस्पर्शादाह्लादो जायते परः ॥ ६४ ॥ तत्र पुण्या जनपदाश्चातुर्वर्ण्यसमन्विताः ॥ निवसन्ति महात्मानो निरातङ्का निरामयाः ॥ ६५ ॥ नद्यश्चात्र महापुण्याः सर्वपापभयापहाः ॥ सुकुमारी कुमारी च नलिनी रेणुका च या ॥ ६६ ॥ इक्षुश्च

धेनुका चैव गभस्ती सप्तमी तथा ॥ अन्यास्त्वयुतशस्तत्र क्षुद्रनद्यो द्विजोत्तमाः ॥ ६७ ॥ महीधरास्तथा सन्ति शतशोऽथ सहस्रशः ॥ ताः पिब न्ति मुदा युक्ता जलदादिषु ये स्थिताः ॥ ६८ ॥ वर्षेषु ये जनपदाश्चतुर्थार्थसमन्विताः ॥ नद्यश्चात्र महापुण्याः स्वर्गादभ्येत्य मेदिनीम् ॥ ६९ ॥ धर्महानिर्न तेष्वस्ति न संहर्षो न शुक्तथा ॥ मर्यादाव्युत्क्रमश्चापि तेषु देशेषु सप्तसु ॥ ७० ॥ मगाश्च मागधाश्चैव मानसा मन्दगास्तथा ॥ मगा ब्राह्मणभूयिष्ठा मागधाः क्षत्रियास्तु ते ॥ ७१ ॥ वैश्यास्तु मानसास्तेषां शूद्रा ज्ञेयास्तु मन्दगाः ॥ शाकद्वीपस्थितैर्विष्णुः सूर्यरूपधरो हरिः ॥ ७२ ॥ यथोक्तैरिज्यते सम्यक्कर्मभिर्नियतात्मभिः ॥ शाकद्वीपस्ततो विप्राः क्षीरोदेन समन्ततः ॥ ७३ ॥ शाकद्वीपप्रमाणेन वलयेनेव वेष्टितः ॥ क्षीरा ब्धिः सर्वतो विप्राः पुष्कराख्येन वेष्टितः ॥ ७४ ॥ द्वीपेन शाकद्वीपात्तु द्विगुणेन समन्ततः ॥ पुष्करे सवनस्यापि महावीतोऽभवत्सुतः ॥ ७५ ॥ धातकिश्च तयोस्तद्वद्वे वर्षे नामसंज्ञिते ॥ महावीतं तथैवान्यद्धातकीखण्डसंज्ञितम् ॥ ७६ ॥ एकश्चात्र महाभागाः प्रख्यातो वर्षपर्वतः ॥ मानसोत्तर संज्ञो वै मध्यतो वलयाकृतिः ॥ ७७ ॥ योजनानां सहस्राणि ऊर्ध्वं पञ्चाशदुच्छ्रितः ॥ तावदेव च विस्तीर्णः सर्वतः परिमण्डलः ॥ ७८ ॥ पुष्करद्वी पवलयं मध्येन विभजन्निव ॥ स्थितोऽसौ तेन विच्छिन्नं जातं तद्वीपकद्वयम् ॥ ७९ ॥ वलयाकरमेकैकं तयोर्मध्ये महागिरिः ॥ दशवर्षसहस्राणि तत्र जीवन्ति मानवाः ॥ ८० ॥ निरामया विशोकाश्च रागद्वेषविवर्जिताः ॥ अधमोत्तमौ न तेष्वास्तां न वध्यवधकौ द्विजाः ॥ ८१ ॥ ईर्ष्याऽ सूया भयं रोषो दोषो लोभादिकं न च ॥ महावीतं बहिर्वर्षं धातकीखण्डमण्डितम् ॥ ८२ ॥ मानसोत्तरशैलस्य देवदैत्यादिसेवितम् ॥ सत्यानृते न तत्राऽस्तां द्वीपे पुष्करसंज्ञिते ॥ ८३ ॥ न तत्र नद्यः शैला वा द्वीपे पुष्करसंज्ञिते ॥ तुल्यवेषास्तु मनुजा देवैस्तत्रैकरूपिणः ॥ ८४ ॥ वर्णा श्रमाचारहीनं धर्माहरणवर्जितम् ॥ त्रयीवार्तादण्डनीतिशुश्रूषारहितं च तत् ॥ ८५ ॥ वर्षद्वयं ततो विप्रा भौमस्वर्गोऽयमुच्यते ॥ सर्वस्य सुखदः कालो जरारोगविवर्जितः ॥ ८६ ॥ पुष्करे धातकीखण्डे महावीते च वै द्विजाः ॥ न्यग्रोधः पुष्करद्वीपे ब्रह्मणः स्थानमुत्तमम् ॥ ८७ ॥ तस्मि न्निवसति ब्रह्मा पूज्यमानः सुरासुरैः ॥ स्वादूदकेनोदधिना पुष्करः परिवेष्टितः ॥ ८८ ॥ समेन पुष्करस्यैव विस्तारान्मण्डलात्तथा ॥ एवं द्वीपाः समुद्रैस्तु सप्त सप्तभिरावृताः ॥ ८९ ॥ द्वीपश्चैव समुद्रश्च समानौ द्विगुणौ परौ ॥ पयांसि सर्वदा सर्वसमुद्रेषु समानि वै ॥ ९० ॥ न्यूनातिरिक्तता तेषां कदाचिन्नैव जायते ॥ स्थालीस्थमग्निसंयोगादुद्रिक्तं सलिलं यथा ॥ ९१ ॥ तथेन्दुवृद्धौ सलिलं समुद्रेषु समं हि वै ॥ अन्यूनानतिरिक्ताश्च वर्धन्त्यापो ह्रसन्ति च ॥९२॥ उदयास्तमनेष्विन्दोः पक्षयोः शुक्लकृष्णयोः ॥ दशोत्तराणि पञ्चैव अङ्गुलानां शतानि च ॥९३॥ अपां वृद्धिक्षयौ दृष्टौ समुद्राणां द्वि





जोत्तमाः ॥ भोजनं पुष्करद्वीपे तत्र स्वयमुपस्थितम् ॥९४॥ भुञ्जन्ति षड्रसं विप्राः प्रजाः सर्वाः सदैव हि ॥ स्वादूदकस्य परितो दृश्यते लोकसंस्थितिः ॥९५॥ द्विगुणा काञ्चनी भूमिः सर्वजन्तुविवर्जिता ॥ लोकालोकस्ततः शैलो योजनायुतविस्तृतः ॥९६॥ उच्छ्रयेणापि तावन्ति सहस्राणि महीधरः ॥ ततस्तमः समावृत्य तं शैलं सर्वतः स्थितम् ॥ ९७ ॥ तमश्चाण्डकटाहेन समन्तात्परिवेष्टितम् ॥ पञ्चाशत्कोटिविस्तारा सेयमुर्वी द्विजोत्तमाः ॥९८॥ सहैवाण्डकटाहेन सद्वीपाऽब्धिमहीधरा ॥ सेयं धात्री विधात्री च सर्वभूतगुणाधिका ॥ आधारभूता सर्वेषां जगतां सा द्विजोत्तमाः ॥ ९९ ॥ इति श्रीब्रह्मपुराणे समुद्रद्वीपपरिमाणवर्णनं नामाष्टादशोऽध्यायः ॥ १८ ॥ ॥ लोमहर्षण उवाच ॥ विस्तार एष कथितः पृथिव्या मुनिसत्तमाः ॥ सप्ततिस्तु सहस्राणि तदुच्छ्रायोऽपि कथ्यते ॥ १ ॥ दशसाहस्रमेकैकं पातालं मुनिसत्तमाः ॥ अतलं वितलं चैव नितलं सुतलं तथा ॥ २ ॥ तलातलं रसातलं पातालं चापि सप्तमम् ॥ कृष्णा शुक्लाऽरुणा पीता शर्करा शैलकाञ्चनी ॥ ३ ॥ भूमयो यत्र विप्रेन्द्रा वरप्रासादशोभिताः ॥ तेषु दानवदैत्यानां जातयस्तु सहस्रशः ॥ ४ ॥ नागानां च महाङ्गानां ज्ञातयश्च द्विजोत्तमाः ॥ स्वर्लोकादपि रम्याणि पातालानीति नारदः ॥५॥ प्राह स्वर्गसदोमध्ये पातालेभ्यो गतो दिवम् ॥ आह्लादकारिणः शुभ्रा मणयो यत्र सुप्रभाः ॥ ६ ॥ नागाभरणभूषाश्च पातालं केन तत्समम् ॥ दैत्यदानवकन्याभिरितश्चेतश्च शोभिते ॥ ७ ॥ पाताले कस्य न प्रीतिर्विमुक्तस्यापि जायते ॥ दिवाऽर्करश्मयो यत्र प्रभास्तन्वन्ति नाऽऽतपम् ॥ ८ ॥ शशिनश्च न शीताय निशि द्योताय केवलम् ॥ भक्ष्यभोज्यमहापानमुदितैश्चापि भोगिभिः ॥ ९ ॥ यत्र न ज्ञायते कालो गतोऽपि दनुजादिभिः ॥ वनानि नद्यो रम्याणि सरांसि कमलाकराः ॥ १० ॥ पुंस्कोकिलादिलापाश्च मनोज्ञान्यम्बराणि च ॥ भूषणान्यतिरम्याणि गन्धाढ्यमनुलेपनम् ॥ ११ ॥ वीणावेणुमृदङ्गानां निःस्वनाश्च सदा द्विजाः ॥ एतान्यन्यानि रम्याणि भाग्यभोग्यानि दानवैः ॥ १२ ॥ दैत्योरगैश्च भुज्यन्ते पातालान्तरगोचरैः ॥ पातालानामधश्चाऽऽस्ते विष्णोर्या तामसी तनुः ॥ १३ ॥ शेषाख्या यद्गुणान्वक्तुं न शक्ता दैत्यदानवाः ॥ योऽनन्तः पठ्यते सिद्धैर्देवदेवर्षिपूजितः ॥ १४ ॥ सहस्रशिरसा व्यक्तः स्वस्तिकामलभूषणः ॥ फणामणिसहस्रेण यः स विद्योतयन्दिशः ॥१५॥ सर्वान्करोति निर्वीर्यान्हिताय जगतोऽसुरान् ॥ मदाघूर्णितनेत्रोऽसौ यः सदैवैककुण्डलः ॥ १६ ॥ किरीटी स्रग्धरो भाति साग्निश्वेत इवाचलः ॥ नीलवासा मदोत्सिक्तः श्वेतहारोपशोभितः ॥ १७ ॥ साभ्रगङ्गाप्रपातोऽसौ कैलासाद्रिरिवोन्नतः ॥ लाङ्गलासक्तहस्ताग्रो बिभ्रन्मुशलमुत्तमम् ॥ ॥ १८ ॥ उपास्यते स्वयं कान्त्या यो वारुण्या च मूर्तया ॥ कल्पान्ते यस्य वक्त्रेभ्यो विषानलशिखोज्ज्वलः ॥ १९ ॥ संकर्षणात्मको रुद्रो

निष्क्रम्यात्ति जगत्रयम् ॥ स विभ्रच्छिखरीभूतमशेषं क्षितिमण्डलम् ॥ २० ॥ आस्ते पातालमूलस्थः शेषोऽशेषसुरार्चितः ॥ तस्य वीर्यं प्रभावश्च स्वरूपं रूपमेव च ॥ २१ ॥ न हि वर्णयितुं शक्यं ज्ञातुं वा त्रिदशैरपि ॥ यस्यैषा सकला पृथ्वी फणामणिशिखारुणा ॥ २२ ॥ आस्ते कुसुममालेव कस्तद्वीर्यं वदिष्यति ॥ यदा विजृम्भतेऽनन्तो मदाघूर्णितलोचनः ॥ २३ ॥ तदा चलति भूरेषा साद्रितोयाधिकानना ॥ गन्धर्वाप्सरसः सिद्धाः किंनरोरगराक्षसाः ॥ २४ ॥ नान्तं गुणानां गच्छन्ति ततोऽनन्तोऽयमव्ययः ॥ यस्य नागवधूहस्तैर्लेपितं हरिचन्दनम् ॥ ॥ २५ ॥ मुहुः श्वासानिलायस्तं याति दिक्पटवासताम् ॥ यमाराध्य पुराणर्षिर्गर्गो ज्योतींषि तत्त्वतः ॥ २६ ॥ ज्ञातवान्सकलं चैव निमित्तपठितं फलम् ॥ तेनेयं नागवर्येण शिरसा विधृता मही ॥ बिभर्ति सकलाँल्लोकान्सदेवासुरमानुषान् ॥ २७ ॥ इति श्रीब्रह्मपुराणे पातालप्रमाणकीर्तनं नामैकोनविंशोऽध्यायः ॥ १९ ॥ ॥ लोमहर्षण उवाच ॥ ततश्च नरका विप्रा बभूवुः सलिलादधः ॥ पापिनो येषु पात्यन्ते ताञ्छृणुध्वं द्विजोत्तमाः ॥ १ ॥ रौरवः शौकरो रोधस्तालो विशसनस्तथा ॥ महाज्वालस्तप्तकुम्भो महालोभो विमोहनः ॥ २ ॥ रुधिरान्धो वैतरणी कृमीशः कृमिभोजनः ॥ असिपत्रवनः कृष्णो लालाभक्षश्च दारुणः ॥ ३ ॥ तथा पूयवहः पापो वह्निज्वालो ह्यधःशिराः ॥ सदंशः कृष्णसूत्रश्च तमश्चावीचिरेव च ॥ ४ ॥ श्वभोजनोऽथाप्रतिष्ठो ह्यावीचिश्च तथाऽपरः ॥ इत्येवमादयश्चान्ये नरका भृशदारुणाः ॥ ५ ॥ यमस्य विषये घोराः शस्त्राग्निभयदायिनः ॥ पतन्ति येषु पुरुषाः पापकर्मरताश्च ये ॥ ६ ॥ कूटसाक्षी तथा सम्यक्पक्षपातेन यो वदेत् ॥ यश्चान्यदनृतं वक्ति स नरो याति रौरवम् ॥ ७ ॥ भ्रूणहा गुरुहन्ता च गोघ्नश्च मुनिसत्तमाः ॥ यान्ति ते रौरवं घोरं यश्चोच्छ्वासनिरोधकः ॥८॥ सुरापो ब्रह्महा हर्ता सुवर्णस्य च शूकरे ॥ प्रयाति नरके यश्च तैः संसर्गमुपैति च ॥ ९॥ राजन्यवैश्यहन्ता च तथैव गुरुतल्पगः ॥ तप्तकुम्भे स्वसृगामी हन्ति राजभटं च यः ॥१०॥ साध्वीविक्रयकृन्मद्यपालः केसरविक्रयी ॥ तप्तलोहे पतन्त्येते यश्च भक्तं परित्यजेत् ॥ ११ ॥ सुतां स्नुषां चापि गत्वा महाज्वाले निपात्यते ॥ अवमन्ता गुरूणां यो यश्चाऽऽक्रोष्टा नराधमः ॥ १२ ॥ वेददूषयिता यश्च वेदविक्रयकश्च यः ॥ अगम्यगामी यश्च स्यात्ते यान्ति शवलं द्विजाः ॥ १३ ॥ चौरो विमोहे पतति मर्यादादूषकस्तथा ॥ देवद्विजपितृद्वेष्टा रत्नदूषयिता च यः ॥ १४ ॥ स याति कृमिभक्ष्ये वै कृमीशे तु दुरिष्टिकृत् ॥ पितृदेवातिथीन्यस्तु पर्यश्नाति नराधमः ॥ १५ ॥ लालाभक्ष्ये स यात्युग्रे शरकर्ता च वेधके ॥ करोति कर्णिनो यश्च यश्च खड्गादिकृन्नरः ॥ १६ ॥ गच्छन्त्येते विशसने नरके भृशदारुणे ॥ असत्प्रतिग्रहीता च नरके यात्यधोमुखे ॥ १७ ॥ अयाज्ययाजकस्तत्र तथा नक्षत्रसूचकः ॥ कृमिपूये





नरश्चैको याति मिष्टान्नभुक्सदा ॥ १८ ॥ लाक्षामांसरसानां च तिलानां लवणस्य च ॥ विक्रेता ब्राह्मणो याति तमेव नरकं द्विजाः ॥ १९ ॥ मार्जारकुक्कुटच्छागश्ववराहविहंगमान् ॥ पोषयन्नरकं याति तमेव द्विजसत्तमाः ॥ २० ॥ रङ्गोपजीवी कैवर्तः कुण्डाशी गरदस्तथा ॥ सूची माहिषिकश्चैव पर्वगामी च यो द्विजः ॥ २१ ॥ अगारदाही मित्रघ्नः शकुनिग्रामयाजकः ॥ रुधिरान्धे पतन्त्येते सोमं विक्रीणते च ये ॥ २२ ॥ मधुहा ग्रामहन्ता च याति वैतरणीं नरः ॥ रेतःपानादिकर्तारो मर्यादाभेदिनश्च ये ॥ २३ ॥ ते कृच्छ्रे यान्त्यशौचाश्च कुहकाजीविनश्च ये ॥ असिपत्रवनं याति वनच्छेदी वृथैव यः ॥ २४ ॥ औरभ्रिका मृगव्याधा वह्निज्वाले पतन्ति वै ॥ यान्ति तत्रैव ते विप्रा यश्चापाकेषु वह्निदः ॥ २५ ॥ व्रतोपलोपको यश्च स्वाश्रमाद्विच्युतश्च यः ॥ संदंशयातनामध्ये पततस्तावुभावपि ॥ २६ ॥ दिवा स्वप्नेषु स्यन्दन्ते ये नरा ब्रह्मचारिणः ॥ पुत्रैरध्यापिता ये तु ते पतन्ति श्वभोजने ॥ २७ ॥ एते चान्ये च नरकाः शतशोऽथ सहस्रशः ॥ येषु दुष्कृतकर्माणः पच्यन्ते यातनागताः ॥ २८ ॥ तथैव पापान्येतानि तथाऽन्यानि सहस्रशः ॥ भुज्यन्ते जातिपुरुषैर्नरकान्तरगोचरैः ॥ २९ ॥ वर्णाश्रमविरुद्धं च कर्म कुर्वन्ति ये नराः ॥ कर्मणा मनसा वाचा निरयेषु पतन्ति ते ॥ ३० ॥ अधःशिरोभिर्दृश्यन्ते नारकैर्दिवि देवताः ॥ देवाश्चाधोमुखान्सर्वानधः पश्यन्ति नारकान् ॥ ३१ ॥ स्थावराः कृमयोऽब्जाश्च पक्षिणः पशवो नराः ॥ धार्मिकास्त्रिदशास्तद्वन्मोक्षिणश्च यथाक्रमम् ॥ ३२ ॥ सहस्रभागः प्रथमाद्द्वितीयोऽनुक्रमात्तथा ॥ सर्वे ह्येते महाभागा यावन्मुक्तिसमाश्रिताः ॥ ३३ ॥ यावन्तो जन्तवः स्वर्गे तावन्तो नरकौकसः ॥ पापकृद्याति नरकं प्रायश्चित्तपराङ्मुखः ॥ ३४ ॥ पापानामनुरूपाणि प्रायश्चित्तानि यद्यथा ॥ तथा तथैव संस्मृत्य प्रोक्तानि परमर्षिभिः ॥३५॥ पापे गुरूणि गुरुणि स्वल्पान्यल्पे च तद्विदः ॥ प्रायश्चित्तानि विप्रेन्द्रा जगुः स्वायंभुवादयः ॥ ३६ ॥ प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै ॥ यानि तेषामशेषाणां कृष्णानुस्मरणं पदम् ॥ ३७ ॥ कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते ॥ प्रायश्चित्तं तु तस्यैकं हरिसंस्मरणं परम् ॥ ३८ ॥ प्रातर्निशि तथा संध्यामध्याह्नादिषु संस्मरन् ॥ नारायणमवाप्नोति सद्यः पापक्षयान्नरः ॥ ३९ ॥ विष्णुसंस्मरणात्क्षीणसमस्तक्लेशसंचयः ॥ मुक्तिं प्रयाति स्वर्गाप्तिस्तस्य विघ्नोऽनुमीयते ॥ ४० ॥ वासुदेवे मनो यस्य जपहोमार्चनादिषु ॥ तस्यान्तरायो विप्रेन्द्रा देवेन्द्रत्वादिकं फलम् ॥ ४१ ॥ क्व नाकपृष्ठगमनं पुनरावृत्तिलक्षणम् ॥ क्व जपो वासुदेवेति मुक्तिबीजमनुत्तमम् ॥ ४२ ॥ तस्मादहर्निशं विष्णुं संस्मरन्पुरुषो द्विजः ॥ न याति नरकं शुद्धः संक्षीणाखिलपातकः ॥ ४३ ॥ मनःप्रीतिकरः स्वर्गो नरकस्तद्विपर्ययः ॥ नरकस्वर्गसंज्ञे वै पापपुण्ये द्विजोत्तमाः ॥ ४४ ॥ वस्त्वेकमेव दुःखाय सुखायेर्ष्योद्भवाय च ॥ कोपाय च

यतस्तस्माद्वस्तु दुःखात्मकं कुतः ॥ ४५ ॥ तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते ॥ तदेव कोपालयतः प्रसादाय च जायते ॥ ४६ ॥ तस्माद्दुः खात्मकं नास्ति न च किंचित्सुखात्मकम् ॥ मनसः परिणामोऽयं सुखदुःखादिलक्षणः ॥ ४७ ॥ ज्ञानमेव परं ब्रह्म ज्ञानं बन्धाय चेष्यते ॥ ज्ञाना त्मकमिदं विश्वं न ज्ञानाद्विद्यते परम् ॥ ४८ ॥ विद्याविद्ये हि भो विप्रा ज्ञानमेवावधार्यताम् ॥ एवमेतन्मयाऽऽख्यातं भवतां मण्डलं भुवः ॥ ४९ ॥ पातालानि च सर्वाणि तथैव नरका द्विजाः ॥ समुद्राः पर्वताश्चैव द्वीपा वर्षाणि निम्नगाः ॥ संक्षेपात्सर्वमाख्यातं किं भूयः श्रोतुमिच्छथ ॥५०॥ इति श्रीब्रह्मपुराणे पातालनरककीर्तनं नाम विंशोऽध्यायः ॥ २० ॥ ॥ मुनय ऊचुः ॥ कथितं भवता सर्वमस्माकं सकलं तथा ॥ भुवर्लोका दिकाँल्लोकाञ्श्रोतुमिच्छामहे वयम् ॥ १ ॥ तथैव ग्रहसंस्थानं प्रमाणानि यथा तथा ॥ समाचक्ष्व महाभाग यथावल्लोमहर्षण ॥ २ ॥ ॥ लोमहर्षण उवाच ॥ रविचन्द्रमसोर्यावन्मयूखैरवभास्यते ॥ ससमुद्रसरिच्छैला तावती पृथिवी स्मृता ॥ ३ ॥ यावत्प्रमाणा पृथिवी विस्तारपरिमण्डला ॥ नभस्तावत्प्रमाणं हि विस्तारपरिमण्डलम् ॥ ४ ॥ भूमेर्योजनलक्षे तु सौरं विप्रास्तु मण्डलम् ॥ लक्षे दिवाकराच्चापि मण्डलं शशिनः स्थितम् ॥५॥ पूर्णे शतसहस्रे तु योजनानां निशाकरात् ॥ नक्षत्रमण्डलं कृत्स्नमुपरिष्टात्प्रकाशते ॥ ६ ॥ द्विलक्षे चोत्तरे विप्रा बुधो नक्षत्रमण्डलात् ॥ तावत्प्रमाण भागे तु बुधस्याप्युशना स्थितः ॥ ७ ॥ अङ्गारकोऽपि शुक्रस्य तत्प्रमाणे व्यवस्थितः ॥ लक्षद्वयेन भौमस्य स्थितो देवपुरोहितः ॥ ८ ॥ सौरिर्बृ हस्पतेरूर्ध्वं द्विलक्षे समवस्थितः ॥ सप्तर्षिमण्डलं तस्माल्लक्षमेकं द्विजोत्तमाः ॥ ९ ॥ ऋषिभ्यस्तु सहस्राणां शतादूर्ध्वं व्यवस्थितः ॥ मेढीभूतः समस्तस्य ज्योतिश्चक्रस्य वै ध्रुवः ॥ १० ॥ त्रैलोक्यमेतत्कथितं संक्षेपेण द्विजोत्तमाः ॥ इज्याफलस्य भूरेषा इज्या चात्र प्रतिष्ठिता ॥ ११ ॥ ध्रुवादूर्ध्वं महर्लोको यत्र ते कल्पवासिनः ॥ एकयोजनकोटीषु महर्लोको विधीयते ॥ १२ ॥ द्वे कोट्यौ तु जनोलोको यत्र ते ब्रह्मणः सुताः ॥ सनन्दनाद्याः कथिता विप्राश्चामलचेतसः ॥ १३ ॥ चतुर्गुणोत्तरं चोर्ध्वं जनोलोकात्तपः स्मृतम् ॥ वैराजा यत्र ते देवाः स्थिता देहविवर्जिताः ॥ १४ ॥ षड्गुणेन तपोलोकात्सत्यलोको विराजते ॥ अपुनर्मारकं यत्र ब्रह्मलोको हि संस्मृतः ॥ १५ ॥ पादगम्यं तु यत्किंचिद्वस्त्वस्ति पृथिवीम यम् ॥ स भूर्लोकः समाख्यातो विस्तारोऽस्य मयोदितः ॥ १६ ॥ भूमिसूर्यान्तरं यच्च सिद्धादिमुनिसेवितम् ॥ भुवर्लोकस्तु सोऽप्युक्तो द्वितीयो मुनिसत्तमाः ॥ १७ ॥ ध्रुवसूर्यान्तरं यत्तु नियुतानि चतुर्दश ॥ स्वर्लोकः सोऽपि कथितो लोकसंस्थानचिन्तकैः ॥ १८ ॥ त्रैलोक्यमेतत्कृतकं विप्रै स्तु परिपठ्यते ॥ जनस्तपस्तथा सत्यमिति चाकृतकं त्रयम् ॥ १९ ॥ कृतकाकृतको मध्ये महर्लोक इति स्मृतः ॥ शून्यो भवति कल्पान्ते योऽत्य

न्तं न विनश्यति ॥ २० ॥ एते सप्त महालोका मया वः कथिता द्विजाः ॥ पातालानि च सप्तैव ब्रह्माण्डस्यैष विस्तरः ॥ २१ ॥ एतदण्डकटाहेन तिर्यगूर्ध्वमधस्तथा ॥ कपित्थस्य यथा बीजं सर्वतो वै समावृतम् ॥ २२ ॥ दशोत्तरेण पयसा द्विजाश्चाण्डं च तद्वृतम् ॥ स चाम्बुपरिवारोऽसौ वह्निना परिवेष्टितः ॥ २३ ॥ वह्निस्तु वायुना वायुर्विप्रास्तु नभसाऽऽवृतः ॥ आकाशोऽपि मुनिश्रेष्ठा महता परिवेष्टितः ॥ २४ ॥ दशोत्तराण्यशेषाणि विप्राश्चैतानि सप्त वै ॥ महान्तं च समावृत्य प्रधानं समवस्थितम् ॥ २५ ॥ अनन्तस्य न तस्यान्तः संख्यानं चापि विद्यते ॥ तदनन्तमसंख्यातं प्रमाणेनापि वै यतः २६ ॥ हेतुभूतमशेषस्य प्रकृतिः सा परा द्विजाः ॥ अण्डानां तु सहस्राणां सहस्राण्ययुतानि च ॥ २७ ॥ ईदृशानां तथा तत्र कोटिकोटिशतानि च ॥ दारुण्यग्निर्यथा तैलं तिले तद्वत्पुमानिह ॥ २८ ॥ प्रधानेऽवस्थितो व्यापी चेतनात्मनिवेदनः ॥ प्रधानं च पुमांश्चैव सर्वभूतात्मभूतया ॥ २९ ॥ विष्णुशक्त्या द्विजश्रेष्ठा धृतौ संश्रयधर्मिणौ ॥ तयोः सैव पृथग्भावे कारणं संश्रयस्य च ॥ ३० ॥ क्षोभकारणभूता च सर्गकाले द्विजोत्तमाः ॥ यथा शैत्यं जले वातो बिभर्ति कणिकागतम् ॥ ३१ ॥ जगच्छक्तिस्तथा विष्णोः प्रधानपुरुषात्मकम् ॥ यथा च पादपो मूलस्कन्धशाखादिसंयुतः ॥ ३२ ॥ आद्यबीजात्प्रभवति बीजान्यन्यानि वै ततः ॥ प्रभवन्ति ततस्तेभ्यो भवन्त्यन्ये परे द्रुमाः ॥ ३३ ॥ तेऽपि तल्लक्षणद्रव्यकारणानुगताः स्मृताः ॥ एवमव्याकृतात्पूर्वं जायन्ते महदादयः ॥ ३४ ॥ विशेषान्तास्ततस्तेभ्यः संभवन्ति सुरादयः ॥ तेभ्यश्च पुत्रास्तेषां तु पुत्राणामपरे सुताः ॥ ३५ ॥ बीजाद्वृक्षप्ररोहेण यथा नापचयस्तरोः ॥ भूतानां भूतसर्गेण नैवास्त्यपचयस्तथा ॥३६॥ संनिधानाद्यथाऽऽकाशकालाद्याः कारणं तरोः॥ तथैवापरिणामेन विश्वस्य भगवान्हरिः ॥३७॥ व्रीहिबीजे यथा मूलं नालं पत्राङ्कुरौ तथा ॥ काण्डकोषस्तथा पुष्पं क्षीरं तद्वच्च तण्डुलः ॥ ३८ ॥ तुषाः कणाश्च सन्तो वै यान्त्याविर्भावमात्मनः ॥ प्ररोहहेतुसामग्र्यमासाद्य मुनिसत्तमाः ॥ ३९ ॥ तथा कर्मस्वनेकेषु देवाद्यास्तनवः स्थिताः ॥ विष्णुशक्तिं समासाद्य प्ररोहमुपयान्ति वै ॥ ४० ॥ स च विष्णुः परं ब्रह्म यतः सर्वमिदं जगत् ॥ जगच्च यो यत्र चेदं यस्मिंश्च लयमेष्यति ॥ ४१ ॥ तद्ब्रह्म परमं धाम सदसत्परमं पदम् ॥ यस्य सर्वमभेदेन जगदेतच्चराचरम् ॥ ४२ ॥ स एव मूलप्रकृतिर्व्यक्तरूपी जगच्च सः ॥ तस्मिन्नेव लयं सर्वे यांति तत्र भवन्ति वै ॥ ४३ ॥ कर्ता क्रियाणां स च इज्यते क्रतुः स एव तत्कर्मफलं च तस्य यत् ॥ यागादि यत्साधनमप्यशेषतो हरेर्न किंचिद्व्यतिरिक्तमस्ति तत् ॥ ४४ ॥ इति श्रीब्रह्मपुराणे भूर्भुवःस्वरादिकीर्तनं नामैकविंशोऽध्यायः ॥ २१ ॥ लोमहर्षण उवाच ॥ तारामयं भगवतः शिशुमाराकृति प्रभोः ॥ दिवि रूपं हरेर्यत्तु तस्य पुच्छे स्थितो ध्रुवः ॥ १ ॥ सैष भ्रमन्भ्रामयति चन्द्रादित्यादिकान्ग्र

दान् ॥ भ्रमन्तमनु तं यान्ति नक्षत्राणि च चक्रवत् ॥ २ ॥ सूर्याचन्द्रमसौ तारा नक्षत्राणि ग्रहैः सह ॥ वातानीकमयैर्बन्धैर्ध्रुवे बद्धानि तानि वै ॥ ३ ॥ शिशुमाराकृति प्रोक्तं यद्रूपं ज्योतिषां दिवि ॥ नारायणः परं धाम तस्याऽऽधारः स्वयं हृदि ॥ ४ ॥ उत्तानपादतनयस्तमाराध्य प्रजापतिम् ॥ स ताराशिशुमारस्य ध्रुवः पुच्छे व्यवस्थितः ॥ ५ ॥ आधारः शिशुमारस्य सर्वाध्यक्षो जनार्दनः ॥ ध्रुवस्य शिशुमारश्च ध्रुवे भानुर्व्यवस्थितः ॥ ६ ॥ तदाधारं जगच्चेदं सदेवासुरमानुषम् ॥ येन विप्रा विधानेन तन्मे शृणुत सांप्रतम् ॥ ७ ॥ विवस्वानष्टभिर्मासैर्ग्रसत्यम्भो रसात्मकम् ॥ वर्षत्यम्बु ततश्चान्नमन्नादमखिलं जगत् ॥ ८ ॥ विवस्वानंशुभिस्तीक्ष्णैरादाय जगतो जलम् ॥ सोमं पुष्यत्यथेन्दुश्च वायुनाडीमयैर्दिवि ॥ ९ ॥ जलैर्विक्षिप्यतेऽभ्रेषु धूमाग्न्यनिलमूर्तिषु ॥ न भ्रश्यन्ति यतस्तेभ्यो जलान्यभ्राणि तान्यतः ॥ १० ॥ अभ्रस्थाः प्रपतन्त्यापो वायुना समुदीरिताः ॥ संस्कारं कालजनितं विप्राश्चाऽऽसाद्य निर्मलाः ॥ ११ ॥ सरित्समुद्रा भौमास्तु तथाऽऽपः प्राणिसंभवाः ॥ चतुष्प्रकारा भगवानादत्ते सविता द्विजाः ॥ १२ ॥ आकाशगङ्गासलिलं तथाऽऽहृत्य गभस्तिमान् ॥ अनभ्रगतमेवोर्व्यां सद्यः क्षिपति रश्मिभिः ॥ १३ ॥ तस्य संस्पर्शनिर्धूतपापपङ्को द्विजोत्तमाः ॥ न याति नरकं मर्त्यो दिव्यं स्नानं हि तत्स्मृतम् ॥ १४ ॥ दृष्टसूर्यं हि तद्वारि पतत्यभ्रैर्विना दिवः ॥ आकाशगङ्गासलिलं तद्गोभिः क्षिप्यते रवेः ॥ १५ ॥ कृत्तिकादिषु ऋक्षेषु विषमेष्वम्बु यद्दिवः ॥ दृष्ट्वाऽर्कं पतितं ज्ञेयं तद्गाङ्गं दिग्गजोज्झितम् ॥ १६ ॥ युग्मर्क्षेषु तु यत्तोयं पतत्यर्कोद्धृतं दिवः ॥ तत्सूर्यरश्मिभिः सद्यः समादाय निरस्यते ॥ १७ ॥ उभयं पुण्यमत्यर्थं नृणां पापहरं द्विजाः ॥ आकाशगङ्गासलिलं दिव्यं स्नानं द्विजोत्तमाः ॥ १८ ॥ यत्तु मेघैः समुत्सृष्टं वारि तत्प्राणिनां द्विजाः ॥ पुष्णात्योषधयः सर्वा जीवनायामृतं हि तत् ॥ १९ ॥ तेन वृद्धिं परां नीतः सकलश्चौषधीगणः ॥ साधकः फलपाकान्तः प्रजानां तु प्रजायते ॥ २० ॥ तेन यज्ञान्यथाप्रोक्तान्मानवाः शास्त्रचक्षुषः ॥ कुर्वतेऽहरहश्चैव देवानाप्याययन्ति ते ॥ २१ ॥ एवं यज्ञाश्च वेदाश्च वर्णाश्च द्विजपूर्वकाः ॥ सर्वदेवनिकायाश्च पशुभूतगणाश्च ये ॥ २२ ॥ वृष्ट्या धृतमिदं सर्वं जगत्स्थावरजङ्गमम् ॥ साऽपि निष्पाद्यते वृष्टिः सवित्रा मुनिसत्तमाः ॥ २३ ॥ आधारभूतः सवितुर्ध्रुवो मुनिवरोत्तमाः ॥ ध्रुवस्य शिशुमारोऽसौ सोऽपि नारायणाश्रयः ॥ २४ ॥ हृदि नारायणस्तस्य शिशुमारस्य संस्थितः ॥ विभर्ता सर्वभूतानामादिभूतः सनातनः ॥ २५ ॥ एवं मया मुनिश्रेष्ठा ब्रह्माण्डं समुदाहृतम् ॥ भूसमुद्रादिभिर्युक्तं किमन्यच्छ्रोतुमिच्छथ ॥ २६ ॥ इति श्रीब्रह्मपुराणे ध्रुवसंस्थितिनिरूपणं नाम द्वाविंशोऽध्यायः ॥ २२ ॥ ॥ मुनय ऊचुः ॥ पृथिव्यां यानि तीर्थानि धन्यान्यायतनानि च ॥ वक्तुमर्हसि धर्मज्ञ श्रोतुं नो वर्तते मनः ॥ १ ॥ लोम







हर्षण उवाच ॥ यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ॥ विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते ॥ २ ॥ मनो विशुद्धं पुरुषस्य तीर्थं वाचां तथा चेन्द्रियनिग्रहश्च ॥ एतानि तीर्थानि शरीरजानि स्वर्गस्य मार्गं प्रतिबोधयन्ति ॥ ३ ॥ चित्तमन्तर्गतं दुष्टं तीर्थस्नानैर्न शुध्यति ॥ शतशोऽपि जलैर्धौतं सुराभाण्डमिवाशुचि ॥४॥ न तीर्थानि न दानानि न व्रतानि न चाऽऽश्रमाः ॥ दुष्टाशयं दम्भरुचिं न पुनन्त्यजितेन्द्रियम् ॥ ५ ॥ इन्द्रियाणि वशे कृत्वा यत्र यत्र वसेन्नरः ॥ तत्र तत्र कुरुक्षेत्रं प्रयागं पुष्करं तथा ॥ ६ ॥ तस्माच्छृणुध्वं वक्ष्यामि तीर्थान्यायतनानि च ॥ संक्षेपेण मुनिश्रेष्ठाः पृथिव्यां यानि कानि वै ॥ ७ ॥ विस्तरेण न शक्यन्ते वक्तुं वर्षशतैरपि ॥ प्रथमं पुष्करं तीर्थं नैमिषारण्यमेव च ॥ ८ ॥ प्रयागं च प्रवक्ष्यामि धर्मारण्यं द्विजोत्तमाः ॥ धेनुकं चम्पकारण्यं सैन्धवारण्यमेव च ॥ ९ ॥ पुण्यं च सगरारण्यं दण्डकारण्यमेव च ॥ गया प्रभासं श्रीतीर्थं दिव्यं कनखलं तथा ॥ १० ॥ भृगुतुङ्गं हिरण्याक्षं भीमारण्यं कुशस्थली ॥ लोहार्गलं सकेदारं मन्दरारण्यमेव च ॥ ११ ॥ महालयं कोटितीर्थं सर्व्वपापहरं तथा ॥ रूपतीर्थं शूकरञ्च चक्रतीर्थं महाफलम् ॥ १२ ॥ व्यासतीर्थं सोमतीर्थं तीर्थं शाखोटकं तथा ॥ तीर्थं कोकामुखं पुण्यं वदरीशैलमेव च ॥ १३ ॥ सोमतीर्थं तुङ्गकूटं तीर्थं स्कन्दाश्रमं तथा ॥ सूर्यप्रभं धेनुसरः सतमायुष्मिकं तथा ॥ १४ ॥ धर्म्मोद्भवं कोटितीर्थं सार्व्वकामिकमेवच ॥ सूर्यप्रभं महाकुण्डं तीर्थं सोमाभिषेचनम् ॥ १५ ॥ महाश्रोत्रं कोरकं च पञ्चधारं त्रिधारकम् ॥ सप्तधारैकधारं च तीर्थं चामरकण्टकम् ॥ १६ ॥ शालग्रामञ्चक्रतीर्थं कदलीह्रदमुत्तमम् ॥ विद्युत्प्रभं देवह्रदं तीर्थं विष्णुप्रभन्तथा ॥ १७ ॥ शङ्खप्रभं देवकुण्डं तीर्थं वज्रायुधं तथा ॥ वस्त्रापदं बर्हपदं लोकारोहणमेव च ॥ १८ ॥ स्वयंवटं भद्रवलं कौशांबञ्च दिवाकरम् ॥ द्वीपं सारस्वतन्देवं विजयं कामजं तथा ॥ ॥ १९ ॥ सोल्लयाङ्गोपचारञ्च चवरम्बनपूर्णवत् ॥ स्नानकुण्डं प्रयागं च गुहाविष्णुपदन्तथा ॥ २० ॥ कन्याकुण्डं वायुकुण्डं जंबूमार्गन्तथोत्तमम् ॥ गभस्तितीर्थञ्च तथा ययातिपत्तनं शुचि ॥ २१ ॥ कोटितीर्थं भद्रवटं महाकालवनं तथा ॥ नर्मदा च परंतीर्थं तीर्थवीजं तथार्बुदम् ॥ ॥ २२ ॥ पञ्चतीर्थं सवासिष्टं तीर्थं वैप्रियसंज्ञकम् ॥ तीर्थञ्च वार्धकं नाम तथा पञ्जिरकं शुभम् ॥ २३ ॥ सुतीर्थं ब्रह्मरुद्रञ्च तीर्थं कन्याकुमारिका ॥ शक्रतीर्थं पञ्चनदं रेणुकातीर्थमेव च ॥२४॥ पैतामहञ्च विमलं रौद्रपादं तथोत्तमम् ॥ मणिमन्तञ्च कामाख्यं कृष्णतीर्थं कुलिङ्गकम् ॥२५॥ ॥ श्रीशक्रयजनञ्चैव तथैव ब्रह्मवालुका ॥ पुण्यं व्यासं पुण्डरीकं मणिमन्थं तथोत्तमम् ॥ २६ ॥ दीर्घमन्तं हंसपादं तीर्थञ्च शयनं तथा ॥ दशाश्वमेधं केदारं तमसोद्भेदमेव च ॥ २७ ॥ रुद्रकूपं संयमनी तीर्थं संत्रावनासिकम् ॥ स्यमन्तपञ्चकं तीर्थं ब्रह्मतीर्थं सुदर्शनम् ॥ २८ ॥ सततं

पृथिवीतीर्थं पारिप्लवपृथूदकौ ॥ दशाश्वमेधिकं तीर्थं साक्षिदं विजयं तथा ॥ २९ ॥ कोटितीर्थं पंचनदं वाराहं यक्षिणीह्रदम् ॥ पुण्डरीकं सोमतीर्थं मुञ्जावटरथोत्तमम् ॥ ३० ॥ बदरीवनमासीनं बबूरवणमेव च ॥ स्वर्च्छोंकद्वारकं तीर्थं कपिलातीर्थमेव च ॥ ३१ ॥ सूर्यतीर्थं वरुस्थानं भवा[illegible]न मेव च ॥ तीर्थं च यक्षराक्षस्यं ब्रह्मतीर्थं सुतीर्थकम् ॥ ३२ ॥ कामेश्वरं मातृतीर्थं तीर्थं शातवनं तथा ॥ स्थानं भौमस्य हंसस्य सारसं सरसं तथा ॥ ३३ ॥ दशाश्वमेधं केदारं ब्रह्मज्ञम्व रमेवच ॥ सप्तर्षिकुण्डं च तथा तीर्थं देव्याः सुसंयतम् ॥३४ ॥ इहास्पदं कोटिकृतं किंवानं किंजयं तथा ॥ कारण्डवन्तु त्रिश्वं च त्रिविष्टपमथापरम् ॥ ३५ ॥ पाणिखातं मिश्रकं च मधुकंटमनोमये ॥ कौशिकी देवतीर्थं च कन्यातीर्थमथोत्तमम् ॥ ॥ ३६ ॥ ब्रह्मतीर्थं मनस्तीर्थं तीर्थं चैवात्र पावनम् ॥ सौगन्धिकं वनञ्चैव मणितीर्थं सरस्वती ॥ ३७ ॥ ईशानतीर्थं प्रवरं पावनं पंचयज्ञकम् ॥ त्रिशूलधारं माहेन्द्रं देवस्थानं महालयम् ॥ ३८ ॥ शाकम्भरी देवतीर्थं सुवर्णाख्यं कपीमदम् ॥ क्षीरेश्वरं विरूपाक्षं भृगुतीर्थं कुशोद्भवम् ॥ ३९ ॥ ब्रह्मावर्त्तं ब्रह्मयोनिर्नीलपर्व्वतमेव वा ॥ भद्रकर्णं ह्रदञ्चैव शक्रकर्णं ह्रदं तथा ॥ ४० ॥ सप्तसारस्वतं चैव तीर्थमौशनसं तथा ॥ कपालमोचनं चैव अवकीर्णं च पंचकम् ॥ ४१ ॥ चतुःसामुद्रिकं चैव सत्कांचनसहास्रिकम् ॥ रेणुकं पंचकूटकं विमोचनमथैनसान् ॥ ४२ ॥ स्थाणुतीर्थं कुरोस्तीर्थं स्वर्गद्वारं कुशध्वजम् ॥ विश्वेश्वरं वामकरं तथा नारायणाश्रमम् ॥ ४३ ॥ गंगाह्रदं वटं चैव बदरीपावनं तथा ॥ इन्द्रमार्गणकेशत्रं जिग्किवास मेव च ॥ ४४ ॥ सोमतीर्थञ्च भो विप्राः कोटितीर्थञ्च पुण्यदम् ॥ कोटितीर्थस्थली चैव भद्रकालीह्रदं तथा ॥ ४५ ॥ अरुन्धतीवनं चैव ब्रह्मावर्त्तं तथोत्तमम् ॥ अश्वदेवी कुब्जवनं यमुनाप्रभवं तथा ॥४६॥ वीरप्रमोक्षं सिद्धार्थं मायाविद्योद्भवं तथा ॥ महाह्रदो वेतासिका रूपं सुन्दरिकाश्रमम् ॥ ॥ ४७ ॥ ब्रह्माणी सुमहत्तीर्थं गंगोद्भवसरस्वती ॥ तीर्थञ्च वाहुका नाम विमलाशोकमेव च ॥ ४८ ॥ गौतमैरावतीतीर्थं तीर्थं शतसहस्रिकम् ॥ भर्तृस्थानं कोटितीर्थं वरा चैवाथ कापिली ॥ ४९ ॥ तीर्थं पञ्चनदं चैव मार्कण्डेयस्य धीमतः ॥ सोमतीर्थं शिवोदञ्च तीर्थं मत्स्योदरी तथा ॥५०॥ सूर्य्यप्रभं सूर्य्यतीर्थं सोमकं वनमेव च ॥ अरुणास्पदं वामनकं सूर्यतीर्थं सवालुकम् ॥ ५१ ॥ तीर्थं चैवाविमुक्ताख्यं नीलकण्ठह्रदं तथा ॥ पिशाचमोचनं चैव सुभद्राह्रदमेव च ॥ ५२ ॥ कुण्डं हि विमलं तस्य तीर्थञ्चण्डीश्वरस्य च ॥ श्रेष्ठस्थानह्रदं चैव समुद्रं कूपमेव च ॥ ५३ ॥ जैगीषव्यवनं चैव हरिकेशवनं तथा ॥ अजामुखसरश्चैव घण्टाकर्णह्रदं तथा ॥ ५४ ॥ पुण्डरीकह्रदश्चैव वापिका कर्कोटकस्य च ॥ श्मशानस्तम्भं कुम्भञ्च विनायकह्रदं तथा ॥५५॥ कपं सिद्धोद्भवञ्चैव पुण्यं ब्रह्मसरस्तथा ॥ भद्रावासं तथा तीर्थं नागतीर्थं ससोमकम् ॥५६॥ भक्तह्रदं क्षीरसरः प्रेत[illegible] [illegible]कम्॥

ब्रह्मावर्त्तं कुशावर्त्तं दधिकर्णोदयात्मकम् ॥५७॥ शृङ्गतीर्थं महातीर्थं तीर्थश्रेष्ठं महानदी ॥ दिव्यं ब्रह्मसरः पुण्य गयाशीर्षाक्षयम्वटम् ॥५८॥ दक्षिण श्चोत्तरं चैव गोमयं हयशान्तिकम् ॥ कपिलाह्रदं गृध्रकूटं सावित्रीह्रदमेव च ॥ ५९ ॥ अघनाशनं गीतवनं योनिद्वारञ्च धेनुकम् ॥ धन्वकं लोहिका रण्यञ्च मातङ्गह्रदमेव च ॥६०॥ पितृकूपं रुद्रकूपं मतितीर्थं सुमालिनम् ॥ ब्रह्मस्थानं सप्तकुण्डं मणिरत्नह्रदं तथा ॥ ६१ ॥ मुद्गलस्याश्रमञ्चैव मुद्गल ह्रदमेव च ॥ तीर्थं जनककूपाख्यं पुण्यं विनशनं तथा ॥६२॥ शोकाख्यं भारतं चैव तीर्थं ज्येष्ठालिकं तथा ॥ विश्वेश्वरं पुण्यशतं कन्यासंवेधमेव च ॥६३॥ निधिरामभवञ्चैव वसिष्ठाश्रममेव च ॥ देवकूटञ्च कूपञ्च कौशिकाश्रममेव च॥६४॥कुलकर्णह्रदं चैव कौशिकीद्रुममेव च ॥ धर्म्मतीर्थं काञ्चनं च तीर्थमौद्दालकं तथा ॥ ६५ ॥ दण्डात्मा मालिनी तीर्थं तीर्थं च वनचण्डिका ॥ सन्ध्यातीर्थं कालतीर्थं कपिलालोहितार्णवम् ॥६६ ॥ शोणोद्भ वं वंशगुल्मं रामभङ्गीकतीर्थकम् ॥ पुण्यावर्तह्रदं श्रीमत्तीर्थं बदरिकाश्रमम् ॥ ६७ ॥ रामतीर्थं वितस्ता च मेरुजातीयमेव च ॥ रोहिण्याः कूपव रदामिन्द्रद्युम्नसरस्तथा ॥ ६८ ॥ सावसर्गं समाहेन्द्रं श्रीतीर्थं श्रीनदी तथा ॥ इषुतीर्थं वार्षिकं च कौबेरह्रदमेव च ॥ ६९ ॥ कन्यातीर्थं च गोकर्णं गोपतिस्थानमेव च ॥ सम्वर्त्तं चापि विश्वासं सप्तगोदावरीह्रदम् ॥ ७० ॥ वदरीह्रदमन्यच्च ब्रह्मस्थानविवर्द्धनम् ॥ जातीह्रदं देवह्रदं कुशप्रथनमे व च ॥ ७१ ॥ सर्व्वदेवव्रतञ्चैव कन्याश्रमह्रदं तथा ॥ महाराजह्रदं पुण्यं शक्रतीर्थं च कुन्दकम् ॥ ७२ ॥ अङ्गारतीर्थञ्च तथा रुद्रारण्यकमेव च ॥ मेधाविनं देवह्रदं तीर्थञ्चामरवर्त्तनम् ॥ ७३ ॥ मन्दाकिनीह्रदं पुण्यं क्षमम्माहेश्वरं तथा ॥ गंगातीर्थं त्रिपुरुपं भीमताण्डववामुखम् ॥ ७४ ॥ पृथुकूटं शाल्वकूटं शोणं रोहितकं पुनः ॥ कपिलाह्रदं समाल्यञ्च वासिष्ठं कपिलाह्रदम् ॥ ७५ ॥ तथान्यद्वालखिल्यानां सप्तर्षीणां तथ परम् ॥ तथाऽन्यच्च महर्षीणामखण्डितह्रदं तथा ॥ तीर्थेष्वेतेषु विधिवत्सम्यक्श्रद्धासमन्वितः ॥ ७६ ॥ स्नानं करोति यो मर्त्यः सोपवासो जितेन्द्रियः॥ देवानृषीन्मनुष्यां श्च पितृन्संतर्प्य च क्रमात् ॥ ७७ ॥ अभ्यर्च्य देवतास्तत्र स्थित्वा च रजनीत्रयम् ॥ पृथक्पृथक्फलं तेषु प्रतितीर्थेषु भो द्विजाः ॥ ७८ ॥ प्राप्नोति हय मेधस्य नरो नास्त्यत्र संशयः॥ यस्त्विदं शृणुयान्नित्यं तीर्थमाहात्म्यमुत्तमम्॥पठेच्च श्रावयेद्वाऽपि सर्वपापैः प्रमुच्यते॥७९॥इति श्रीब्रह्मपुरा० तीर्थनाम माहात्म्यवर्णनं नाम त्रयोविंशोऽध्यायः॥२३॥मुनय ऊचुः ॥ पृथिव्यामुत्तमां भूमिं धर्मकामार्थमोक्षदाम्॥तीर्थानामुत्तमं तीर्थं ब्रूहि नो वदतां वर ॥१॥ ॥ लोमहर्षण उवाच ॥ इमं प्रश्नं मम गुरुं पप्रच्छुर्मुनयः पुरा ॥ तमहं संप्रवक्ष्यामि यत्पृच्छध्वं द्विजोत्तमाः ॥ २ ॥ स्वाश्रमे सुमहापुण्ये नाना पुष्पोपशोभिते ॥ नानाद्रुमलताकीर्णे नानामृगगणैर्युते ॥ ३ ॥ पुन्नागैः कर्णिकारैश्च सरलैर्देवदारुभिः ॥ शालैस्तालैस्तमालैश्च पनसैर्धवखदि

दिरैः ॥ ४ ॥ पाटलाशोकवकुलैः करवीरैः सचम्पकैः ॥ अन्यैश्च विविधैर्वृक्षैर्नानापुष्पोपशोभितैः ॥ ५ ॥ कुरुक्षेत्रे समासीनं व्यासं मतिमतां वरम् ॥ महाभारतकर्तारं सर्वशास्त्रविशारदम् ॥ ६ ॥ अध्यात्मनिष्ठं सर्वज्ञं सर्वभूतहिते रतम् ॥ पुराणागमवक्तारं वेदवेदाङ्गपारगम् ॥ ७ ॥ पराशरसुतं शान्तं पद्मपत्रायतेक्षणम् ॥ द्रष्टुमभ्याययुः प्रीत्या मुनयः शंसितव्रताः ॥ ८ ॥ कश्यपो जमदग्निश्च भरद्वाजोऽथ गौतमः ॥ वसिष्ठो जैमिनिर्धौम्यो मार्कण्डेयश्च वाल्मिकिः ॥ ९ ॥ विश्वामित्रः शतानन्दो वात्स्यो गर्गोऽथ आसुरिः ॥ सुमन्तुर्भार्गवो नाम कण्वो मेधातिथिर्गुरुः ॥ १० ॥ माण्डव्य श्च्यवनो धूम्रो ह्यसितो देवलस्तथा ॥ मौद्गल्यस्तृणबाहुश्च पिप्पलादोऽकृतव्रणः ॥ ११ ॥ संवर्तः कौशिको रैभ्यो मैत्रेयो हारितस्तथा ॥ शाण्डिल्यश्च तथाऽगस्त्यो दुर्वासा लोमशस्तथा ॥ १२ ॥ नारदः पर्वतश्चैव वैशंपायनगालवौ ॥ भास्करिः पूरणिः सूतः पुलस्त्यः कापिलस्तथा ॥ १३ ॥ उलूकः पुलहो वायुर्देवस्थानश्च तुंबुरुः ॥ सनत्कुमारः पैलश्च कृष्णः कृष्णानुभौतिकः ॥ १४ ॥ एतैर्मुनिवरैश्चान्यैर्वृतः सत्यवतीसुतः ॥ रराज स मुनि धीमान्नक्षत्रैरिव चन्द्रमाः ॥ १५ ॥ तानागतान्मुनीन्सर्वान्पूजयामास वेदवित् ॥ तेऽपि तं प्रतिपूज्यैव कथां चक्रुः परस्परम् ॥ १६ ॥ कथान्ते ते मुनिश्रेष्ठाः कृष्णं सत्यवतीसुतम् ॥ पप्रच्छुः संशयं सर्वे तपोवननिवासिनः ॥ १७ ॥ मुनय ऊचुः ॥ मुने वेदांश्च शास्त्राणि पुराणागमभारतम् ॥ भूतं भव्यं भविष्यं च सर्वं जानासि वाङ्मयम् ॥ १८ ॥ कष्टेऽस्मिन्दुःखबहुले निःसारे भवसागरे ॥ रागग्राहाकुले रौद्रे विषयोदकसंप्लवे ॥ १९ ॥ इन्द्रियावर्तकलिले दृष्टोर्मिशतसंकुले ॥ मोहपङ्काविले दुर्गे लोभगम्भीरदुस्तरे ॥ २० ॥ निमज्जज्जगदालोक्य निरालम्बमचेतनम् ॥ पृच्छामस्त्वां महाभागं ब्रूहि नो मुनिसत्तम ॥ २१ ॥ श्रेयः किमत्र संसारे भैरवे लोमहर्षणे ॥ उपदेशप्रदानेन लोकानुद्धर्तुमर्हसि ॥ २२ ॥ दुर्लभं परमं क्षेत्रं वक्तुमर्हसि मोक्षदम् ॥ पृथिव्यां कर्मभूमिं च श्रोतुमिच्छामहे वयम् ॥ २३ ॥ कृत्वा किल नरः सम्यक्कर्म भूमौ यथोदितम् ॥ प्राप्नोति परमां सिद्धिं नरकं च विकर्मतः ॥ २४ ॥ मोक्षक्षेत्रे तथा मोक्षं प्राप्नोति परमं सुधीः ॥ तस्माद्ब्रूहि महाप्राज्ञ यत्पृष्टोऽसि द्विजोत्तमैः ॥ २५ ॥ श्रुत्वा तु वचनं तेषां मुनीनां भावितात्मनाम् ॥ व्यासः प्रोवाच मतिमान्भूतभव्यभविष्यवित् ॥ २६ ॥ व्यास उवाच ॥ शृणुध्वं मुनयः सर्वे वक्ष्यामि यदि पृच्छथ ॥ यः संवादोऽभवत्पूर्वमृषीणां ब्राह्मणा सह ॥ २७ ॥ मेरुपृष्ठे तु विस्तीर्णे नानारत्नविभूषिते ॥ नानाद्रुमलताकीर्णे नानापुष्पोपशोभिते ॥ २८ ॥ नानापक्षिरुते रम्ये नानाप्रसवसंकुले ॥ नानासत्वसमाकीर्णे नानाश्चर्यसमन्विते ॥ २९ ॥ नानावर्णशिलाकीर्णे नानाधातुविभूषिते ॥ नानामुनिजनाकीर्णे नानाश्रमसमन्विते ॥ ३० ॥ तत्राऽऽसीनं जगन्नाथं जगद्योनिं चतुर्मुखम् ॥ जगत्पतिं जगद्वन्द्यं जगदाधार

मीश्वरम् ॥ ३१ ॥ देवदानवगन्धर्वैर्यक्षविद्याधरोरगैः ॥ मुनिसिद्धाप्सरोभिश्च वृतमन्यैर्दिवालयैः ॥ ३२ ॥ केचित्स्तुवन्ति तं देवं केचिद्ध्यायन्ति चाग्रतः ॥ केचिद्वाद्यानि वाद्यन्ते केचिन्नृत्यन्ति चापरे ॥ ३३ ॥ एवं प्रमुदिते काले सर्वभूतसमागमे ॥ नानाकुसुमगन्धाढ्ये दक्षिणानिलसेविते ॥ ३४ ॥ भृग्वाद्या मुनयो देवं प्रणिपत्य पितामहम् ॥ इममर्थमृषिवराः पप्रच्छुः पितरं द्विजाः ॥ ३५ ॥ ऋषय ऊचुः ॥ भगवञ्छ्रोतुमिच्छामः कर्मभूमिं महीतले ॥ वक्तुमर्हसि देवेश मोक्षक्षेत्रं च दुर्लभम् ॥ ३६ ॥ व्यास उवाच ॥ तेषां वचनमाकर्ण्य प्राह ब्रह्मा सुरेश्वरः ॥ पप्रच्छुस्ते यथा प्रश्नं तत्सर्वं मुनिसत्तमाः ॥ ३७ ॥ ॥ इति श्रीब्रह्मपुराणे स्वयंभूब्रह्मर्षिसंवादे प्रश्ननिरूपणं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥ ॥ ब्रह्मोवाच ॥ शृणुध्वं मुनयः सर्वे यद्वो वक्ष्यामि सांप्रतम् ॥ पुराणं वेदसंबद्धं भुक्तिमुक्तिप्रदं शुभम् ॥ १ ॥ पृथिव्यां भारतं वर्षं कर्मभूमिरुदाहृता ॥ कर्मणः फलभूमिश्च स्वर्गं च नरकं तथा ॥ २ ॥ तस्मिन्वर्षे नरः पापं कृत्वा धर्मं च भो द्विजाः ॥ अवश्यं फलमाप्नोति अशुभस्य शुभस्य च ॥ ३ ॥ ब्राह्मणाद्याः स्वकं कर्म कृत्वा सम्यक्सुसंयताः ॥ प्राप्नुवन्ति परां सिद्धिं तस्मिन्वर्षे न संशयः ॥ ४ ॥ धर्मं चार्थं च कामं च मोक्षं च द्विजसत्तमाः ॥ प्राप्नोति पुरुषः सर्वं तस्मिन्वर्षे तु संयतः ॥ ५ ॥ इन्द्राद्याश्च सुराः सर्वे तस्मिन्वर्षे द्विजोत्तमाः ॥ कृत्वा सुशोभनं कर्म देवत्वं प्रतिपेदिरे ॥ ६ ॥ अन्येऽपि लेभिरे मोक्षं पुरुषाः संयतेन्द्रियाः ॥ तस्मिन्वर्षे बुधाः शान्ता वीतरागा विमत्सराः ॥ ७ ॥ ये चापि स्वर्गे तिष्ठन्ति विमानेन गतज्वराः ॥ तेऽपि कृत्वा शुभं कर्म तस्मिन्वर्षे दिवं गताः ॥ ८ ॥ निवासं भारते वर्षे आकांक्षन्ति सदा सुराः ॥ स्वर्गापवर्गफलदे तत्पश्यामः कदा वयम् ॥ ९ ॥ मुनय ऊचुः ॥ यदेतद्भवता प्रोक्तं कर्म नान्यत्र पुण्यदम् ॥ पापाय वा सुरश्रेष्ठ वर्जयित्वा च भारतम् ॥ १० ॥ ततः स्वर्गश्च मोक्षश्च मध्यमं तच्च गम्यते ॥ न वान्यत्र च मर्त्यानां भूमौ कर्म विधीयते ॥ ११ ॥ तस्माद्विस्तरतो ब्रह्मन्नस्माकं भारतं वद ॥ यदि तेऽहि दयाऽस्मासु यथावस्थितिरेव च ॥ १२ ॥ तस्माद्वर्षमिदं नाथ ये वाऽस्मिन्वर्षपर्वताः ॥ भेदाश्च तस्य वर्षस्य ब्रूहि सर्वानशेषतः ॥ १३ ॥ ब्रह्मोवाच ॥ शृणुध्वं भारतं वर्षं नवभेदेन भो द्विजाः ॥ समुद्रान्तरिता ज्ञेयास्ते समाश्च परस्परम् ॥ १४ ॥ इन्द्रद्वीपः कशेरुश्च ताम्रवर्णो गभस्तिमान् ॥ नागद्वीपस्तथा सौम्यो गान्धर्वो वारुणस्तथा ॥ १५ ॥ अयं तु नवमस्तेषां द्वीपः सागरसंवृतः ॥ योजनानां सहस्रं द्वीपोऽयं दक्षिणोत्तरः ॥ १६ ॥ पूर्वे किराता यस्याऽऽसन्पश्चिमे यवनास्तथा ॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चात्र स्थिता द्विजाः ॥ १७ ॥ इज्यायुद्धवणिज्याद्यैः कर्मभिः कृतपावनाः ॥ तेषां संव्यवहारश्च एभिः कर्मभिरिष्यते ॥ १८ ॥ स्वर्गापवर्गहेतुश्च पुण्यं पापं च वै तथा ॥ महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः ॥ १९ ॥

विन्ध्यश्च पारियात्रश्च सप्तैवात्र कुलाचलाः ॥ तेषां सहस्रशश्चान्ये भूधरा ये समीपगाः ॥ २० ॥ विस्तारोच्छ्रयिणो रम्या विपुलाश्चित्रसानवः ॥ कोलाहलः स वैभ्राजो मन्दरो दर्दलाचलः ॥ २१ ॥ वाताध्वगो दैवतश्च मैनाकः सुरसस्तथो ॥ तुङ्गप्रस्थो नागगिरिर्गोधनः पाण्डुराचलः ॥ २२ ॥ पुष्पगिरिर्वैजयन्तो रैवतोऽर्बुद एव च ॥ ऋष्यमूकस्तु गोमन्थः कृतशैलः कृताचलः ॥ २३ ॥ श्रीपर्वतश्चकोरश्च शतशोऽन्ये च पर्वताः ॥ तैर्विमिश्रा जनपदा म्लेच्छाद्याश्चैव भागशः ॥ २४ ॥ तैः पीयन्ते सरिच्छ्रेष्ठास्ता बुध्यध्वं द्विजोत्तमाः ॥ गङ्गा सरस्वती सिन्धुश्चन्द्रभागा तथाऽपरा ॥ २५ ॥ यमुना शतद्रुर्विपाशा वितस्तैरावती कुहूः ॥ गोमती धूतपापा च बाहुदा च दृषद्वती ॥ २६ ॥ विपाशा देविका चक्षुर्निष्ठीवा गण्डकी तथा ॥ कौशिकी चाऽऽपगा चैव हिमवत्पादनिःसृताः ॥२७॥ देवस्मृतिर्देववती वातघ्नी सिन्धुरेव च ॥ वेण्या तु चन्दना चैव सदानीरा मही तथा ॥ २८ ॥ चर्मण्वती वृषी चैव विदिशा वेत्रवत्यपि ॥ शिप्रा ह्यवन्ती च तथा पारियात्रानुगाः स्मृताः ॥ २९ ॥ शोणा महानदी चैव नर्मदा सुरथा क्रिया ॥ मन्दाकिनी दशार्णा च चित्रकूटा तथाऽपरा ॥ ३० ॥ चित्रोत्पला वेत्रवती करमोदा पिशाचिका ॥ तथाऽन्याऽतिलघुश्रोणी विपाशा शैवला नदी ॥ ३१ ॥ समेरुजा शुक्तिमती शकुनी त्रिदिवा क्रमुः ॥ ऋक्षपादप्रसूता वै तथाऽन्या वेगवाहिनी ॥ ३२ ॥ शिप्रा पयोष्णी निर्विन्ध्या तापी चैव सरिद्वरा ॥ वेणा वैतरणी चैव सिनीवाली कुमुद्वती ॥ ३३ ॥ तोया चैव महागौरी दुर्गा चान्तःशिला तथा ॥ विन्ध्यपाद प्रसूतास्ता नद्यः पुण्यजलाः शुभाः ॥३४॥ गोदावरी भीमरथी कृष्णवेणा तथाऽऽपगा ॥ तुङ्गभद्रा सुप्रयोगा तथाऽन्या पापनाशिनी ॥३५॥ सह्यपाद विनिष्क्रान्ता इत्येताः सरितां वराः ॥ कृतमाला ताम्रपर्णी पुष्पवत्युत्पलावती ॥ ३६ ॥ मलयाद्रिसमुद्भूताः पुण्याः शीतजलास्त्विमाः॥ पितृसोमर्पि कुल्या च वञ्जुला त्रिदिवा च या ॥ ३७ ॥ लाङ्गलिनी वंशकरा महेन्द्रप्रभवाः स्मृताः ॥ सुविकाला कुमारी च मनुगा मन्दगामिनी ॥ ३८ ॥ क्षया पलाशिनी चैव शुक्तिमत्प्रभवाः स्मृताः ॥ सर्वाः पुण्याः सरस्वत्यः सर्वा गङ्गाः समुद्रगाः ॥ ३९ ॥ विश्वस्य मातरः सर्वाः सर्वाः पापहराः स्मृताः ॥ अन्याः सहस्रशः सन्ति क्षुद्रनद्यो द्विजोत्तमाः ॥ ४० ॥ प्रावृट्कालवहाः सन्ति सदा कालवहाश्च याः ॥ मत्स्याः कुमुदमाल्याश्च क्रतुलाः काशिकोशलाः ॥ ४१ ॥ अन्ध्रकाश्च कलिङ्गाश्च मशकाश्च वृकैः सह ॥ मध्यदेशा जनपदाः प्रायशोऽमी प्रकीर्तिताः ॥ ४२ ॥ सह्यस्य चोत्तरे यस्तु यत्र गोदावरी-नदी ॥ पृथिव्यामपि कृत्स्नायां स प्रदेशो मनोरमः ॥ ४३ ॥ गोवर्धनपुरं रम्यं भार्गवस्य महात्मनः ॥ वाहीकराटधानाश्च सुतीराः कालतोयदाः ॥ ४४ ॥ अपरान्ताश्च शूद्राश्च बाह्लिकाश्च सकेरलाः ॥ गान्धारा यवनाश्चैव

सिन्धुसौवीरमद्रकाः ॥ ४५ ॥ शतद्रुहाः कलिंगाश्च पारदा हरिभूषिकाः ॥ माठराश्चैव कनकाः कैकेया दम्भमालिकाः ॥ ४६ ॥ क्षत्रियोपमदे
शाश्च वैश्यशूद्रकुलानि च ॥ काम्बोजाश्चैव विप्रेन्द्रा बर्बराश्च सलौकिकाः ॥ ४७ ॥ वीराश्चैव तुषाराश्च पह्लवाधायता नराः ॥ आत्रेयाश्च
भरद्वाजाः पुष्कलाश्च दशेरकाः ॥ ४८ ॥ लम्पकाः शुनशोकाश्च कुलिका जाङ्गलैः सह ॥ औषध्यश्चलचन्द्राश्च किरातानां च जातयः ॥ ४९ ॥
तोमरा हंसमार्गाश्च काश्मीराः करुणास्तथा ॥ शूलिकाः कुहकाश्चैव मागधाश्च तथैव च ॥ ५० ॥ एते देशा उदीच्यास्तु प्राच्यान्देशान्निबोधत ॥
अन्धा वामङ्कुराकाश्च वल्लकाश्च मखान्तकाः ॥५१॥ तथाऽपरेऽङ्गा वङ्गाश्च मलदा मालवर्तिकाः ॥ भद्रतुङ्गाः प्रतिजया भार्याङ्गाश्चापमर्दकाः ॥५२॥
प्राग्ज्योतिषाश्च मद्राश्च विदेहास्ताम्रलिप्तकाः ॥ मल्ला मगधका नन्दाः प्राच्या जनपदास्तथा ॥ ५३ ॥ अथापरे जनपदा दक्षिणापथवासिनः ॥
पूर्णाश्च केवलाश्चैव गोलांगूलास्तथैव च ॥ ५४ ॥ ऋषिका मुषिकाश्चैव कुमारा रामठाः शकाः ॥ महाराष्ट्रा माहिषकाः कलिङ्गाश्चैव सर्वशः ॥
॥ ५५ ॥ आभीराः सह वैशिक्या अटव्याः सरवाश्च ये ॥ पुलिन्दाश्चैव मौलेया वैदर्भा दण्डकैः सह ॥ ५६ ॥ पौलिका मौलिकाश्चैव अश्मका
भोजवर्धनाः ॥ कौलिकाः कुन्तलाश्चैव दम्भका नीलकालकाः ॥ ५७ ॥ दाक्षिणात्यास्त्वमी देशा ह्यपरान्तान्निबोधत ॥ शूर्पारकाः कालिधना
लोलास्तालकटैः सह ॥ ५८ ॥ इत्येते ह्यपरान्ताश्च शृणुध्वं विन्ध्यवासिनः ॥ मलजाः कर्कशाश्चैव मेलकाश्चोलकैः सह ॥ ५९ ॥ उत्तमार्णा
दशार्णाश्च भोजाः किष्किन्धकैः सह ॥ तोषलाः कोशलाश्चैव त्रैपुरा वैदिशास्तथा ॥ ६० ॥ तुम्बुरास्तु चराश्चैव यवनाः पवनैः सह ॥ अभया
रुण्डिकेराश्च चर्चरा होत्रधर्तयः ॥ ६१ ॥ एते जनपदाः सर्वे तत्र विन्ध्यनिवासिनः ॥ अतो देशान्प्रवक्ष्यामि पर्वताश्रयिणश्च ये ॥ ६२ ॥ नीहा
रास्तुषमार्गाश्च कुरवस्तुङ्गणाः खसाः ॥ कर्णप्रावरणाश्चैव ऊर्णा दर्वाः सकुच्चकाः ॥ ६३ ॥ चित्रमार्गा मालवाश्च किरातास्तोमरैः सह ॥ कृतत्रेता
दिकश्चात्र चतुर्युगकृतो विधिः ॥ ६४ ॥ एवं तु भारतं वर्षं नवसंस्थानसंस्थितम् ॥ दक्षिणे परतो यस्य पूर्वे चैव महोदधिः ॥ ६५ ॥ हिमवानुत्तरे
णास्य कार्मुकस्य यथा गुणः ॥ तदेतद्भारतं वर्षं सर्वबीजं द्विजोत्तमाः ॥ ६६ ॥ ब्रह्मत्वममरेशत्वं देवत्वं मरुतां तथा ॥ मृगयक्षाप्सरोयोनिं तद्वत्सर्प
सरीसृपाः ॥ ६७ ॥ स्थावराणां च सर्वेषामितो विप्राः शुभाशुभैः ॥ प्रयान्ति कर्मभूर्विप्रा नान्या लोकेषु विद्यते ॥ ६८ ॥ देवानामपि भो विप्राः
सदैवैष मनोरथः ॥ भारतं भवमाप्स्यामो देवत्वात्प्रच्युताः क्षितौ ॥ ६९ ॥ मानुष्यं कुरुते यत्तु तन्न शक्यं सुरासुरैः ॥ तत्कर्म निरतैस्तैस्तु तत्क
र्मक्षपणोन्मुखैः ॥ ७० ॥ न भारतसमं वर्षं पृथिव्यामस्ति भो द्विजाः ॥ यत्र विप्रादयो वर्णाः प्राप्नुवन्त्यभिवाञ्छितम् ॥७१॥ धन्यास्ते भारते वर्षे

जायन्ते ये नरोत्तमाः ॥ धर्मार्थकाममोक्षाणां प्राप्नुवन्ति महाफलम् ॥ ७२ ॥ प्राप्यते यत्र तपसः फलं परमदुर्लभम् ॥ सर्वदानफलं चैव सर्व यज्ञफलं तथा ॥ ७३ ॥ तीर्थयात्राफलं सम्यक् गुरुसेवाफलं तथा ॥ देवताराधनफलं गार्हस्थ्ये चैव यत्फलम् ॥ ७४ ॥ यत्र देवाः सदा हृष्टा जन्म वाञ्छन्ति शोभनम् ॥ नानाव्रतफलं चैव नानाशास्त्रफलं तथा ॥ ७५ ॥ अहिंसादिफलं सम्यक्फलं सर्वाभिवाञ्छितम् ॥ ब्रह्मचर्यफलं चैव स्वाध्यायेन च यत्फलम् ॥ ७६ ॥ यत्फलं वनवासेन संन्यासेन च यत्फलम् ॥ इष्टापूर्तफलं चैव तथाऽन्यच्छुभकर्मणाम् ॥ ७७ ॥ प्राप्यते भारते वर्षे न चान्यत्र द्विजोत्तमाः ॥ कः शक्नोति गुणान्वक्तुं भारतस्याखिलान्द्विजाः ॥ ७८ ॥ एवं सम्यङ्मया प्रोक्तं भारतं वर्षमुत्तमम् ॥ सर्वपापहरं पुण्यं धन्यं बुद्धिविवर्धनम् ॥ ७९ ॥ य इदं शृणुयान्नित्यं जपेद्वा नियतेन्द्रियः ॥ सर्वपापैर्विनिर्मुक्तो विष्णुलोकं स गच्छति ॥ ८० ॥ इति श्री ब्रह्मपुराणे स्वयंभ्वृषिसंवादे भारतवर्षानुकीर्तनं नाम पञ्चविंशोऽध्यायः ॥ २५ ॥ ॥ ब्रह्मोवाच ॥ तत्राऽऽस्ते भारते वर्षे दक्षिणोदधिसंस्थितः ॥ ओण्डदेश इति ख्यातः स्वर्गमोक्षप्रदायकः ॥ १ ॥ समुद्रादुत्तरं यावद्रम्यं विरजमण्डलम् ॥ देशोऽसौ गुणशीलानां गुणैः सर्वैरलंकृतः ॥ २ ॥ तत्र देशप्रसूता ये ब्राह्मणाः संयतेन्द्रियाः ॥ तपःस्वाध्यायनिरता वन्द्याः पूज्याश्च ते सदा ॥ ३ ॥ श्राद्धे दाने विवाहे च यज्ञे वाऽऽचार्यकर्मणि ॥ प्रशस्ताः सर्वकार्येषु तत्र देवोद्भवा नराः ॥ ४ ॥ षट्कर्मनिरतास्तत्र ब्राह्मणा वेदपारगाः ॥ इतिहासविदश्चैव पुराणार्थविशारदाः ॥ ५ ॥ सर्वशास्त्रार्थकुशला यज्वानो वीतमत्सराः ॥ अग्निहोत्ररताः केचित्केचित्स्मार्ताग्नितत्पराः ॥ ६ ॥ पुत्रदारधनैर्युक्ता होतारः सत्यवादिनः ॥ निवसन्त्युत्कले पुण्ये यज्ञोत्सवविभूषिते ॥ ७ ॥ इतरेऽपि त्रयो वर्णाः क्षत्रियाद्याः सुसंयताः ॥ स्वकर्मनिरताः शान्तास्तत्र तिष्ठन्ति धार्मिकाः ॥ ८ ॥ कोणादित्य इति ख्यातस्तस्मिन्देवो दिवाकरः ॥ यं दृष्ट्वा भास्करं मर्त्यः सर्वपापैः प्रमुच्यते ॥ ९ ॥ ॥ मुनय ऊचुः ॥ श्रोतुमिच्छाम तद्ब्रूहि क्षेत्रं सूर्यस्य सांप्रतम् ॥ तस्मिन्देशे सुरश्रेष्ठ यत्राऽऽस्ते स दिवाकरः ॥ १० ॥ ॥ ब्रह्मोवाच ॥ लवणस्योदधेस्तीरे पवित्रे सुमनोहरे ॥ सर्वत्र वालुकाकीर्णे देशे सर्वगुणान्विते ॥ ११ ॥ चम्पकाशोकवकुलैः करवीरैः सपाटलैः ॥ पुन्नागैः कर्णिकारैश्च वकुलैर्नागकेसरैः ॥ १२ ॥ तगरैर्धवबाणैश्च अतिमुक्तैः सकुब्जकैः ॥ मालतीकुन्दपुष्पैश्च तथाऽन्यैर्मल्लिकादि[illegible] ॥ १३ ॥ केतकीवनखण्डैश्च सर्वर्तुकुसुमोज्ज्वलैः ॥ कदम्बैर्लकुचैः शालैः पनसैर्देवदारुभिः ॥ १४ ॥ सरलैर्मुचुकुन्दैश्च चन्दनैश्च सितेतरैः ॥ अश्वत्थैः सप्तपर्णैश्च आम्रैराम्रातकैस्तथा ॥ १५ ॥ तालैः पूगफलैश्चैव नारिकेलैः कपित्थकैः ॥ अन्यैश्च विविधैर्वृक्षैः सर्वतः समलंकृतम् ॥ १६ ॥ क्षेत्रं तत्र रवेः पुण्यमास्ते जगति विश्रुतम् ॥ समन्ताद्योजनं साग्रं भुक्तिमुक्तिप्रदायकम् ॥ १७ ॥

आस्ते तत्र स्वयं देवः सहस्रांशुर्दिवाकरः ॥ कोणादित्य इति ख्यातो भुक्तिमुक्तिप्रदायकः ॥ १८ ॥ माघे मासि सिते पक्षे सप्तम्यां संयतेन्द्रियः ॥ कृतोपवासो यस्तत्र स्नात्वा तु मकरालये ॥१९॥ कृतशौचो विशुद्धात्मा स्मरन्देवं दिवाकरम् ॥ सागरे विधिवत्स्नात्वा सूर्योपान्ते समाहितः॥ २० ॥ देवानृषीन्मनुष्यांश्च पितॄन्संतर्प्य च द्विजाः ॥ उत्तीर्य वाससी धौते परिधाय सुनिर्मले ॥ २१ ॥ आचम्य प्रयतो भूत्वा तीरे तस्य महोदधेः ॥ उपविश्योदये काले प्राङ्मुखः सवितुस्तदा ॥ २२ ॥ विलिख्य पद्मं मेधावी रक्तचन्दनवारिणा ॥ अष्टपत्रं केसराढ्यं वर्तुलं चोर्ध्वकर्णिकम् ॥ २३ ॥ तिलतण्डुलतोयं च रक्तचन्दनसंयुतम् ॥ रक्तपुष्पं सदर्भं च प्रक्षिपेत्ताम्रभाजने ॥ २४ ॥ ताम्राभावेऽर्कपत्रस्य पुटे कृत्वा तिलादिकम् ॥ पिधाय तन्मुनिश्रेष्ठाः पात्रं पात्रेण विन्यसेत् ॥ २५ ॥ करन्यासाङ्गविन्यासं कृत्वाऽङ्गैर्हृदयादिभिः[1] ॥ आत्मानं भास्करं ध्यात्वा सम्यक्श्रद्धासमन्वितः ॥ २६ ॥ मध्ये चाग्निदले धीमान्नैर्ऋते श्वसने दले ॥ कामारिगोचरे चैव सुमध्ये चैव पूजयेत् ॥ २७ ॥ प्रभूतं विमलं देवमाराध्य परमं सुखम् ॥ संपूज्य पद्मश्चावाह्य गगनात्तत्र भास्करम् ॥ २८ ॥ कर्णिकोपरि संस्थाप्य ततो मुद्रां प्रदर्शयेत् ॥ कृत्वा स्नानादिकं सर्वं ध्यात्वा तं सुसमाहितः ॥ २९ ॥ सितपद्मोपरि रविं तेजोबिम्बे व्यवस्थितम् ॥ पिंगाक्षं द्विभुजं रक्तं पद्मपत्रारुणाम्बरम् ॥ ३० ॥ सर्वलक्षणसंयुक्तं सर्वाभरणभूषितम् ॥ सुरूपं वरदं शान्तं प्रभामण्डलभूषितम् ॥ ३१ ॥ उद्यन्तं भास्करं दृष्ट्वा सान्द्रसिन्दूरसंनिभम् ॥ ततस्तत्पात्रमादाय जानुभ्यां धरणीं गतः ॥ ३२ ॥ कृत्वा शिरसि तत्पात्रमेकचित्तस्तु वाग्यतः ॥ त्र्यक्षरेण तु मन्त्रेण सूर्यायार्घ्यं निवेदयेत् ॥ ३३ ॥ अदीक्षितस्तु तस्यैव नाम्नैवार्घं प्रयच्छति ॥ श्रद्धया भावयुक्तेन भक्तिग्राह्यो रविर्यतः ॥ ३४ ॥ अग्निनिर्ऋतिवाय्वीशमध्यपूर्वादिदिक्षु च ॥ हृच्छिरश्च शिखावर्मनेत्राण्यस्त्रं च पूजयेत् ॥ ३५ ॥ दत्त्वाऽर्घ्यं गन्धधूपं च दीपं नैवेद्यमेव च ॥ जप्त्वा स्तुत्वा नमस्कृत्वा मुद्रां बद्ध्वा विसर्जयेत् ॥ ३६ ॥ ये चाऽर्घ्यं संप्रयच्छन्ति सूर्याय नियतेन्द्रियाः ॥ ब्राह्मणाः क्षत्रिया वैश्याः स्त्रियः शूद्राश्च संयताः ॥३७॥ भक्तिभावेन सततं विशुद्धेनान्तरात्मना ॥ ते भुक्त्वाऽभिमतान्भोगान्प्राप्नुवन्ति परां गतिम्॥ ॥ ३८ ॥ त्रैलोक्यदीपकं देवं भास्करं गगनेचरम् ॥ ये संस्मरन्ति मनुजास्ते स्युः सुखस्य भाजनम् ॥ ३९ ॥ यावन्न दीयते चार्घ्यं भास्कराय यथोदितम् ॥ तावन्न पूजयेद्विष्णुं शंकरं वा सुरेश्वरम् ॥ ४० ॥ तस्मात्प्रयत्नमास्थाय दद्यादर्घ्यं दिने दिने ॥ आदित्याय शुचिर्भूत्वा पुष्पैर्गन्धैर्मनोरमैः ॥ ४१ ॥ एवं ददाति यश्चार्घ्यं सप्तम्यां सुसमाहितः ॥ आदित्याय शुचिः स्नातः स लभेदीप्सितं फलम् ॥ ४२ ॥ रोगी विमुच्यते रोगाद्वित्ता

[1] "ह्रां हृदयाय नमः, अग्निकोणे । ह्रीं शिरसे नमः, नैर्ऋते । ह्रूं शिखायै नमः, वायव्यां । ह्रैं कवचाय नमः, ऐशाने । ह्रौं नेत्रत्रयाय नमः, आग्नेये । ह्रः अस्त्राय नमः, चतुर्दिक्षु " इति ॥

र्थी लभते धनम् ॥ विद्यां प्राप्नोति विद्यार्थी सुतार्थी सुतवान्भवेत् ॥ ४३ ॥ यं यं काममभिध्यायन्सूर्यायार्घ्यं प्रयच्छति ॥ तस्य तस्य फलं सम्य
क्प्राप्नोति पुरुषः सुधीः ॥ ४४ ॥ स्नात्वैवं सागरे दत्त्वा सूर्यायार्घ्यं प्रणम्य च ॥ नरो वा यदि वा नारी सर्वकामफलं लभेत् ॥ ८५ ॥ ( सूर्य
गङ्गाम्भसि स्नातः कुशैः संसिच्य मूर्धनि ॥ सर्वपापविनिर्मुक्तो नरो याति त्रिविष्टपम् ॥ ) ततः सूर्यालयं गच्छेत्पुष्पमादाय वाग्यतः ॥ प्रविश्य
पूजयेद्भानुं कृत्वा तु त्रिः प्रदक्षिणम् ॥४६॥ तान्त्रिकैर्वैदिकैर्मन्त्रैर्बुधो भानोस्तिथौ तथा ॥ पूजयेत्परया भक्त्या कोणार्कं मुनिसत्तमाः ॥ गन्धैः पुष्पै
स्तथा दीपैर्धूपैर्नैवेद्यकैरपि ॥ ४७ ॥ दण्डवत्प्रणिपातैश्च जयशब्दैस्तथा स्तवैः ॥ एवं संपूज्य तं देवं सहस्रांशुं जगत्प्रभुम् ॥ ४८ ॥ दशानामश्वमे
धानां फलं प्राप्नोति मानवः ॥ सर्वपापविनिर्मुक्तो युवा दिव्यवपुर्धरः ॥ ४९ ॥ सप्तावरान्सप्त परान्वंशानुद्धृत्य भो द्विजाः ॥ विमानेनार्कवर्णेन काम
गेन सुवर्चसा ॥ ५० ॥ उपगीयमानो गन्धर्वैः सूर्यलोकं स गच्छति ॥ भुक्त्वा तत्र वरान्भोगान्यावदाभूतसंप्लवम् ॥ ५१ ॥ पुण्यक्षयादिहाऽऽयातः
प्रवरे योगिनां कुले ॥ चतुर्वेदी भवेद्विप्रः स्वधर्मनिरतः शुचिः ॥ ५२ ॥ योगं विवस्वतः प्राप्य ततो मोक्षमवाप्नुयात् ॥ चैत्रे मासि सिते पक्षे यात्रां
दमनभञ्जिकाम् ॥ ५३ ॥ यः करोति नरस्तत्र पूर्वोक्तं स फलं लभेत् ॥ शयनोत्थापने भानोः संक्रान्त्यां विषुवायने ॥५४॥ वारे रवेस्तिथौ चैव पर्व
कालेऽथवा द्विजाः ॥ ये तत्र यात्रां कुर्वन्ति पुरुषाः संयतेन्द्रियाः ॥ ५५ ॥ विमानेनार्कवर्णेन सूर्यलोकं व्रजन्ति ते ॥ आस्ते तत्र महादेवस्तीरेऽनदन
दीपतेः ॥ ५६ ॥ रामेश्वर इति ख्यातः सर्वकामफलप्रदः ॥ ये तं पश्यंति कामारिं स्नात्वा सम्यङ्‌ महोदधौ ॥५७॥ गन्धैः पुष्पैस्तथा धूपैर्दीपैर्नैवेद्यकै
र्वरैः ॥ प्रणिपातैस्तथा स्तोत्रैर्गीतैर्वाद्यैर्मनोहरैः ॥ ५८ ॥ राजसूयफलं सम्यग्वाजिमेधफलं तथा ॥ प्राप्नुवन्ति महात्मानः संसिद्धिं परमां तथा ॥५९॥
कामगेन विमानेन किङ्किणीजालमालिना ॥ उपगीयमाना गन्धर्वैः शिवलोकं व्रजन्ति ते ॥ ६० ॥ आभूतसंप्लवं यावद्भुक्त्वा भोगान्मनोरमान् ॥
पुण्यक्षयादिहाऽऽगत्य चातुर्वेदा भवन्ति ते ॥ ६१ ॥ शांकरं योगमासाद्य ततो मोक्षं व्रजन्ति ते ॥ यस्तत्र सवितुः क्षेत्रे प्राणांस्त्यजति मानवः॥६२॥
स सूर्यलोकमास्थाय देववन्मोदते दिवि॥ पुनर्मानुषतां प्राप्य राजा भवति धार्मिकः॥६३॥ योगं रवेः समासाद्य ततो मोक्षमवाप्नुयात्॥ एवं मया मुनि
श्रेष्ठाः क्षेत्रं प्रोक्तं सुदुर्लभम् ॥६४॥ कोणार्कस्योदधेस्तीरे भुक्तिमुक्तिफलप्रदम् ॥६५॥ इति श्रीब्रह्मपुराणे स्वयंभ्वृषिसंवादे कोणादित्यमाहात्म्यवर्णनं
नाम षड्विंशोऽध्यायः ॥२६॥ मुनय ऊचुः ॥ श्रुतोऽस्माभिः सुरश्रेष्ठ भवता यदुदाहृतम् ॥ भास्करस्य परं क्षेत्रं भुक्तिमुक्तिफलप्रदम् ॥१॥ न तृप्ति
मधिगच्छामः शृण्वन्तः सुखदां कथाम् ॥ भवद्वक्त्रोद्भवां पुण्यामादित्यस्याघनाशिनीम् ॥२॥ अतः परं सुरश्रेष्ठ ब्रूहि नो वदतां वर ॥ देवपूजाफलं

यच्च यज्ञदानफलं भवेत् ॥ ३ ॥ प्रणिपाते नमस्कारे तथा चैव प्रदक्षिणे ॥ दीपधूपप्रदाने च संमार्जनविधौ च यत् ॥ ४ ॥ उपवासे च यत्पुण्यं य
त्पुण्यं नक्त भोजने ॥ अर्घश्च कीदृशः प्रोक्तः कुत्र वा संप्रदीयते ॥५॥ कथं च क्रियते भक्तिः कथं देवः प्रसीदति ॥ एतत्सर्वं सुरश्रेष्ठ श्रोतुमिच्छामहे
वयम् ॥ ६ ॥ ब्रह्मोवाच ॥ अर्घ्यं पूजादिकं सर्वं भास्करस्य द्विजोत्तमाः ॥ भक्तिं श्रद्धां समाधिं च कथ्यमानं निबोधत ॥ ७ ॥ मानसी भावना
भक्तिरिष्टा श्रद्धा च कीर्त्यते ॥ ध्यानं समाधिरित्युक्तं शृणुध्वं सुसमाहिताः ॥ ८ ॥ तत्कथां श्रावयेद्यस्तु भक्तिमान्पूजयेत्तु वा ॥ अग्निशुश्रूषक
श्चैव स वै भक्तः सनातनः ॥ ९ ॥ तच्चित्तस्तन्मनाश्चैव देवपूजारतः सदा ॥ तत्कर्मकृद्भवेद्यस्तु स वै भक्तः सनातनः ॥ १० ॥ वेदार्थं क्रियमा
णानि यः कर्माण्यनुमन्यते ॥ कीर्तनाद्वा परो विप्राः स वै भक्तः परो नरः ॥ ११ ॥ नाभ्यसूयेत तद्भक्तान्न निन्द्याच्चान्यदेवताम् ॥ आदित्यव्र
तचारी च स वै भक्ततरो नरः ॥ १२ ॥ गच्छंस्तिष्ठन्स्वपञ्जिघ्रन्नुन्मिषन्निमिषन्नपि ॥ यः स्मरेद्भास्करं नित्यं स वै भक्तः परो नरः ॥ १३ ॥ एवं
विधा त्वियं भक्तिः सदा कार्या विजानता ॥ भक्त्या समाधिना चैव तत्त्वेन मनसा तथा ॥ १४ ॥ क्रियते नियमो यस्तु दानं विप्राय दीयते ॥
प्रतिगृह्णन्ति तं देवा मनुष्याः पितृभिर्युताः ॥ १५ ॥ पत्रं पुष्पं फलं तोयं यद्भक्त्या समुपाहृतम् ॥ प्रतिगृह्णन्ति तद्देवा नास्तिकान्वर्जयन्ति च ॥
॥ १६ ॥ भावशुद्धिः प्रयोक्तव्या नियमाचारसंयुता ॥ क्रियते भावशुद्ध्या यत्तत्सर्वं सफलं भवेत् ॥ १७ ॥ स्तुतिजप्योपहारेण पूजयाऽपि विव
स्वतः ॥ उपवासेन भक्त्या वै सर्वपापैः प्रमुच्यते ॥ १८ ॥ प्रणिधाय शिरो भूम्यां नमस्कारं करोति यः ॥ तत्क्षणात्सर्वपापेभ्यो मुच्यते नात्र
संशयः ॥ १९ ॥ भक्तियुक्तो नरो योऽसौ रवेः कुर्यात्प्रदक्षिणाम् ॥ प्रदक्षिणीकृता तेन सप्तद्वीपा वसुंधरा ॥ २० ॥ सूर्यं मनसि यः कृत्वा कुर्या
द्व्योमप्रदक्षिणाम् ॥ प्रदक्षिणीकृतास्तेन सर्वे देवा भवन्ति हि ॥ २१ ॥ एकाहारो नरो भूत्वा षष्ठ्यां योऽर्चयते रविम् ॥ नियमव्रतचारी च रवेर्भ
क्तिसमन्वितः ॥ २२ ॥ सप्तम्यां च महाभागाः सोऽश्वमेधफलं लभेत् ॥ अहोरात्रोपवासेन पूजयेद्यस्तु भास्करम् ॥ २३ ॥ अग्निप्रभेण यानेन
सूर्यलोके स गच्छति ॥ सप्तम्यामुत षष्ठ्यां वा स याति परमां गतिम् ॥ कृष्णपक्षस्य सप्तम्यां सोपवासो जितेन्द्रियः ॥ २४ ॥ सर्वरत्नोपहारेण
पूजयेद्यस्तु भास्करम् ॥ पद्मप्रभेण यानेन सूर्यलोकं स गच्छति ॥ २५ ॥ शुक्लपक्षस्य सप्तम्यामुपवासपरो नरः ॥ सर्वशुक्लोपहारेण पूजयेद्यस्तु
भास्करम् ॥ २६ ॥ सर्वपापविनिर्मुक्तः सूर्यलोकं स गच्छति ॥ अर्कसंपुटसंयुक्तमुदकं प्रसृतं पिबेत् ॥ २७ ॥ क्रमवृद्ध्या चतुर्विंशमेकैकं क्षपये
त्पुनः ॥ द्वाभ्यां संवत्सराभ्यां तु समाप्तनियमो भवेत् ॥ २८ ॥ सर्वकामप्रदा ह्येषा प्रशस्ता ह्यर्कसप्तमी ॥ शुक्लपक्षस्य सप्तम्यां यदाऽऽदित्यदिनं

भवेत् ॥ २९ ॥ सप्तमी विजया नाम तत्र दत्तं महत्फलम् ॥ स्नानं दानं तपो होम उपवासस्तथैव च ॥ ३० ॥ सर्वं विजयसप्तम्यां महापातकनाशनम् ॥ ये चाऽऽदित्यदिने प्राप्ते श्राद्धं कुर्वन्ति मानवाः ॥ ३१ ॥ यजन्ति च महाश्वेतं ते लभन्ते महाफलम् ॥ तेषां धर्म्याः क्रियाः सर्वाः सदैवो द्दिश्य भास्करम् ॥ ३२ ॥ न कुले जायते तेषां दरिद्रो व्याधितोऽपि वा ॥ श्वेतया रक्तया वाऽपि पीतमृत्तिकयाऽपि वा ॥ ३३ ॥ उपलेपनकर्ता तु चिन्तितं लभते फलम् ॥ चित्रभानुं विचित्रैस्तु कुसुमैश्च सुगन्धिभिः ॥३४॥ पूजयेत्सोपवासो यः सकामानीप्सिताँल्लभेत् ॥ घृतेन दीपं प्रज्वाल्य तिलतैलेन वा पुनः ॥ ३५ ॥ दीर्घायुर्वपुषायुक्तः चक्षुषा न स हीयते ॥ दीपदानपरो नित्यं ज्ञानदीपेन दीप्यते ॥ स्पष्टबुद्धीन्द्रियश्चापि स कदाचित्प्रमुच्यते ॥ ३६ ॥ तिलाः पवित्राः परमास्तिलानां दानमुत्तमम् ॥ अग्निकार्ये च दीपे च महापातकनाशनम् ॥ ३७ ॥ दीपं ददाति यो नित्यं देवतायतनेषु च ॥ चतुष्पथेषु रथ्यासु रूपवान्सुभगो भवेत् ॥ ३८ ॥ हविर्भिः प्रथमः कल्पो द्वितीयश्चौषधीरसैः ॥ वसामेदोस्थिनिर्यासैर्न तु देयः कदाचन ॥ ३९ ॥ भवेदूर्ध्वगतिर्दीपो न कदाचिदधोगतिः ॥ दाता दीप्यति चाप्येवं न तिर्यग्गतिमाप्नुयात् ॥ ४० ॥ ज्वलमानं सदा दीपं न हरेन्नापि नाशयेत् ॥ दीपहर्ता नरो बन्धं नाशं क्रोधं तमो व्रजेत ॥ ४१ ॥ दीपदाता स्वर्गलोके दीपमालेव राजते ॥ यः समालभते नित्यं कुङ्कुमागुरुचन्दनैः ॥ ४२ ॥ संपद्यते नरश्रेष्ठो धनेन यशसा श्रिया ॥ रक्तचन्दनसंमिश्रै रक्तपुष्पैः शुचिर्नरः ॥ ४३ ॥ उदयेऽर्घ्यं सदा दत्त्वा सिद्धिं संवत्सराल्लभेत् ॥ उदयात्परिवर्तेत यावदस्तमने स्थितः ॥ ४४ ॥ जपन्नभिमुखः किंचिन्मंत्रं स्तोत्रमथापि वा ॥ आदित्यव्रतमेतत्तु महापातकनाशनम् ॥ ४५ ॥ अर्घ्येण सहितं चैव सर्वं साङ्गं प्रदापयेत् ॥ उदये श्रद्धया युक्तः सर्वपापैः प्रमुच्यते ॥ ४६ ॥ सुवर्णधेन्वनड्वाहवसुधावस्त्रसंयुतम् ॥ अर्घ्यप्रदाता लभते सप्तजन्मानुगं फलम् ॥ ४७ ॥ अग्नौ तोयेऽन्तरिक्षे च शुचौ भूम्यां तथैव च ॥ प्रतिमायां तथा पिण्ड्यां देयमर्घ्यं प्रयत्नतः ॥ ४८ ॥ नापसव्यं न सव्यं च दद्यादभिमुखः सदा ॥ सघृतं गुग्गुलं चाऽपि रवेर्भक्तिसमन्वितः ॥ ४९ ॥ दद्यादभिमुखं सर्वमर्चनं भक्तिमान्नरः ॥ तत्क्षणात्सर्वपापेभ्यो मुच्यते नात्र संशयः ॥ श्रीवासं देवदारुं च सर्जकं च तथैव च ॥ ५० ॥ कर्पूरागरुधूपानि दत्त्वा वै स्वर्गगामिनः ॥ अयने तूत्तरे सूर्यमथवा दक्षिणायने ॥ ५१ ॥ पूजयित्वा विशेषेण सर्वपापैः प्रमुच्यते ॥ विषुवेषूपरागेषु षडशीतिमुखेषु च ॥ ५२ ॥ पूजयित्वा विशेषेण सर्वपापैः प्रमुच्यते ॥ एवं वेलासु सर्वासु अवेलासु च मानवः ॥ ५३ ॥ भक्त्या पूजयते योऽर्कं सोऽर्कलोके महीयते ॥ कृसरैः पायसैः पूपैः फलमूलघृतौदनैः ॥ ५४ ॥ बलिं दत्त्वा च सूर्याय सर्वान्कामानवाप्नुयात् ॥ घृतेन

तर्पणं कृत्वा सर्वश्रेष्ठो भवेन्नरः ॥ ५५ ॥ क्षीरेण तर्पणं कृत्वा मनस्तापैर्न युज्यते ॥ दध्ना तु तर्पणं कृत्वा कार्यसिद्धिं लभेन्नरः ॥ ५६ ॥ स्नानार्थमाहरेद्यस्तु जलं भानोः समाहितः ॥ तीर्थाद्वा शुचिवाप्या वा स याति परमां गतिम् ॥ ५७ ॥ छत्रं ध्वजं वितानं वा पताकां चामराणि च ॥ श्रद्धया भानवे दत्त्वा गतिमिष्टामवाप्नुयात् ॥ ५८ ॥ यद्यद्द्रव्यं नरो भक्त्या आदित्याय प्रयच्छति ॥ तत्तस्य शतसाहस्रमुत्पादयति भास्करः ॥ ५९ ॥ मानसं वाचिकं वाऽपि कायजं यच्च दुष्कृतम् ॥ सर्वं सूर्यप्रणामेन तदशेषं व्यपोहति ॥ ६० ॥ एकाहेनापि यद्भानोः पूजायाः प्राप्यते फलम् ॥ यथोक्तदक्षिणैर्विप्रैर्न तत्क्रतुशतैरपि ॥ ६१ ॥ इति श्रीब्रह्मपुराणे स्वयंभ्वृषिसंवादे सूर्यपूजानियमभक्तिमाहात्म्यवर्णनं नाम सप्तविंशोऽध्यायः ॥ २७ ॥ ॥ मुनय ऊचुः ॥ अहो देवस्य माहात्म्यं श्रुतमेवं जगत्पतेः ॥ भास्करस्य सुरश्रेष्ठ वदतस्तेषु दुर्लभम् ॥ १ ॥ भूयः प्रब्रूहि देवेश यत्पृच्छामो जगत्पते ॥ श्रोतुमिच्छामहे ब्रह्मन्परं कौतूहलं हि नः ॥ २ ॥ गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः ॥ य इच्छेन्मोक्षमास्थातुं देवतां कां यजेत सः ॥ ३ ॥ कुतो ह्यस्य ध्रुवः स्वर्गः कुतो निःश्रेयसं परम् ॥ स्वर्गतश्चैव किं कुर्याद्येन न च्यवते पुनः ॥ ४ ॥ देवानां चात्र को देवः पितॄणां चात्र कः पिता ॥ यस्मात्परतरं नास्ति तन्मे ब्रूहि सुरेश्वर ॥ ५ ॥ कुतः सृष्टमिदं विश्वं ब्रह्मन् स्थावरजङ्गमम् ॥ प्रलये च कमभ्येति तद्भवान्वक्तुमर्हति ॥ ६ ॥ ब्रह्मोवाच ॥ उद्यन्नेवैष कुरुते जगद्वितिमिरं करैः ॥ नातः परतरो देवः कश्चिदन्यो द्विजोत्तमाः ॥ ७ ॥ अनादिनिधनो ह्येष पुरुषः शाश्वतोऽव्ययः ॥ तापयत्येष त्रीँल्लोकान्भ्रमन्रश्मिभिरुल्बणः ॥ ८ ॥ सर्वदेवमयो ह्येष तपतां तपनो वरः ॥ सर्वस्य जगतो नाथः सर्वसाक्षी शुभाशुभे ॥ ९ ॥ संक्षिपत्येष भूतानि तथा विसृजते पुनः ॥ एष भाति तपत्येष वर्तत्येष गभस्तिभिः ॥ १० ॥ एष धाता विधाता च भूतादिर्भूतभावनः ॥ न ह्येष क्षयमायाति नह्येष क्षयमण्डलः ॥ ११ ॥ पितॄणां हि पिता ह्येष देवतानां हि देवता ॥ ध्रुवं स्थानं स्मृतं ह्येतद्यस्मान्न च्यवते पुनः ॥ १२ ॥ सर्गकाले जगत्कृत्स्नमादित्यात्संप्रचक्षते ॥ प्रलये च तमभ्येति भास्करं दीप्ततेजसम् ॥ १३ ॥ योगिनश्चाप्यसंख्यातास्त्यक्त्वा गृहकलेवरम् ॥ वायुभूता विशन्त्यस्मिंस्तेजोराशौ दिवाकरे ॥ १४ ॥ अस्य रश्मिसहस्राणि शाखा इव विहंगमाः ॥ वसन्त्याश्रित्य मुनयः संसिद्धा दैवतैः सह ॥ १५ ॥ गृहस्था जनकाद्याश्च राजानो योगधर्मिणः ॥ वालखिल्यादयश्चैव ऋषयो ब्रह्मवादिनः ॥ १६ ॥ वानप्रस्थाश्च ये चान्ये व्यासाद्या भिक्षवस्तथा ॥ योगमास्थाय सर्वे ते प्रविष्टाः सूर्यमण्डलम् ॥ १७ ॥ शुको व्याससुतः श्रीमान्योगधर्ममवाप्य सः ॥ आदित्यकिरणान्गत्वा ह्यपुनर्योगमास्थितः ॥ १८ ॥ शब्दमात्रश्रुतिसुखा ब्रह्मविष्णुशिवादयः ॥ प्रत्यक्षोऽयं परो देवः सूर्यस्तिमिरनाशनः ॥ १९ ॥

तस्मादन्यत्र भक्तिर्हि न कार्या शुभमिच्छता ॥ दृष्टं न बाधते यस्माद्दृष्टं नित्यमेव हि ॥ २० ॥ ततो भवद्भिः सततमभ्यर्च्यो भगवान्रविः ॥ स हि माता पिता चैव कृत्स्नस्य जगतो गुरुः ॥२१॥ अनाद्यो लोकनाथोऽसौ रश्मिमाली जगत्पतिः ॥ मित्रत्वे च स्थितो यस्मात्तपते यो द्विजोत्तमाः ॥२२॥अनादिनिधनो ब्रह्मा नित्यमक्षय एव च ॥ सृष्ट्वा ससागरान्द्वीपान्भुवनानि चतुर्दश॥२३॥लोकानां स हितार्थाय स्थितश्चन्द्रसरित्तटे ॥ सृष्ट्वा प्रजापतीन्सर्वान्सृष्ट्वा च विविधाः प्रजाः ॥ २४ ॥ ततः शतसहस्रांशुरव्यक्तश्च पुनः स्वयम् ॥ कृत्वा द्वादशधाऽऽत्मानमादित्यमुपपद्यते ॥ २५ ॥ इन्द्रो धाता च पर्जन्यस्त्वष्टा पूषार्यमा भगः ॥ विवस्वान्विष्णुरंशश्च वरुणो मित्र एव च ॥ २६ ॥ आभिर्द्वादशभिस्तेन सूर्येण परमात्मना ॥ कृत्स्नं जगदिदं व्याप्तं मूर्तिभिश्च द्विजोत्तमाः ॥२७॥ तस्य या प्रथमा मूर्तिरादित्यस्येन्द्रसंज्ञिता ॥ स्थिता सा देवराजत्वे देवानां रिपुनाशिनी ॥२८॥ द्वितीया तस्य या मूर्तिर्नाम्ना धातेति कीर्तिता ॥ स्थिता प्रजापतित्वे च विविधाः सृजते प्रजाः ॥२९॥ तृतीया तस्य मूर्तिर्या पर्जन्य इति विश्रुता ॥ मेघेष्ववस्थिता सा तु वर्षते च गभस्तिभिः ॥ ३० ॥ चतुर्थी तस्य या मूर्तिर्नाम्ना त्वष्टेति विश्रुता ॥ स्थिता वनस्पतौ सा तु ओषधीषु च सर्वतः ॥ ॥ ३१ ॥ पञ्चमी तस्य या मूर्तिर्नाम्ना पूषेति विश्रुता ॥ अन्ने व्यवस्थिता सा तु प्रजां पुष्णाति नित्यशः ॥ ३२ ॥ मूर्तिः षष्ठी रवेर्या तु अर्यमा इति विश्रुता ॥ वायोः संवरणा सा तु देवेष्वेव समाश्रिता ॥३३॥ भानोर्या सप्तमी मूर्तिर्नाम्ना भगेति विश्रुता ॥ भूतेष्ववस्थिता सा तु शरीरेषु च देहिनाम्॥ ॥३४॥मूर्तिर्या त्वष्टमी तस्य विवस्वानिति विश्रुता ॥ अग्नौ प्रतिष्ठिता सा तु पचत्यन्नं शरीरिणाम्॥३५॥नवमी चित्रभानोर्या मूर्तिर्विष्णुश्च नामतः ॥ प्रादुर्भवति सा नित्यं देवानां रिपुनाशिनी ॥ ३६ ॥ दशमी तस्य या मूर्तिरंशुमानिति विश्रुता ॥ वायौ प्रतिष्ठिता सा तु प्रह्लादयति वै प्रजाः ॥३७॥ मूर्तिस्त्वेकादशी भानोर्नाम्ना वरुणसंज्ञिता ॥ जलेष्ववस्थिता सा तु प्रजा रक्षति नित्यशः ॥ ३८ ॥ मूर्तिर्या द्वादशी भानोर्नाम्ना मित्रेति संज्ञिता ॥ लोकानां सा हितार्थाय स्थिता चन्द्रसरित्तटे ॥ ३९ ॥ वायुभक्षस्तपस्तेपे स्थितो मैत्रेण चक्षुषा ॥ अनुगृह्णन्सदा भक्तान्वरैर्नानाविधैस्तु सः ॥ ॥ ४० ॥ एवमाद्यं हि तत्स्थानं पश्चात्साम्बेन स्थापितम् ॥ तत्र मित्रः स्थितो यस्मात्तस्मान्मित्रवनं स्मृतम् ॥ ४१ ॥ आभिर्द्वादशभिस्तेन सवित्रा परमात्मना ॥ कृत्स्नं जगदिदं व्याप्तं मूर्तिभिश्च द्विजोत्तमाः ॥ ४२ ॥ तस्माद्ध्येयो नमस्यश्च द्वादशस्थासु मूर्तिषु ॥ भक्तिमद्भिर्नरैर्नित्यं तद्गतेनान्तरात्मना ॥ ४३ ॥ इत्येवं द्वादशाऽऽदित्यान्नमस्कृत्वा तु मानवः ॥ नित्यं श्रुत्वा पठित्वा च सूर्यलोके महीयते ॥ ४४ ॥ ॥ मुनय ऊचुः ॥ यदि तावदयं सूर्यश्चाऽऽदिदेवः सनातनः ॥ ततः कस्मात्तपस्तेपे वरेप्सुः प्राकृतो यथा ॥ ४५ ॥ ॥ ब्रह्मोवाच ॥ एतद्वः संप्रवक्ष्यामि परं गुह्यं

विभावसोः ॥ पृष्टं मित्रेण यत्पूर्वं नारदाय महात्मने ॥ ४६ ॥ प्राङ्मयोक्तास्तु युष्मभ्यं रवेर्द्वादश मूर्तयः ॥ मित्रश्च वरुणश्चोभौ तासां तपसि संस्थितौ ॥ ४७ ॥ अब्भक्षो वरुणस्तासां तस्थौ पश्चिमसागरे ॥ मित्रो मित्रवने तस्मिन्वायुभक्षश्चरंस्तपः ॥ ४८ ॥ अथ मेरुगिरेः शृंगात्प्रच्युतो गन्धमादनम् ॥ नारदस्तु महायोगी सर्वांल्लोकांश्चरन्वशी ॥ ४९ ॥ आजगामाथ तत्रैव यत्र मित्रोऽचरत्तप ॥ तं पृष्ट्वा तु तपस्यन्तं तस्य कौतूहलं ह्यभूत् ॥ ५० ॥ योऽक्षयश्चाव्ययश्चैव व्यक्ताव्यक्तः सनातनः ॥ धृतमेकात्मकं येन त्रैलोक्यं सुमहात्मना ॥ ५१ ॥ य पिता सर्वदेवानां पराणामपि यः परः ॥ अयजद्देवतां कां वा पितॄन्वा कानसौ यजेत् ॥ इति संचिन्त्य मनसा तं देवं नारदोऽब्रवीत् ॥ ५२ ॥ ॥ नारद उवाच ॥ वेदेषु सपुराणेषु सांगोपांगेषु गीयसे ॥ त्वमजः शाश्वतो धाता महामूर्त्तिरनुत्तमः ॥ ५३ ॥ भूतं भव्यं भविष्यच्च त्वयि सर्वं प्रतिष्ठितम् ॥ चत्वारश्चाऽऽश्रमा देव गृहस्थाद्यास्तथैव हि ॥ ५४ ॥ यजन्ति त्वामहरहर्नानामूर्तिसमाश्रितम् ॥ पिता माता च सर्वस्य दैवतं त्वं हि शाश्वतम् ॥ ५५ ॥ यजसे पितरं कं त्वं देवं वाऽपि न विद्महे ॥ ५६ ॥ ॥ मित्र उवाच ॥ अवाच्यमेतद्वक्तव्यं परं गुह्यं सनातनम् ॥ त्वयि भक्तिमति ब्रह्मन्प्रवक्ष्यामि यथातथम् ॥ ५७ ॥ यत्तत्सूक्ष्ममविज्ञेयमव्यक्तमचलं ध्रुवम् ॥ इन्द्रियैरिन्द्रियार्थैश्च सर्वभूतैर्विवर्जितम् ॥ ५८ ॥ सह्यन्तरात्मा भूतानां क्षेत्रज्ञश्चैव कथ्यते ॥ त्रिगुणाव्यतिरिक्तोऽसौ पुरुषश्चैव कल्पितः ॥ ५९ ॥ हिरण्यगर्भो भगवान्सैव बुद्धिरिति स्मृतः ॥ महानिति च योगेषु प्रधानमिति कथ्यते ॥ ६० ॥ सांख्ये च कथ्यते योगे नामभिर्बहुधात्मकः ॥ स च त्रिरूपो विश्वात्मा एकाक्षर इति स्मृतः ॥ ६१ ॥ धृतमेकात्मकं तेन त्रैलोक्यमिदमात्मना ॥ अशरीरः शरीरेषु सर्वेषु निवसत्यसौ ॥ ६२ ॥ वसन्नपि शरीरेषु न स लिप्यति कर्मभिः ॥ ममान्तरात्मा तव च ये चान्ये देहसंस्थिताः ॥ ६३ ॥ सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित्क्वचित् ॥ सगुणो निर्गुणो विश्वो ज्ञानगम्यो ह्यसौ स्मृतः ॥ ६४ ॥ सर्वतः पाणिपादान्तः सर्वतोक्षिशिरोमुखः ॥ सर्वतः श्रुतिमाल्लोके सर्वमावृत्य तिष्ठति ॥ ६५ ॥ विश्वमूर्धा विश्वभुजो विश्वपादाक्षिनासिकः ॥ एकश्चरति वै क्षेत्रे स्वैरचारी यथासुखम् ॥ ॥ ६६ ॥ क्षेत्राणीह शरीराणि तेषां चैव यथासुखम् ॥ तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते ॥ ६७ ॥ अव्यक्ते च पुरे शेते पुरुषस्तेन चोच्यते ॥ विश्वं बहुविधं ज्ञेयं सर्वः सर्वत्र उच्यते ॥ ६८ ॥ तस्मात्स बहुरूपत्वाद्विश्वरूप इति स्मृतः ॥ तस्यैकस्य महत्त्वं हि स चैकः पुरुषः स्मृतः ॥ ६९ ॥ महापुरुषशब्दं हि बिभर्त्येकः सनातनः ॥ सत्त्वबुद्धिक्रियापन्नः सृजत्यात्मानमात्मना ॥ ७० ॥ शतधा सहस्रधा चैव तथा शतसहस्रधा ॥ कोटिशश्च करोत्येष प्रत्यगात्मानमात्मना ॥ ७१ ॥ आकाशात्पतितं तोयं याति स्वाद्वन्तरं यथा ॥ भूमे रसविशेषेण तथा गुणरसात्तु

सः ॥ ७२ ॥ एक एव यथा वायुर्देहेष्वेव हि पञ्चधा ॥ एकत्वं च पृथक्त्वं च तथा तस्य न संशयः ॥ ७३ ॥ स्थानान्तरविशेषाच्च यथाऽग्निर्लभते पराम् ॥ संज्ञां यथा ध्रुवाद्येषु ब्रह्माद्येषु तथा वयम् ॥ ७४ ॥ यथा दीपसहस्राणि दीप एकः प्रसूयते ॥ तथा रूपसहस्राणि स एकः संप्रसूयते ॥ ॥ ७५ ॥ यदा च बुध्यत्यात्मानं तदा भवति केवलः ॥ एकत्वप्रलये चास्य बहुत्वं च प्रवर्तते ॥ ७६ ॥ नित्यं हि नास्ति जगति भूतं स्थावरजङ्गमम् ॥ अक्षयश्चाप्रमेयश्च सर्वगश्च स उच्यते ॥ ७७ ॥ तस्मादव्यक्तमुत्पन्नं त्रिगुणं मुनिसत्तमाः ॥ अव्यक्ताव्यक्तभावस्था या सा प्रकृतिरुच्यते ॥ ७८ ॥ तां योनिं ब्रह्मणो विद्धि योऽसौ सदसदात्मकः ॥ लोके च पूज्यते योऽसौ दैवे पित्र्ये च कर्मणि ॥ ७९ ॥ नास्ति तस्मात्परो ह्यन्यः पिता देवोऽपि वा द्विजाः ॥ आत्मना स तु विज्ञेयस्ततस्तं पूजयाम्यहम् ॥ ८० ॥ स्वर्गस्थापि हि ये केचित्तं नमस्यन्ति देहिनः ॥ ते च गच्छन्ति देवर्षे तेनोद्दिष्टफलां गतिम् ॥ ८१ ॥ तं देवाः स्वाश्रमस्थाश्च नानामूर्तिसमाश्रिताः ॥ भक्त्या संपूजयन्त्याद्यं गतिश्चैषां ददाति सः ॥ ८२ ॥ स हि सर्वगतश्चैव निर्गुणश्चैव कथ्यते ॥ एवं श्रुत्वा तथा ज्ञात्वा पूजयामि दिवाकरम् ॥ ८३ ॥ ये च तद्भाविता लोक एकतत्त्वं समाश्रिताः ॥ एतदप्यधिकं तेषां यदेकं प्रविशन्त्युत ॥ ८४ ॥ इति गुह्यसमुद्देशस्तव नारद कीर्तितः ॥ अस्मद्भक्त्याऽपि देवर्षे त्वयाऽपि परमं स्मृतम् ॥ ८५ ॥ सर्वैश्च मुनिभिर्वाऽपि पुराणे यैरिदं श्रुतम् ॥ सर्वे ते परमात्मानं पूजयन्ति दिवाकरम् ॥ ८६ ॥ ॥ ब्रह्मोवाच ॥ एवमेतत्पुराऽऽख्यातं नारदाय तु भानुना ॥ मयाऽपि वः समाख्याता कथा भानोर्द्विजोत्तमाः ॥ ८७ ॥ इदमाख्यानमाख्येयं मयाऽऽख्यातं द्विजोत्तमाः ॥ न ह्यनादित्यभक्ताय इदं देयं कदाचन ॥ ८८ ॥ यश्चैतच्छ्रावयेन्नित्यं यश्चैव शृणुयान्नरः ॥ स सहस्रार्चिषं देवं प्रविशेन्नात्र संशयः ॥ ८९ ॥ मुच्येताऽऽर्तस्तथा रोगाच्छ्रुत्वेमामादितः कथाम् ॥ जिज्ञासुर्लभते ज्ञानं गतिमिष्टां तथैव च ॥ ९० ॥ क्षणेन लभतेऽध्यानमिदं यः पठते मुने ॥ यो यं कामयते कामं स तं प्राप्नोत्यसंशयम् ॥ ९१ ॥ तस्माद्भवद्भिः सततमभ्यर्च्यो भगवान्रविः ॥ स च धाता विधाता च सर्वस्य जगतो गुरुः ॥ ९२ ॥ इति श्रीब्रह्मपुराणे स्वयंभुऋषिसंवादे आदित्यमाहात्म्यवर्णनं नामाष्टविंशोऽध्यायः ॥ २८ ॥

॥ ब्रह्मोवाच ॥ आदित्यमूलमखिलं त्रैलोक्यं मुनिसत्तमाः ॥ भवत्यस्माज्जगत्सर्वं सदेवासुरमानुषम् ॥ १ ॥ रुद्रोपेन्द्रमहेन्द्राणां विप्रेन्द्र त्रिदिवौकसाम् ॥ महाद्युतिमतां चैव तेजो वै सार्वलौकिकम् ॥ २ ॥ सर्वात्मा सर्वलोकेशो देवदेवः प्रजापतिः ॥ सूर्य एव त्रिलोकस्य मूलं परमदैवतम् ॥ ३ ॥ अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते ॥ आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥ ४ ॥ सूर्यात्प्रसूयते सर्वं तत्र चैव प्रलीयते ॥

नाबाभावौ हि लोकानामादित्यान्निःसृतो पुरा ॥ ५ ॥ एतत्तु ध्यानिनां ध्यानं मोक्षश्चाप्येष मोक्षिणाम् ॥ तत्र गच्छन्ति निर्वाणं जायन्तेऽस्मात्पुनः पुनः ॥ ६ ॥ क्षणा मुहूर्ता दिवसा निशा पक्षाश्च नित्यशः ॥ मासाः संवत्सराश्चैव ऋतवश्च युगानि च ॥ ७ ॥ अथाऽऽदित्यादृते ह्येषां कालसंख्या न विद्यते ॥ कालादृते न नियमो नाग्नौ विहरणक्रिया ॥८॥ ऋतूनां प्रविभागश्च कुतः पुष्पफलं कुतः॥ कुतो वै सस्यनिष्पत्तिस्तृणौषधिगणः कुतः॥९॥ अभावो व्यवहाराणां जन्तूनां दिवि चेह च ॥ जगत्प्रभावाद्विशते भास्कराद्वारितस्करात् ॥ १० ॥ नावृष्ट्या तपते सूर्यो नावृष्ट्या परिशुष्यति ॥ नावृष्ट्या परिधिं धत्ते वारिणा दीप्यते रविः ॥ ११ ॥ वसन्ते कपिलः सूर्यो ग्रीष्मे काञ्चनसन्निभः ॥ श्वेतो वर्षासु वर्णेन पाण्डुः शरदि भास्करः ॥ ॥ १२ ॥ हेमन्ते ताम्रवर्णाभः शिशिरे लोहितो रविः ॥ इत्थं वर्णाः समाख्याताः सूर्यस्य ऋतुसंभवाः ॥ १३ ॥ ऋतुस्वभाववर्णैश्च सूर्यः क्षेमसुभिक्षकृत् ॥ तथाऽऽदित्यस्य नामानि सामान्यानीह द्वादश ॥ १४ ॥ द्वादशैव पृथक्त्वेन तानि वक्ष्याम्यशेषतः ॥ आदित्यः सविता सूर्यो मिहिरोऽर्कः प्रभाकरः ॥ १५ ॥ मार्तण्डो भास्करो भानुश्चित्रभानुर्दिवाकरः ॥ रविर्द्वादशभिस्तेषां ज्ञेयः सामान्यनामभिः ॥ १६ ॥ विष्णुर्धाता भगः पूषा मित्रेन्द्रौ वरुणोऽर्यमा ॥ विवस्वानंशुमांस्त्वष्टा पर्जन्यो द्वादशः स्मृतः ॥ १७ ॥ इत्येते द्वादशाऽऽदित्याः पृथक्त्वेन व्यवस्थिताः ॥ उत्तिष्ठन्ति सदा ह्येते मासैर्द्वादशभिः क्रमात् ॥ १८ ॥ विष्णुस्तपति चैत्रे तु वैशाखे चार्यमा तथा ॥ विवस्वाञ्ज्येष्ठमासे तु आषाढे चांशुमान्स्मृतः ॥ १९ ॥ पर्जन्यः श्रावणे मासि वरुणः प्रौष्ठसंज्ञके ॥ इन्द्र आश्वयुजे मासि धाता तपति कार्तिके ॥ २० ॥ मार्गशीर्षे तथा मित्रः पौषे पूषा दिवाकरः ॥ माघे भगस्तु विज्ञेयस्त्वष्टा तपति फाल्गुने ॥ २१ ॥ शतैर्द्वादशभिर्विष्णुरंशुभिर्दीप्यते सदा ॥ दीप्यते गोसहस्रेण शतैश्च त्रिभिरर्यमा ॥ २२ ॥ द्विःसप्तकैर्विवस्वांस्तु अंशुमान्पञ्चभिस्त्रिभिः ॥ विवस्वानिव पर्जन्यो वरुणश्चार्यमा तथा ॥ २३ ॥ मित्रवद्भगवांस्त्वष्टा सहस्रेण शतेन च ॥ इन्द्रस्तु द्विगुणैः षड्भिर्धातैकादशभिः स्मृतः ॥ २४ ॥ सहस्रेण तु मित्रो वै पूषा तु नवभिः शतैः ॥ उत्तरोपक्रमेऽर्कस्य वर्धन्ते रश्मयस्तथा ॥ २५ ॥ दक्षिणोपक्रमे भूयो ह्रसन्ते सूर्यरश्मयः ॥ एवं रश्मिसहस्रेण सूर्यलोकस्यसंग्रहः ॥ २६ ॥ विद्यते ऋतुमासाद्य संग्रहो बहुधा पुनः ॥ एवं नाम्नां चतुर्विंशदेक एषां प्रकीर्तितः ॥ विस्तरेण सहस्रं तु पुनरन्यत्प्रकीर्तितम् ॥ २७ ॥ ॥ मुनय ऊचुः ॥ ये तन्नामसहस्रेण स्तुवन्त्यर्कं प्रजापते ॥ तेषां भवति किं पुण्यं गतिश्च परमेश्वर ॥ २८ ॥ ब्रह्मोवाच ॥ शृणुध्वं मुनिशार्दूलाः सारभूतं सनातनम् ॥ अलं नामसहस्रेण पठन्नेवं स्तवं शुभम् ॥ २९ ॥ यानि नामानि गुह्यानि पवित्राणि शुभानि च ॥ तानि वः कीर्तयिष्यामि शृणुध्वं भास्करस्य वै ॥ ३० ॥ विकर्तनो विवस्वांश्च मार्तण्डो भास्करो

रविः ॥ लोकप्रकाशकः श्रीमाँल्लोकचक्षुर्महेश्वरः ॥ ३१ ॥ लोकसाक्षी त्रिलोकेशः कर्ता हर्ता तमिस्रहा ॥ तपनस्तापनश्चैव शुचिः सप्ताश्ववाहनः ॥ ॥ ३२ ॥ गभस्तिहस्तो ब्रह्मण्यः सर्वदेवनमस्कृतः ॥ एकविंशतिरित्येष स्तव इष्टः सदा रवेः ॥ ३३ ॥ शरीरारोग्यदश्चैव धनवृद्धियशस्करः ॥ स्तवराज इति ख्यातस्त्रिषु लोकेषु विश्रुतः ॥ ३४ ॥ य एतेन द्विजश्रेष्ठा द्विसंध्येऽस्तमनोदये ॥ स्तौति सूर्यं शुचिर्भूत्वा सर्वपापैः प्रमुच्यते ॥ ३५ ॥ मानसं वाचिकं वाऽपि देहजं कर्मजं तथा ॥ एकजप्येन तत्सर्वं नश्यत्यर्कस्य संनिधौ ॥३६॥ एकजप्यश्च होमश्च संध्योपासनमेव च ॥ धूपमन्त्रोऽर्घ्यमन्त्रश्च बलिमन्त्रस्तथैव च॥३७॥अन्नप्रदाने दाने च प्रणिपाते प्रदक्षिणे ॥ पूजितोऽयं महामन्त्रः सर्वपापहरः शुभः ॥३८॥ तस्माद्यूयं प्रयत्नेन स्तवेनानेन वै द्विजाः ॥ स्तुवीध्वं वरदं देवं सर्वकामफलप्रदम् ॥३९॥ इति श्रीब्रह्मपुराणे स्वयंभुऋषिसंवादे मार्तण्डस्यैकविंशतिनामानुकीर्तनं नामैकोनात्रिंशोऽध्यायः॥२९॥ मुनय ऊचुः ॥ निर्गुणः शाश्वतो देवस्त्वया प्रोक्तो दिवाकरः ॥ पुनर्द्वादशधा जातः श्रुतोऽस्माभिस्त्वयोदितः॥१॥स कथं तेजसो राशिः स्त्रिया गर्भे महाद्युतिः ॥ संभूतो भास्करो देवस्तत्र नः संशयो महान् ॥२॥ ब्रह्मोवाच ॥ षष्टिर्दक्षस्य दुहिता बभूवुः श्रेष्ठशोभनाः॥ अदितिर्दितिर्दनुश्चैव विनताद्यास्तथैव च ॥ ३ ॥ दक्षस्ताः प्रददौ कन्याः कश्यपाय त्रयोदश ॥ अदितिर्जनयामास देवांस्त्रिभुवनेश्वरान् ॥४॥ दैत्यान्दितिर्दनुश्चोग्रान्दानवान्बलदर्पितान् ॥ विनताद्यास्तथा चान्याः सुषुवुः स्थाणुजङ्गमान् ॥ ५ ॥ आसाञ्च पुत्रदौहित्रैः पौत्रदौहित्रकादिभिः ॥ व्याप्तमेतज्जगत्सर्वं तेषां तासां च वै मुने ॥ ६ ॥ तेषां कश्यपपुत्राणां प्रधाना देवतागणाः ॥ सात्त्विका राजसाश्चान्ये तामसाश्च गणाः स्मृताः ॥ ७ ॥ देवान्यज्ञभुजश्चक्रे तथा त्रिभुवनेश्वरान् ॥ स्रष्टा ब्रह्मविदां श्रेष्ठः परमेष्ठी प्रजापतिः ॥ ८ ॥ तानबाधन्त सहिताः सापत्न्याद्दैत्यदानवाः ॥ (राक्षसाश्च ततो युद्धं तेषामासीत्सुदारुणम् ॥ दिव्यं वर्षसहस्रन्तु तत्रातप्यन्त देवताः ॥ बलिनश्चाभवन्युद्धे जयिनो दैत्यदानवाः ॥ ) ततो निराकृतान्पुत्रान्दैतेयैर्दानवैस्तथा ॥ ९ ॥ हृतं त्रिभुवनं दृष्ट्वा अदितिर्मुनिसत्तमाः ॥ आच्छिन्नयज्ञभागांश्च क्षुधा संपीडितान्भृशम् ॥ १० ॥ आराधनाय सवितुः परं यत्नं प्रचक्रमे ॥ एकाग्रा नियताहारा परं नियममाश्रिता ॥ तुष्टाव तेजसां राशिं गगनस्थं दिवाकरम् ॥ अदितिरुवाच ॥ ११ ॥ नमस्तुभ्यं परं सूक्ष्मं प्रणम्यं बिभ्रतेऽतुलम् ॥ धाम धामवतामीशं धामाधारं च शाश्वतम् ॥१२॥ जगतामुपकाराय तथाऽहं नौमि गोपते ॥ आददानस्य यद्रूपं तीव्रं तस्मै नमाम्यहम् ॥ १३ ॥ ग्रहीतुमष्टमासेषु कालेनाम्बुमयं रसम् ॥ बिभ्रतस्तव यद्रूपमतितीव्रं नताऽस्मि तत् ॥ १४ ॥ संध्ययोरुभयोर्यत्तद्रजसा संयुतं स मे ॥ मनोरथं च योदद्यान्नमस्तस्मै गुणात्मने ॥ यद्रूपमृग्यजुःसाम्नामैक्येन तपते तव ॥ १५ ॥ विश्वमेतत्त्रयीसंज्ञं नमस्तस्मै प्रभावते ॥ यत्तु





तस्मात्परं रूपमोमित्युक्त्वाऽभिसंहितम् ॥ अस्थूलं स्थूलममलं नमस्तस्मै सनातन ॥ १६ ॥ ब्रह्मोवाच ॥ एवं सा नियता देवी चक्रे स्तोत्रमह-
र्निशम् ॥ निराहारा विवस्वन्तमारिराधयिषुर्द्विजाः ॥ १७ ॥ ततः कालेन महता भगवांस्तपनो द्विजाः ॥ प्रत्यक्षतामगात्तस्या दाक्षायण्या द्विजो-
त्तमाः ॥ १८ ॥ सा ददर्श महाकूटं तेजसोऽम्बरसंवृतम् ॥ भूमौ च संस्थितं भानुं ज्वालामालातिदुःसहम् ॥१९॥ तं दृष्ट्वा च ततो देवी साध्वसं परमं
गता ॥ २० ॥ अदितिरुवाच ॥ जगदाद्य प्रसीदेति न त्वां पश्यामि गोपते ॥प्रसादं कुरु पश्येयं यद्रूपं ते दिवाकर॥भक्तानुकम्पक विभो त्वद्भक्तान्पा-
हि मे सुतान् ॥ २१ ॥ ततः स तेजसस्तस्मादाविर्भूतो विभावसुः ॥ अदृश्यत तदाऽऽदित्यस्तप्तताम्रोपमः प्रभुः ॥ २२ ॥ तत्र तां प्रणतां देवीं
तस्या संदर्शने द्विजाः ॥ प्राह भास्वान्वृणुष्वैकं वरं मत्तो यमिच्छसि ॥ २३ ॥ प्रणता शिरसा सा तु जानुपीडितमेदिनी ॥ प्रत्युवाच विवस्व-
न्तं वरदं समुपस्थितम् ॥ २४ ॥ अदितिरुवाच ॥ देव प्रसीद पुत्राणां हृतं त्रिभुवनं मम ॥ यज्ञभागाश्च दैतेयैर्दानवैश्च बलाधिकैः ॥ २५ ॥
तन्निमित्तं प्रसादं त्वं कुरुष्व मम गोपते ॥ अंशेन तेषां भ्रातृत्वं गत्वा तान्नाशय द्विषः ॥ २६ ॥ यथा मे तनया भूयो यज्ञभागभुजः प्रभो ॥
भवेयुरधिपाश्चैव त्रैलोक्यस्य दिवाकर ॥ २७ ॥ तथाऽनुकम्पां पुत्रेषु सुप्रसन्नो रवे मम ॥ कुरु प्रपन्नार्तिहर कार्यकर्ता त्वमच्युत ॥ २८ ॥
ततस्तामाह भगवान्भास्करो वारितस्करः ॥ प्रणतामदितिं विप्राः प्रसादसुमुखो विभुः ॥ २९ ॥ सहस्रांशेन ते गर्भः संभूयाहमशेषतः ॥ त्वत्पुत्र-
शत्रून्दक्षोऽहं नाशयाम्याशु निर्वृतः ॥ ३० ॥ इत्युक्त्वा भगवान्भास्वानन्तर्धानमुपागतः ॥ निवृत्ता साऽपि तपसः संप्राप्ताखिलवाञ्छिता ॥ ३१ ॥
ततो रश्मिसहस्रात्तु सुषुम्नाख्यो रवेः करः ॥ ततः संवत्सरस्यान्ते तत्कामपूरणाय सः ॥ ३२ ॥ निवासं सविता चक्रे देवमातुस्तदोदरे ॥
कृच्छ्रचान्द्रायणादींश्च सा चक्रे सुसमाहिता ॥ ३३ ॥ शुचिना धारयाम्येतं दिव्यं गर्भमिति द्विजाः ॥ ततस्तां कश्यपः प्राह किंचित्कोपप्लुताक्षरम् ॥
॥ ३४ ॥ किं मारयासि गर्भाण्डमिति नित्योपवासिनी ॥ सा च तं प्राह गर्भाण्डमेतत्पश्येतिकोपना ॥ न मारितं विपक्षाणां मृत्युरेव भविष्यति
॥ ३५ ॥ इत्युक्त्वा तं ततो गर्भमुत्ससर्ज सुदारुणम् ॥ जाज्वल्यमानं तेजोभिः पत्युर्वचनकोपिता ॥ ३६ ॥ तं दृष्ट्वा कश्यपो गर्भमुद्यद्भास्करवर्च-
सम् ॥ तुष्टाव प्रणतो भूत्वा वाग्भिराद्याभिरादरात् ॥ ३७ ॥ संस्तूयमानः स तदा गर्भाण्डात्प्रकटोऽभवत् ॥ पद्मपत्रसवर्णाभस्तेजसा व्याप्तदिङ्मुखः॥
॥ ३८ ॥ अथान्तरिक्षादाभाष्य कश्यपं मुनिसत्तमम् ॥ सभार्यं मेघगम्भीरा वागुवाचाशरीरिणी ॥३९॥ वागुवाच ॥ मारितन्ते यतः प्रोक्तमेतदण्डं त्व-
याऽदितेः ॥ तस्मान्मुने सुतस्तेऽयं मार्तण्डाख्यो भविष्यति ॥४०॥ हनिष्यत्यसुरांश्चायं यज्ञभागहरांस्त्वरीन् ॥ देवा निशम्येति वचो गगनात्समुपा-

गतम् ॥ ४१ ॥ प्रहर्षमतुलं याता दानवाश्च हतौजसः ॥ ततो युद्धाय दैतेयानाजुहाव शतक्रतुः ॥ ४२ ॥ सह देवैर्मुदा युक्तो दानवाश्च तमभ्ययुः ॥ तेषां युद्धमभूद्धोरं देवानामसुरैः सह ॥ ४३ ॥ शस्त्रास्त्रवृष्टिसंदीप्तसमस्तभुवनान्तरम् ॥ तस्मिन्युद्धे भगवता मार्तण्डेन निरीक्षिताः ॥ ४४ ॥ तेजसा दह्यमानास्ते भस्मीभूता महासुराः ॥ ततः प्रहर्षमतुलं प्राप्ताः सर्वे दिवौकसः ॥ ४५ ॥ तुष्टुवुस्तेजसां योनिं मार्तण्डमदितिं तथा ॥ स्वाधिकारांस्ततः प्राप्ता यज्ञभागांश्च पूर्ववत् ॥ ४६ ॥ भगवानपि मार्तण्डः स्वाधिकारमथाकरोत् ॥ कदम्बपुष्पवद्भास्वानधश्चोर्ध्वं च रश्मिभिः ॥ वृतोऽग्निपिण्डसदृशो येनाभाति स्फुटं वपुः ॥ ४७ ॥ ॥ मुनय ऊचुः ॥ कथं कान्ततरं पश्चाद्रूपं संलब्धवान्रविः ॥ कदम्बगोलकाकारं तन्नो ब्रूहि जगत्पते ॥ ४८ ॥ ॥ ब्रह्मोवाच ॥ त्वष्टा तस्मै ददौ कन्यां संज्ञां नाम विवस्वते ॥ प्रसाद्य प्रणतो भूत्वा विश्वकर्मा प्रजापतिः ॥ ४९ ॥ त्रीण्यपत्यान्यसौ तस्यां जनयामास गोपतिः ॥ द्वौ पुत्रौ सुमहाभागौ कन्यां च यमुनां पुनः ॥ ५० ॥ यत्तेजोऽभ्यधिकं तस्य मार्तण्डस्य विवस्वतः ॥ तेनातितापयामास त्रींल्लोकान्सचराचरान् ॥ ५१ ॥ तद्रूपं गोलकाकारं दृष्ट्वा संज्ञा विवस्वतः ॥ असहन्ती महत्तेजः स्वां छायां वाक्यमब्रवीत् ॥ ५२ ॥ ॥ संज्ञोवाच ॥ अहं यास्यामि भद्रं ते स्वमेव भवनं पितुः ॥ निर्विकारं त्वयाऽत्रैव स्थेयं मच्छासनाच्छुभे ॥ ५३ ॥ इमौ च बालकौ मह्यं कन्या च वरवर्णिनी ॥ संभाव्या नैव चाऽऽख्येयमिदं भगवते त्वया ॥ ५४ ॥ ॥ छायोवाच ॥ आ केशग्रहणाद्देवि आ शापान्नैव कर्हिचित् ॥ आख्यास्यामि मतं तुभ्यं गम्यतां यत्र वाञ्छितम् ॥ ५५ ॥ इत्युक्ता व्रीडिता संज्ञा जगाम पितृमन्दिरम् ॥ वत्सराणां सहस्रं तु वसमाना पितुर्गृहे ॥ ५६ ॥ भर्तुः समीपं याहीति पित्रोक्ता सा पुनः पुनः ॥ आगच्छद्वडवा भूत्वा कुरूनथोत्तरांस्ततः ॥ ५७ ॥ तत्र तेपे तपः साध्वी निराहारा द्विजोत्तमाः ॥ पितुः समीपं यातायां संज्ञायां वाक्यतत्परा ॥ ५८ ॥ तद्रूपधारिणी छाया भास्करं समुपस्थिता ॥ तस्यां च भगवान्सूर्यः संज्ञेयमिति चिन्तयन् ॥ ५९ ॥ तथैव जनयामास द्वौ पुत्रौ कन्यकां तथा ॥ संज्ञा तु पार्थिवी तेषामात्मजानां यथाऽकरोत् ॥ ६० ॥ स्नेहं न पूर्वजातानां तथा कृतवती तु सा ॥ मनुस्तत्क्षान्तवांस्तस्या यमस्तस्या न चक्षमे ॥ ६१ ॥ बहुधा पीड्यमानस्तु पितुः पत्न्या सुदुःखितः ॥ स वै कोपाच्च बाल्याच्च भाविनोऽर्थस्य वै बलात् ॥ पदा संतर्जयामास न तु देहे न्यपातयत् ॥ ६२ ॥ ॥ छायोवाच ॥ पदा तर्जयसे यस्मात्पितुर्भार्यां गरीयसीम् ॥ तस्मात्तवैष चरणः पतिष्यति न संशयः ॥ ६३ ॥ ॥ ब्रह्मोवाच ॥ यमस्तु तेन शापेन भृशं पीडितमानसः ॥ मनुना सह धर्मात्मा पित्रे सर्वं न्यवेदयत् ॥ ६४ ॥ ॥ यम उवाच ॥ स्नेहेन तुल्यमस्मासु माता देव न वर्तते ॥ विसृज्य ज्यायसं भक्त्या कनी

यासं बुभूषति ॥ ६५ ॥ तस्यां समुद्यतः पादो न तु देहे निपातितः ॥ बाल्याद्वा यदि वा मोहात्तद्भवान्क्षन्तुमर्हति ॥ ६६ ॥ शप्तोऽहं तात कोपेन जनन्या तनयो यतः ॥ ततो मन्ये न जननीमिमां वै तपतां वर ॥ ६७ ॥ तव प्रसादाच्चरणो न पतेद्भगवन्यथा ॥ मातृशापादयं देव तथा चिन्तय गोपते ॥ ६८ ॥ ॥ रविरुवाच ॥ असंशयं पुत्र महद्भविष्यत्यत्र कारणम् ॥ येन त्वामाविशत्क्रोधो धर्मज्ञं धर्मशालिनम् ॥ ६९ ॥ सर्वेषामेव शापानां प्रतिघातो हि विद्यते ॥ न तु मात्राभिशप्तानां क्वचिच्छापनिवर्तनम् ॥ ७० ॥ न शक्यमेतन्मिथ्या तु कर्तुं मातुर्वचस्तव ॥ किंचित्तेऽहं विधास्यामि तव शापापनोदनम् ॥ ७१ ॥ कृमयो मांसमादाय प्रयास्यन्ति महीतलम् ॥ कृतं तस्या वचः सत्यं त्वं च त्रातो भविष्यसि ॥ ७२ ॥ ॥ ब्रह्मोवाच ॥ आदित्यस्त्वब्रवीच्छायां किमर्थं तनयेषु वै ॥ तुल्येष्वप्यधिकः स्नेह एकं प्रति कृतस्त्वया ॥ ७३ ॥ नूनं नैषां त्वं जननी संज्ञाख्याऽपि क्वचिद्गता ॥ निर्गुणेष्वप्यपत्येषु माता शापं न दास्यति ॥ ७४ ॥ सा तत्परिहरन्ती च शापाद्भीता तदा रवेः ॥ कथयामास वृत्तान्तं स श्रुत्वा श्वशुरं ययौ ॥ ७५ ॥ स चादित्य यथान्यायमर्चयित्वा विभावसुम् ॥ निर्दग्धुकामं कोपेन सान्त्वयामास सुव्रतः ॥ ७६ ॥ ॥ विश्वकर्मोवाच ॥ तवातितेजसा व्याप्तमिदं रूपं सुदुःसहम् ॥ असहन्ती तु तत्संज्ञा वने चरति वै तपः ॥ ७७ ॥ द्रक्ष्यते तां भवानद्य स्वां भार्यां शुभचारिणीम् ॥ रूपार्थं भवतोऽरण्ये चरन्तीं सुमहत्तपः ॥ ७८ ॥ श्रुतं मे ब्रह्मणो वाक्यं यदि ते देव रोचते ॥ रूपं निर्वर्तयाम्यद्य तव कान्तं दिवस्पते ॥ ७९ ॥ ॥ ब्रह्मोवाच ॥ ततस्तथेति तं प्राह त्वष्टारं भगवान्रविः ॥ ततो विवस्वतो रूपं प्रागासीत्परिमण्डलम् ॥ ८० ॥ विश्वकर्माऽभ्यनुज्ञातः शाकद्वीपे विवस्वता ॥ भ्रमिमारोप्य तत्तेजःशातनायोपचक्रमे ॥ ८१ ॥ भ्रमताऽशेषजगतां नाभिभूतेन भास्वता ॥ समुद्राद्रिवनोपेता त्वारुरोह मही नभः ॥ ८२ ॥ गगनं चाखिलं विप्राः सचन्द्रग्रहतारकम् ॥ अधोगतं महाभागा बभूवाऽऽक्षिप्तमाकुलम् ॥ ॥ ८३ ॥ विक्षिप्तसलिलाः सर्वे बभूवुश्च तथाऽर्णवाः ॥ व्यभिद्यन्त महाशैलाः शीर्णसानुनिबन्धनाः ॥ ८४ ॥ ध्रुवाधाराण्यशेषाणि धिष्ण्यानि मुनिसत्तमाः ॥ त्रुटयद्रश्मिनिबन्धीनि बन्धनानि अधो ययुः ॥ ८५ ॥ वेगभ्रमणसंपातवायुक्षिप्ताः सहस्रशः ॥ व्यशीर्यन्त महामेघा घोरारावविराविणः ॥ ८६ ॥ भास्वद्भ्रमणविभ्रान्तभूम्याकाशरसातलम् ॥ जगदाकुलमत्यर्थं तदाऽऽसीन्मुनिसत्तमाः ॥ ८७ ॥ त्रैलोक्यं सकलं वीक्ष्य भ्रममाणं सुरर्षयः ॥ देवाश्च ब्रह्मणा सार्धं भास्वन्तमभितुष्टुवुः ॥ ८८ ॥ आदिदेवोऽसि देवानां जातस्त्वं भूतये भुवः ॥ सर्गस्थित्यन्तकालेषु त्रिधा भेदेन तिष्ठसि ॥ ८९ ॥ स्वस्ति तेऽस्तु जगन्नाथ घर्मवर्ष दिवाकर ॥ इन्द्रादयस्तदा देवा लिख्यमानमथास्तुवन् ॥ ९० ॥

जय देव जगत्स्वामिञ्जयाशेषजगत्पते ॥ ऋषयश्च ततः सप्त वसिष्ठात्रिपुरोगमाः ॥ ९१ ॥ तुष्टुवुर्विविधैः स्तोत्रैः स्वस्ति स्वस्तीतिवादिनः ॥ वेदोक्तिभिरथाग्र्याभिर्वालखिल्याश्च तुष्टुवुः॥९२॥अङ्गिराद्याश्च भास्वन्तं लिख्यमानं मुदा युताः ॥ त्वं नाथ मोक्षिणां मोक्षो ध्येयस्त्वं ध्यानिनां परः॥९३॥ त्वं गतिः सर्वभूतानां कर्मकाण्डविवर्तिनाम् ॥ संपूज्यस्त्वं तु देवेश शं नोऽस्तु जगतां पते ॥ ९४ ॥ शं नोऽस्तु द्विपदे नित्यं शं नश्चास्तु चतुष्पदे ॥ ततो विद्याधरगणा यक्षराक्षसपन्नगाः ॥ ९५ ॥ कृताञ्जलिपुटाः सर्वे शिरोभिः प्रणता रविम् ॥ ऊचुस्ते विविधा वाचो मनःश्रोत्रसुखावहाः ॥ ९६ ॥ सह्यं भवतु तेजस्ते भूतानां भूतभावन ॥ ततो हाहाश्च हूहूश्च नारदस्तुम्बुरुस्तथा ॥ ९७ ॥ उपगायितुमारब्धा गान्धर्वकुशला रविम् ॥ षड्जमध्यमगान्धारग्रामत्रयविशारदाः ॥ ९८ ॥ मूर्छनाभिश्च तालैश्च संप्रयोगैः सुखप्रदम् ॥ विश्वाची च घृताची च उर्वश्यथ तिलोत्तमा ॥ ९९ ॥ मेनका सहजन्या च रम्भा चाप्सरसां वरा ॥ ननृतुर्जगतामीशे लिख्यमाने विभावसौ ॥ १०० ॥ भावहावविलासाद्यान्कुर्वत्योऽभिनयान्बहून् ॥ प्रावाद्यन्त ततस्तत्र वीणावेण्वादिझर्झराः ॥ १०१ ॥ पणवाः पुष्कराश्चैव मृदङ्गाः पटहानकाः ॥ देवदुन्दुभयः शंखाः शतशोऽथ सहस्रशः ॥ १०२ ॥ गायद्भिश्चैव नृत्यद्भिर्गन्धर्वैश्चाप्सरोगणैः ॥ तूर्यवादित्रनिर्घोषैः सर्वं कोलाहलीकृतम् ॥ १०३ ॥ ततः कृताञ्जलिपुटा भक्तिनम्रात्ममूर्तयः ॥ लिख्यमाने सहस्रांशौ प्रणेमुः सर्वदेवताः ॥ १०४ ॥ ततः कोलाहले तस्मिन्सर्वभूतसमागमे ॥ तेजसः शातनं चक्रे विश्वकर्मा शनैः शनैः ॥ १०५ ॥ आजानुलिखितश्चासौ निपुणं विश्वकर्मणा ॥ नाभ्यनन्दत्तु लिखनं ततस्तेनावतारितः ॥ १०६ ॥ न तु निर्भर्त्सितं रूपं तेजसो हननेन तु ॥ कान्तात्कान्ततरं रूपमधिकं शुशुभे ततः ॥ १०७ ॥ इति हिमजलघर्मकालहेतोर्हरकमलासनविष्णुसंस्तुतस्य ॥ तदुपरि लिखनं निशम्य भानोर्व्रजति दिवाकरलोकमायुषोऽन्ते ॥ १०८ ॥ एवं जन्म रवेः पूर्वं बभूव मुनिसत्तमाः ॥ रूपं च परमं तस्य मया संपरिकीर्तितम् ॥ १०९ ॥ इति श्रीब्रह्मपुराणे स्वयंभ्वृषिसंवादे मार्तण्डस्य जन्मशरीरलिखनं नाम त्रिंशोऽध्यायः ॥ ३० ॥ ॥ मुनय ऊचुः ॥ भूयोऽपि कथयास्माकं कथां सूर्यसमाश्रिताम् ॥ न तृप्तिमधिगच्छामः शृण्वन्तस्सुखदां कथाम् ॥ १ ॥ योऽयं दीप्तो महातेजा वह्निराशिसमप्रभः ॥ एतद्वेदितुमिच्छामः प्रभावोऽस्य कुतः प्रभो ॥ २ ॥ ॥ ब्रह्मोवाच ॥ तमोभूतेषु लोकेषु नष्टे स्थावरजङ्गमे ॥ प्रकृतेर्गुणहेतुस्तु पूर्वं बुद्धिरजायत ॥ ३ ॥ अहंकारस्ततो जातो महाभूतप्रवर्तकः ॥ वाय्वग्निरापः खं भूमिस्ततस्त्वण्डमजायत ॥ ४ ॥ तस्मिन्नण्डे त्विमे लोकाः सप्त चैव प्रतिष्ठिताः ॥ पृथिवी सप्तभिर्द्वीपैः समुद्रैश्चैव सप्तभिः ॥ ५ ॥ तत्रैवावस्थितो ह्यासीदहं विष्णुर्महेश्वरः ॥ विमूढास्तामसाः सर्वे प्रध्यायन्ति तमीश्वरम् ॥ ६ ॥ ततो वै सुमहातेजाः प्रादुर्भूतस्तमोनुदः ॥ ध्यानयोगेन चास्माभिर्विज्ञातः

सविता तदा ॥ ७ ॥ ज्ञात्वा च परमात्मानं सर्वे एव पृथक्पृथक् ॥ दिव्याभिस्स्तुतिभिर्देवः स्तुतोऽस्माभिस्तदेश्वरः ॥ ८ ॥ आदिदेवोऽसि देवानामैश्वर्याच्च त्वमीश्वरः ॥ आदिकर्ताऽसि भूतानां देवदेवो दिवाकरः ॥ ९ ॥ जीवनः सर्वभूतानां देवगन्धर्वरक्षसाम् ॥ मुनिकिन्नरसिद्धानां तथैवोरगपक्षिणाम् ॥ १० ॥ त्वं ब्रह्मा त्वं महादेवस्त्वं विष्णुस्त्वं प्रजापतिः ॥ वायुरिन्द्रश्च सोमश्च विवस्वान्वरुणस्तथा ॥ ११ ॥ त्वं कालः सृष्टिकर्ता च हर्ता भर्ता तथा प्रभुः ॥ सरितः सागराः शैला विद्युदिन्द्रधनूंषि च ॥ १२ ॥ प्रलयः प्रभवश्चैव व्यक्ताव्यक्तः सनातनः ॥ ईश्वरात्परतो विद्या विद्यायाः परतः शिवः ॥ १३ ॥ शिवात्परतरो देवस्त्वमेव परमेश्वरः ॥ सर्वतःपाणिपादान्तः सर्वतोक्षिशिरोमुखः ॥ १४ ॥ सहस्रांशुः सहस्रास्यः सहस्रचरणेक्षणः ॥ भूतादिर्भूर्भुवः स्वश्च महः सत्यं तपो जनः ॥ १५ ॥ प्रदीप्तं दीपनं दिव्यं सर्वलोकप्रकाशकम् ॥ दुर्निरीक्ष्यं सुरेन्द्राणां यद्रूपं तस्य ते नमः ॥ १६ ॥ सुरसिद्धगणैर्जुष्टं भृग्वत्रिपुलहादिभिः ॥ स्तुतस्य परमव्यक्तं यद्रूपं तस्य ते नमः ॥ १७ ॥ वेद्यं वेदविदां नित्यं सर्वज्ञानसमन्वितम् ॥ सर्वदेवाधिदेवस्य यद्रूपं तस्य ते नमः ॥ १८ ॥ विश्वकृद्विश्वभूतं च वैश्वानरसुरार्चितम् ॥ विश्वस्थितमवेद्यं च यद्रूपं तस्य ते नमः ॥ १९ ॥ परं यज्ञात्परं वेदात्परं लोकात्परं दिवः ॥ परमात्मेत्यभिख्यातं यद्रूपं तस्य ते नमः ॥ २० ॥ अविज्ञेयमनालक्ष्यमध्यानगतमव्ययम् ॥ अनादिनिधनं चैव यद्रूपं तस्य ते नमः ॥ २१ ॥ नमो नमः कारणकारणाय नमो नमः पापविमोचनाय ॥ नमो नमस्तेऽदितिवंदिताय नमो नमो रोगविनाशनाय ॥ २२ ॥ नमो नमः सर्ववरप्रदाय नमो नमः सर्वसुखप्रदाय ॥ नमो नमः सर्वधनप्रदाय नमो नमः सर्वमतिप्रदाय ॥ २३ ॥ स्तुतः स भगवानेवं तैजसं रूपमास्थितः ॥ उवाच वाचा कल्याण्या को वरो वः प्रदीयताम् ॥ २४ ॥ देवा ऊचुः ॥ तवातितैजसं रूपं न कश्चित्सोढुमुत्सहेत् ॥ सहनीयं तद्भवतु हिताय जगतः प्रभो ॥ २५ ॥ एवमस्त्विति सोऽप्युक्त्वा भगवानादिकृत्प्रभुः ॥ लोकानां कार्यसिद्ध्यर्थं घर्मवर्षहिमप्रदः ॥ २६ ॥ ततः सांख्याश्च योगाश्च ये चान्ये मोक्षकाङ्क्षिणः ॥ ध्यायन्ति ध्यायिनो देवं हृदयस्थं दिवाकरम् ॥ २७ ॥ सर्वलक्षणहीनोऽपि युक्तो वा सर्वपातकैः ॥ सर्वं तु तरते पापं देवमर्कं समाश्रितः ॥ २८ ॥ अग्निहोत्रं च वेदाश्च यज्ञाश्च बहुदक्षिणाः ॥ भानोर्भक्तिनमस्कारकलां नार्हन्ति षोडशीम् ॥ २९ ॥ तीर्थानां परमं तीर्थं मङ्गलानां च मङ्गलम् ॥ पवित्रं च पवित्राणां प्रपद्यन्ते दिवाकरम् ॥ ३० ॥ शक्राद्यैः संस्तुतं देवं ये नमस्यन्ति भास्करम् ॥ सर्वकल्मषनिर्मुक्ताः सूर्यलोकं व्रजन्ति ते ॥ ३१ ॥ ॥ मुनय ऊचुः ॥ चिरात्प्रभृति नो ब्रह्मञ्छ्रोतुमिच्छा प्रवर्तते ॥ नाम्नामष्टशतं ब्रूहि यत्त्वयोक्तं पुरा रवेः ॥ ३२ ॥ ब्रह्मोवाच ॥ अष्टोत्तरशतं नाम्नां शृणुध्वं गदतो मम ॥

भास्करस्य परं गुह्यं स्वर्गमोक्षप्रदं द्विजाः॥३३॥ॐ सूर्योऽर्यमा भगस्त्वष्टा पूषाऽर्कः सविता रविः॥गभस्तिमानजः कालो मृत्युर्धाता प्रभाकरः॥३४॥ पृथिव्यापश्च तेजश्च खं वायुश्च परायणम् ॥ सोमो बृहस्पतिः शुक्रो बुधोऽङ्गारक एव च ॥ ३५ ॥ इन्द्रो विवस्वान्दीप्तांशुः शुचिः शौरिः शनैश्चरः ॥ ब्रह्मा विष्णुश्च रुद्रश्च स्कन्दो वैश्रवणो यमः ॥ ३६ ॥ वैद्युतो जाठरश्चाग्निरैन्धनस्तेजसां पतिः ॥ धर्मध्वजो वेदकर्ता वेदाङ्गो वेदवाहनः ॥ ३७ ॥ कृतं त्रेता द्वापरश्च कलिः सर्वामराश्रयः ॥ कलाकाष्ठामुहूर्ताश्च क्षपा यामास्तथा क्षणाः ॥ ३८ ॥ संवत्सरकरोऽश्वत्थः कालचक्रो विभावसुः ॥ पुरुषः शाश्वतो योगी व्यक्ताव्यक्तः सनातनः ॥ ३९ ॥ कालाध्यक्षः प्रजाध्यक्षो विश्वकर्मा तमोनुदः ॥ वरुणः सागरोंऽशश्च जीमूतो जीवनोऽरिहा ॥४०॥ भूताश्रयो भूतपतिः सर्वलोकनमस्कृतः ॥ स्रष्टा विवर्तको वह्नी सर्वस्याऽऽदिरलोलुपः ॥४१॥ अनन्तः कपिलो भानुः कामदः सर्वतोमुखः ॥ जयो विशालो वरदः सर्वभूतहिते रतः ॥ ४२ ॥ मनः सुपर्णो भूतादिः शीघ्रगः प्राणधारणः ॥ धन्वन्तरिर्धूमकेतुरादिदेवोऽदितेः सुतः ॥ ४३ ॥ द्वादशात्मा रविर्दक्षः पिता माता पितामहः ॥ स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं त्रिविष्टपम् ॥ ४४ ॥ देहकर्ता प्रशान्तात्मा विश्वात्मा विश्वतोमुखः ॥ चराचरात्मा सूक्ष्मात्मा मैत्रेयः करुणान्वितः॥४५॥ एतद्वै कीर्तनीयस्य सूर्यस्यामिततेजसः॥ नाम्नामष्टशतं रम्यं मया प्रोक्तं द्विजोत्तमाः ॥ ४६ ॥ सुरगणपितृयक्षसेवितं ह्यसुरनिशाकरसिद्धवन्दितम् ॥ वरकनकहुताशनप्रभं प्रणिपतितोऽस्मि हिताय भास्करम् ॥ ॥ ४७ ॥ सूर्योदये यः सुसमाहितः पठेत्स पुत्रदारान्धनरत्नसंचयान् ॥ लभेत जातिस्मरतां नरः सदा स्मृतिं च मेधां च स विन्दते पराम् ॥४८॥ इमं स्तवं देववरस्य यो नरः प्रकीर्तयेच्छुद्धमनाः समाहितः ॥ विमुच्यते शोकदवाग्निसागराल्लभेत कामान्मनसा यथेप्सितान् ॥ ४९ ॥

इति श्रीब्रह्मपुराणे स्वयंभ्वृषिसंवादे सूर्यनमाष्टोत्तरशतं नामैकत्रिंशोऽध्यायः ॥ ३१ ॥ ब्रह्मोवाच ॥ योऽसौ सर्वगतो देवस्त्रिपुरारिस्त्रिलोचनः ॥ उमाप्रियकरो रुद्रश्चन्द्रार्धकृतशेखरः ॥ १ ॥ विद्राव्य विबुधान्सर्वान्सिद्धविद्याधरानृषीन् ॥ गन्धर्वयक्षनागांश्च तथाऽन्यांश्च समाहितान् ॥ २ ॥ जघान पूर्वं दक्षस्य यजतो धरणीतले ॥ यज्ञं समृद्धं रत्नाढ्यं सर्वसंभारसंभृतम् ॥ ३ ॥ यस्य प्रतापसंत्रस्ताः शक्राद्यास्त्रिदिवौकसः ॥ शान्तिं न लेभिरे विप्राः पुनस्तं शरणं गताः ॥ ४ ॥ स आस्ते तत्र वरदः शूलपाणिर्वृषध्वजः ॥ पिनाकपाणिर्भगवान्दक्षयज्ञविनाशनः ॥ ५ ॥ महादेवोत्कले देशे कृत्तिवासा वृषध्वजः ॥ एकाम्रके मुनिश्रेष्ठाः सर्वकामप्रदो हरः ॥ ६ ॥ मुनय ऊचुः ॥ किमर्थं स भवो देवः सर्वभूतहिते रतः ॥ जघान यज्ञं दक्षस्य देवैः सर्वैरलंकृतम् ॥ ७ ॥ न ह्यल्पं कारणं तत्र प्रभो मन्यामहे वयम् ॥ श्रोतुमिच्छामहे ब्रूहि परं कौतूहलं हि नः ॥ ८ ॥

॥ ब्रह्मोवाच ॥ दक्षस्याऽऽसन्नष्ट कन्या याश्चैव पतिसंगताः ॥ स्वेभ्यो गृहेभ्यश्चाऽऽनीय ताः पिताऽभ्यर्चयद्गृहे ॥ ९ ॥ ततस्त्वभ्यर्चिता विप्रा निवसंत्यः पितुर्गृहे ॥ तासां ज्येष्ठा सती नाम पत्नी या त्र्यम्बकस्य वै ॥ १० ॥ नाऽऽजुहावाऽऽत्मजां तां वै दक्षो रुद्रमभिद्विषन् ॥ अकरोत्सन्नतिं दक्षे न च कांचिन्महेश्वरः ॥ ११ ॥ जामाता श्वशुरे तस्मिन्स्वभावात्तेजासि स्थितः ॥ ततो ज्ञात्वा सती सर्वास्तास्तु प्राप्ताः पितुर्गृहम् ॥ १२ ॥ आजगामाप्यनाहूता सा सती स्वपितुर्गृहम् ॥ ताभ्यो हीनां पिता चक्रे सत्याः पूजामसंमताम् ॥ ततोऽब्रवीत्सा पितरं देवी क्रोधादमर्षिता ॥१३॥ ॥ सत्युवाच ॥ यवीयसीभ्यः श्रेष्ठाऽहं किं न पूजासि मां विभो ॥ असत्कृतामविज्ञाय कृतवानसि गर्हिताम् ॥ अहं ज्येष्ठा वरिष्ठा च मां त्वं सत्कर्तुमर्हसि ॥ ॥ १४ ॥ ब्रह्मोवाच ॥ एवमुक्तोऽब्रवीदेनां दक्षः संरक्तलोचनः ॥ १५ ॥ दक्ष उवाच ॥ त्वत्तः श्रेष्ठा वरिष्ठाश्च पूज्या बालाः सुता मम ॥ तासां ये चैव भर्तारस्ते मे बहुमताः सति ॥ १६ ॥ ब्रह्मिष्ठाश्च व्रतस्थाश्च महायोगाः सुधार्मिकाः ॥ गुणैश्चैवाधिकाः श्लाघ्याः सर्वे ते त्र्यम्बकात्सति ॥ १७ ॥ वसिष्ठोऽत्रिः पुलस्त्यश्च अङ्गिराः पुलहः क्रतुः ॥ भृगुर्मरीचिश्च तथा श्रेष्ठा जामातरो मम ॥ १८ ॥ तैश्चापि स्पर्धते शर्वो नित्यं ते चैव तं प्रति ॥ तेन त्वां न बुभूषामि प्रतिकूलो हि मे भवः ॥ १९ ॥ इत्युक्तवांस्तदा दक्षः संप्रमूढेन चेतसा ॥ शापार्थमात्मनश्चैव येनोक्ता वै महर्षयः ॥ तथोक्ता पितरं सा वै क्रुद्धा देवी तमब्रवीत् ॥ २० ॥ सत्युवाच ॥ वाङ्मनःकर्मभिर्यस्माददुष्टं तं विगर्हसि ॥ तस्मात्त्यजाम्यहं देहमिमं तात तवाऽऽत्मजम् ॥ २१ ॥ ब्रह्मोवाच ॥ ततस्तेनापमानेन सती दुःखादमर्षिता ॥ अब्रवीद्वचनं देवी नमस्कृत्य स्वयंभुवे ॥ २२ ॥ सत्युवाच ॥ यत्राहमुपपद्ये वै पुनर्देहेन भास्वता ॥ तत्राप्यहमसंमूढा संभूता धार्मिकी पुनः ॥ गच्छेयं धर्मपत्नीत्वं त्र्यम्बकस्यैव धीमतः ॥ २३ ॥ ब्रह्मोवाच ॥ तत्रैवाथ समासीना रुष्टाऽऽत्मानं समादधे ॥ धारयामास चाऽऽग्नेयीं धारणामात्मनाऽऽत्मनि ॥ २४ ॥ ततः स्वात्मानमुत्थाप्य वायुना समुदीरितः ॥ सर्वाङ्गेभ्यो विनिःसृत्य वह्निर्भस्म चकार ताम् ॥ २५ ॥ तदुपश्रुत्य निधनं सत्या देव्याः स शूलधृक् ॥ संवादं च तयोर्बुद्ध्वा याथातथ्येन शंकरः ॥ दक्षस्य च विनाशाय चुकोप भगवान्प्रभुः ॥ २६ ॥ श्रीशंकर उवाच ॥ यस्मादवमता दक्ष सहसैवाऽऽगता सती ॥ प्रशस्ताश्चेतराः सर्वास्त्वत्सुता भर्तृभिः सह ॥ २७ ॥ तस्माद्वैवस्वते प्राप्ते पुनरेते महर्षयः ॥ उत्पत्स्यन्ति द्वितीये वै तव यज्ञे ह्ययोनिजाः ॥ २८ ॥ हुते वै ब्रह्मणः सत्रे चाक्षुषस्यान्तरे मनोः ॥ अभिव्याहृत्य सप्तर्षीन्दक्षं सोऽभ्यशपत्पुनः ॥ २९ ॥ भविता मानुषो राजा चाक्षुषस्यान्तरे मनोः ॥ प्राचीनबर्हिषः पौत्रः पुत्रश्चापि प्रचेतसः ॥ ३० ॥ दक्ष इत्येव नाम्ना त्वं मारिषायां जनिष्यसि ॥ कन्यायां शाखिनां

चैव प्राप्ते वै चाक्षुषेऽन्तरे ॥ ३१ ॥ अहं तत्रापि ते विघ्नमाचरिष्यामि सुव्रत ॥ धर्मकामार्थयुक्तेषु कर्मस्विह पुनः पुनः ॥ ३२ ॥ ततो व्याहृतो दक्षो रुद्रं सोऽभ्यशपत्पुनः ॥ ३३ ॥ दक्ष उवाच ॥ यस्मात्त्वं मत्कृते क्रूर ऋषीन्व्याहृतवानसि ॥ तस्मात्सार्धं सुरैर्यज्ञे न त्वां यक्ष्यन्ति वै द्विजाः ॥ ॥ ३४ ॥ कृत्वाऽऽहुतिं तव क्रूर अपः स्पृशन्ति कर्मसु ॥ इहैव वत्स्यसे लोके दिवं हित्वाऽऽयुगक्षयात् ॥ ततो देवैश्च तैः सार्धं नेज्यसे पृथिवीतले ॥ ३५ ॥ रुद्र उवाच ॥ चातुर्वर्ण्यं तु देवानां ते चाप्ये तत्र भुञ्जते ॥ न भोक्ष्ये सहितस्तैस्तु ततो भोक्ष्याम्यहं पृथक् ॥ ३६ ॥ सर्वेषांमेव लोकानामादिर्भूर्लोक उच्यते ॥ तमहं धारयाम्येकः स्वेच्छया न तवाऽऽज्ञया ॥ ३७ ॥ तस्मिन्धृते सर्वलोकाः सर्वे तिष्ठन्ति शाश्वताः ॥ तस्मादहं वसामीह सततं न तवाऽऽज्ञया ॥ ३८ ॥ ब्रह्मोवाच ॥ ततोऽभिव्याहृतो दक्षो रुद्रेणामिततेजसा ॥ स्वायंभुवीं तनुं त्यक्त्वा उत्पन्नो मानुषेष्विह ॥ ३९ ॥ यदा गृहपतिर्दक्षो यज्ञानामीश्वरः प्रभुः ॥ समस्तेनेह यज्ञेन सोऽयजद्दैवतैः सह ॥ ४० ॥ अथ देवी सती या तु प्राप्ते वैवस्वतेऽन्तरे ॥ मेनायां तामुमां देवीं जनयामास शैलराट् ॥ ४१ ॥ सा तु देवी सती पूर्वमासीत्पश्चादुमाऽभवत् ॥ सहव्रता भवस्यैव नैतया मुच्यते भवः ॥ ४२ ॥ यावदिच्छति संस्थानं प्रभुर्मन्वन्तरेष्विह ॥ मारीचं कश्यपं देवी यथाऽदितिरनुव्रता ॥ ४३ ॥ साऽर्धं नारायणं श्रीस्तु मघवन्तं शची यथा ॥ विष्णुं कीर्तिरुषा सूर्यं वसिष्ठं चाप्यरुन्धती ॥ ४४ ॥ नैतांस्तु विजहत्येता भर्तॄन्देव्यः कथंचन ॥ एवं प्राचेतसो दक्षो जज्ञे वै चाक्षुषेऽन्तरे ॥ ४५ ॥ प्राचीनबर्हिषः पौत्रः पुत्रश्चापि प्रचेतसाम् ॥ दशभ्यस्तु प्रचेतोभ्यो मारिषायां पुनर्नृप ॥ ४६ ॥ जज्ञे रुद्राभिशापेन द्वितीयमिति नः श्रुतम् ॥ भृग्वादयस्तु ते सर्वे जज्ञिरे वै महर्षयः ॥ ४७ ॥ आद्ये त्रेतायुगे पूर्वं मनोर्वैवस्वतस्य ह ॥ देवस्य महतो यज्ञे वारुणीं बिभ्रतस्तनुम् ॥ ४८ ॥ इत्येषोऽनुशयो ह्यासीत्तयोर्जात्यन्तरे गतः ॥ शापे तयोर्वै दक्षस्य त्र्यम्बकस्य च धीमतः ॥ ४९ ॥ तस्मान्न संशयः कार्यो वैरेष्विह कदाचन ॥ जात्यन्तरगतस्यापि भावितस्य शुभाशुभैः ॥ ( देहान्तरे स्वभावश्च पुनर्देहं न मुञ्चति ॥ वासना न जहात्येव देहान्तरगतेष्वपि ॥ दुःखं त्वनुशयात्पुंसस्तत्र कार्यं विजानता ) जन्तोर्न भूतये ख्यातिस्तत्र कार्यं विजानता ॥ ५० ॥ मुनय ऊचुः ॥ कथं रोषेण सा पूर्वं दक्षस्य दुहिता सती ॥ त्यक्त्वा देहं पुनर्जाता गिरिराजगृहे प्रभो ॥ ५१ ॥ देहान्तरे पुनस्तस्याः कथं देहो बभूव ह ॥ भवेन सह संयोगः संवादश्च तयोः कथम् ॥ ५२ ॥ स्वयंवरः कथं वृत्तस्तस्मिन्महति जन्मनि ॥ विवाहश्च जगन्नाथ सर्वाश्चर्यसमन्वितः ॥ ५३ ॥ तत्सर्वं विस्तराद्ब्रह्मन्वक्तुमर्हसि सांप्रतम् ॥ श्रोतुमिच्छामहे पुण्यां कथां चातिमनोरमाम् ॥ ५४ ॥ ब्रह्मोवाच ॥ शृणुध्वं मुनिशार्दूलाः कथां पापप्रणाशिनीम् ॥ उमाशं

करयोः पुण्यां सर्वकामफलप्रदाम् ॥ ५५ ॥ कदाचित्स्वगृहात्प्राप्तं कश्यपं द्विपदां वरम् ॥ अपृच्छद्धिमवान्वृत्तं लोके ख्यातिकरं हितम् ॥ ५६ ॥ केनाक्षयाश्च लोकाः स्युः ख्यातिश्च परमा मुने ॥ तथैव चार्चनीयत्वं सत्सु तत्कथयस्व मे ॥ ५७ ॥ कश्यप उवाच ॥ अपत्येन महाबाहो सर्वमे तदवाप्यते ॥ ममाऽऽख्यातिरपत्येन ब्रह्मणो ऋषिभिः सह ॥ ५८ ॥ किं न पश्यसि शैलेन्द्र यतो मां परिपृच्छसि ॥ वर्तयिष्यामि. यच्चापि यथा दृष्टं पुराऽचल ॥ ५९ ॥ वाराणसीमहं गच्छन्नपश्यं संस्थितं दिवि ॥ विमानं सुनवं दिव्यमनौपम्यं महर्धिमत् ॥ ६० ॥ तस्याधस्तादार्तनादं गर्तस्थाने शृणोम्यहम् ॥ तमहं तपसा ज्ञात्वा तत्रैवान्तर्हितः स्थितः ॥ ६१ ॥ अथागात्तत्र शैलेन्द्र विप्रो नियमवाञ्शुचिः ॥ तीर्थाभिषेकपूतात्मा परे तपसि संस्थितः ॥ ६२ ॥ अथ स व्रजमानस्तु व्याघ्रेणाऽऽभीषितो द्विजः ॥ [illegible] तं तदा देशं स गतो यत्र भूधर ॥ ६३ ॥ गर्ताधो वीरणस्तम्बे लम्बमानांस्तदा पितॄन् ॥ अपश्यदार्तो दुःखार्तास्तानपृच्छच्च स द्विजः ॥ ६४ ॥ द्विज उवाच ॥ के यूयं वीरणस्तम्बे लम्बमाना ह्यधोमुखाः ॥ दुःखिताः केन मोक्षश्च युष्माकं भविताऽनघाः ॥ ६५ ॥ पितर ऊचुः ॥ वयं ते कृतपुण्यस्य पितरः सपितामहाः ॥ प्रपितामहाश्च क्लिश्यामस्तव दुष्टेन कर्मणा ॥ ६६ ॥ नरकोऽयं महाभाग गर्तरूपेण संस्थितः ॥ त्वं चापि वीरणस्तम्बस्त्वयि लम्बामहे वयम् ॥ ६७ ॥ यावत्त्वं जीवसे विप्र तावदेव वयं स्थिताः ॥ मृते त्वयि गमिष्यामो नरकं पापचेतसः ॥ ६८ ॥ यदि त्वं दारसंयोगं कृत्वाऽपत्यं गुणोत्तरम् ॥ उत्पादयासि ते नास्मान्मुच्येम वयमेनसः ॥ ६९ ॥ नान्येन तपसा पुत्र तीर्थानां च फलेन च ॥ एतत्कुरु महाबुद्धे तारयस्व पितॄन्भयात् ॥ ७० ॥ ॥ कश्यप उवाच ॥ स तथेति प्रतिज्ञाय आराध्य वृषभध्वजम् ॥ पितॄन्भयात्समुद्धृत्य गणत्वं प्रचकार वै ॥ ७१ ॥ स्वयं रुद्रस्य दयितः सुवेशो नाम नामतः ॥ संमतो विमलश्चैव रुद्रस्य गणपोऽभवत् ॥ ७२ ॥ तस्मात्कृत्वा तपो घोरमपत्यं गुणवद्दृशम् ॥ उत्पादयस्व शैलेन्द्र सुतां त्वं वरवर्णिनीम् ॥ ७३ ॥ ॥ ब्रह्मोवाच ॥ स एवमुक्तो ऋषिणा शैलेन्द्रो नियमस्थितः ॥ तपश्चकाराप्यतुलं येन तुष्टिरभून्मम ॥ ७४ ॥ तदा तमुत्पपाताहं वरदोऽस्मीति चाब्रवम् ॥ ब्रूहि तुष्टोऽस्मि शैलेन्द्र तपसाऽनेन सुव्रत ॥ ७५ ॥ ॥ हिमवानुवाच ॥ भगवन्पुत्रमिच्छामि गुणैः सर्वैरलंकृतम् ॥ एवं वरं प्रयच्छस्व यदि तुष्टोऽसि मे प्रभो ॥ ७६ ॥ ॥ ब्रह्मोवाच ॥ तस्य तद्वचनं श्रुत्वा गिरिराजस्य भो द्विजाः ॥ तदा तस्मै वरं चाहं दत्तवान्मनसेप्सितम् ॥ ७७ ॥ कन्या भवित्री शैलेन्द्र तपसाऽनेन सुव्रत ॥ यस्याः प्रसादात्सर्वत्र कीर्तिमाप्स्यासि शोभनाम् ॥ ७८ ॥ अर्चितः सर्वदेवानां तीर्थकोटिसमावृतः ॥ पावनैश्चैव पुण्यैश्च देवानामपि सर्वतः ॥ ७९ ॥ ज्येष्ठा च सा भवित्री ते अन्ये चानुगते शुभे ॥ ८० ॥ ॥ ब्रह्मोवाच ॥ एव

मुत्त्वा नतश्चाहं तत्रैवान्तरधीतवान् ॥ सोऽपि कालेन शैलेन्द्रो मेनायामुदपादयत् ॥ अपर्णामेकपर्णां च तथा चैवैकपाटलाम् ॥ ८१ ॥ न्यग्रोधमेकपर्णं तु पाटलं चैकपाटलाम् ॥ अशित्वा त्वेकपर्णा तु अनिकेतस्तपोऽचरत् ॥ ८२ ॥ शतं वर्षसहस्राणां दुश्चरं देवदानवैः ॥ आहारमेकपर्णं तु एकपर्णा समाचरत् ॥ ८३ ॥ पाटलेन तथैकेन विदधे चैकपाटला ॥ पूर्णे वर्षसहस्रे तु आहारं ते प्रचक्रतुः ॥ ८४ ॥ अपर्णा तु निराहारा तां माता प्रत्यभाषत ॥ निषेधयन्ती चोमेति मातृस्नेहेन दुःखिता ॥ ८५ ॥ सा तथोक्ता तया मात्रा देवी दुश्चरचारिणी ॥ तेनैव नाम्ना लोकेषु विख्याता सुरपूजिता ॥ ८६ ॥ एतत्तु त्रिकुमारीकं जगत्स्थावरजङ्गमम् ॥ एतासां तपसां वृत्तं यावद्भूमिर्धरिष्यति ॥ ८७ ॥ तपःशरीरास्ताः सर्वास्तिस्रो योगं समाश्रिताः ॥ सर्वाश्चैव महाभागास्तथा च स्थिरयौवनाः ॥ ८८ ॥ ता लोकमातरश्चैव ब्रह्मचारिण्य एव च ॥ अनुगृह्णन्ति लोकांश्च तपसा स्वेन सर्वदा ॥ ८९ ॥ उमा तासां वरिष्ठा च ज्येष्ठा च वरवर्णिनी ॥ महायोगवलोपेता महादेवमुपस्थिता ॥ ९० ॥ दत्तकश्चोशना तस्य पुत्रः स भृगुनन्दनः ॥ आसीत्तस्यैकपर्णा तु देवलं सुषुवे सुतम् ॥ ९१ ॥ या तु तासां कुमारीणां तृतीया ह्येकपाटला ॥ पुत्रं सा तमलर्कस्य जैगीषव्यमुपस्थिता ॥ ९२ ॥ तस्याश्च शङ्खलिखितौ स्मृतौ पुत्रावयोनिजौ ॥ उमा तु या मया तुभ्यं कीर्तिता वरवर्णिनी ॥ ९३ ॥ अथ तस्यास्तपोयोगात्त्रैलोक्यमखिलं तदा ॥ प्रधूपितमिहाऽऽलक्ष्य वचस्तामहमब्रवम् ॥ ९४ ॥ देवि किं तपसा लोकांस्तापयिष्यसि शोभने ॥ त्वया सृष्टमिदं सर्वं मा कृत्वा तद्विनाशय ॥ ९५ ॥ त्वं हि धारयसे लोकानिमान्सर्वान्स्वतेजसा ॥ ब्रूहि किं ते जगन्मातः प्रार्थितं संप्रसीद नः ॥ ९६ ॥ ॥ देव्युवाच ॥ यदर्थं तपसो ह्यस्य चरणं मे पितामह ॥ त्वमेव तत्त्वं जानीषे ततः पृच्छसि किं पुनः ॥ ९७ ॥ ॥ ब्रह्मोवाच ॥ ततस्तामब्रवं चाहं यदर्थं तप्यसे शुभे ॥ स त्वां स्वयमुपागम्य इहैव वरयिष्यति ॥ ९८ ॥ शर्व एव पतिः श्रेष्ठः सर्वलोकेश्वरेश्वरः ॥ वयं सदैव यस्येमे वश्या वै किंकराः शुभे ॥ ९९ ॥ स देवदेवः परमेश्वरः स्वयं स्वयंभुरायास्यति देवि तेऽन्तिकम् ॥ उदाररूपो विकृतादिरूपः समानरूपोऽपि न यस्य कस्यचित् ॥ १०० ॥ महेश्वरः पर्वतलोकवासी चराचरेशः प्रथमोऽप्रमेयः ॥ विनेन्दुना हीन्द्रसमानवर्चसा विभीषणं रूपमिवाऽऽस्थितो यः ॥१०१॥ इति श्रीब्रह्मपुराणे स्वयंभुऋषिसंवादे द्वात्रिंशोऽध्यायः ॥ ३२ ॥ ॥ ब्रह्मोवाच ॥ ततस्तामब्रुवन्देवास्तदा गत्वातिसत्वरम् ॥ देवि येनैव सृष्टासि न विना यस्त्वया शिवे ॥ १ ॥ स भर्ता तव देवेशो भविता मा तपः कृथाः ॥ ततः प्रदक्षिणीकृत्य देवा विप्रा गिरेः सुताम् ॥ २ ॥ जग्मुश्चादर्शनं तस्याः सा चापि विरराम ह ॥ सा देवी सक्तमित्येवमुक्त्वा स्वस्याऽऽश्रमे शुभे ॥ ३ ॥ द्वारि जातमशोकं च समुपाश्रित्य चाऽऽस्थिता ॥ अथागा

चन्द्रतिलकस्त्रिदशार्तिहरो हरः ॥ ४ ॥ विकृतं रूपमास्थाय ह्रस्वो बाहुक एव च ॥ विभग्ननासिको भूत्वा कुब्जः केशान्तपिङ्गलः ॥ ५ ॥ उवाच विकृतास्यश्च देवि त्वां वरयाम्यहम् ॥ अथोमा योगसंसिद्धा ज्ञात्वा शंकरमागतम् ॥ ६ ॥ अन्तर्भावविशुद्धात्मा कृपानुष्ठानलिप्सया ॥ तमु वाचार्घपाद्याभ्यां मधुपर्केण चैव हि ॥ ७ ॥ संपूज्य सुमनोभिस्तं ब्राह्मणं ब्राह्मणप्रिया ॥ ८ ॥ ॥ देव्युवाच ॥ भगवन्नस्वतन्त्राऽहं पिता मे जननी तथा ॥ स प्रभुर्मम दाने वै कन्याऽहं द्विजपुंगव ॥ ९ ॥ गत्वा याचस्व पितरं मम शैलेन्द्रमव्ययम् ॥ स चेद्ददाति मां विप्र तुभ्यं तदु चितं मम ॥ १० ॥ ॥ ब्रह्मोवाच ॥ ततः स भगवान्देवस्तथैव विकृतः प्रभुः ॥ उवाच शैलराजं तं सुतां ये यच्छ शैलराट् ॥ ११ ॥ स तं विकृतरूपेण ज्ञात्वा रुद्रमथाव्ययम् ॥ भीतः शापाच्च विमना इदं वचनमब्रवीत् ॥१२॥ शैलेन्द्र उवाच ॥ भगवन्नावमन्येऽहं ब्राह्मणान्भुवि देवताः ॥ मनीषितं तु यत्पूर्वं तच्छृणुष्व महामते ॥१३॥ स्वयंवरो मे दुहितुर्भविता विप्रपूजितः ॥ वरयेद्यं स्वयं तत्र स भर्ताऽस्या भवेदिति ॥ १४ ॥ तच्छ्रुत्वा शैलवचनं भगवान्वृषभध्वजः ॥ देव्याः समीपमागत्य इदमाह महामनाः ॥ १५ ॥ ॥ शिव उवाच ॥ देवि पित्रा त्वनुज्ञातः स्वयंवर इति श्रुतिः ॥ तत्र त्वं वरयित्री यं स ते भर्ता किलानघे ॥ १६ ॥ तदापृच्छ्य गमिष्यामि दुर्लभां त्वां वरानने ॥ रूपवन्तं समुत्सृज्य वृणीषे मादृशं कथम्॥ १७ ॥ ॥ ब्रह्मोवाच ॥ तेनोक्ता सा तदा तत्र भावयन्ती तदीरितम् ॥ भावं च रुद्रनिहितं प्रसादं मनसस्तथा ॥ १८ ॥ संप्राप्योवाच देवेशं मा तेऽभूद्बुद्धि रन्यथा ॥ अहं त्वां वरयिष्यामि नाद्भुतं तु कथंचन ॥ १९ ॥ अथवा तेऽस्ति संदेहो मयि विप्र कथंचन ॥ इहैव त्वां महाभाग वरयामि मनोगतम्॥ ॥२०॥ ब्रह्मोवाच ॥ गृहीत्वा स्तवकं पौष्पं हस्ताभ्यां तत्र संस्थिता ॥ स्कंधे शंभोः समाधाय देवी प्राह वृतोऽसि मे॥२१॥ततः स भगवान्देवस्तया देव्या वृतस्तदा ॥ उवाच तमशोकं वै वाचा संजीवयन्निव ॥ २२ ॥ शिव उवाच ॥ यस्मात्तव सुपुण्येन स्तवकेन वृतोऽस्म्यहम् ॥ तस्मात्त्वं जरया त्यक्तस्त्वमरः संभविष्यसि ॥ २३ ॥ कामरूपी कामपुष्पः कामदो दयितो मम ॥ सर्वाभरणपुष्पाढ्यः सर्वपुष्पफलोपगः ॥ २४ ॥ सर्वान्नभक्ष कश्चैव अमृतस्वाद एव च ॥ सर्वगन्धश्च देवानां भविष्यासि दृढप्रियः ॥ २५ ॥ निर्भयः सर्वलोकेषु चरिष्यासि मुनिर्वृतः ॥ आश्रमं चेममत्यर्थं चित्रकूटेतिविश्रुतम् ॥ २६ ॥ यो हि यास्यति पुण्यार्थी सोऽश्वमेधमवाप्स्यति ॥ यस्तु तत्र मृतश्चापि ब्रह्मलोकं गमिष्यति ॥ २७ ॥ यश्चात्र नियमैर्युक्तः प्राणान्सम्यक्परित्यजेत् ॥ स देव्यास्तपसा युक्तो महागणपतिर्भवेत् ॥ २८ ॥ ब्रह्मोवाच ॥ एवमुक्त्वा तदा देव आपृच्छ्य हिमव त्सुताम् ॥ अन्तर्दधे जगत्स्रष्टा सर्वभूतमहेश्वरः ॥ २९ ॥ *साऽपि देवी गते तस्मिन्भगवत्यमितात्मनि ॥ तत एवोन्मुखी भूत्वा शिलायां संभवन्त*

ह ॥ ३० ॥ उन्मुखी सा भवे तस्मिन्महेशे जगतां प्रभौ ॥ निशेव चन्द्ररहिता न बभौ विमनास्तदा ॥ ३१ ॥ अथ शुश्राव शब्दं च बालस्याऽऽ
र्तस्य शैलजा ॥ सरस्युदकसंपूर्णे समीपे चाऽऽश्रमस्य च ॥ ३२ ॥ स कृत्वा बालरूपं तु देवदेवः शिवस्तदा ॥ क्रीडाहेतोः सरोमध्ये ग्राहग्रस्तो
ऽभवत्तदा ॥ ३३ ॥ योगमायां समास्थाय प्रपञ्चोद्भवकारणम् ॥ तद्रूपं सरसो मध्ये कृत्वैवं समभाषत ॥ ३४ ॥ बाल उवाच ॥ त्रातु मां कश्चिदि
त्याह ग्राहेण हतचेतसम् ॥ धिक्कष्टं बाल एवाहमप्राप्तार्थमनोरथः ॥ ३५ ॥ प्रयामि निधनं वक्त्रे ग्राहस्यास्य दुरात्मनः ॥ शोचामि न स्वकं देहं
ग्राहग्रस्तः सुदुःखितः ॥ ३६ ॥ किन्तु शोचामि पितरं मातरं च तपस्विनीम् ॥ ग्राहगृहीतं मां श्रुत्वा प्राप्तं निधनमुत्सुकौ ॥ ३७ ॥ प्रियपुत्रावे
कपुत्रौ प्राणान्नूनं त्यजिष्यतः ॥ अहो बत सुकष्टं वै योऽहं बालोऽकृताश्रमः ॥ अन्तर्ग्राहेण ग्रस्तस्तु यास्यामि निधनं किल ॥ ३८ ॥ ब्रह्मोवाच ॥
श्रुत्वा तु देवी तं नादं विप्रस्याऽऽर्तस्य शोभना ॥ उत्थाय प्रस्थिता तत्र यत्र तिष्ठत्यसौ द्विजः ॥ ३९ ॥ साऽपश्यदिन्दुवदना बालकं चारुरूपि
णम् ॥ ग्राहस्य मुखमापन्नं वेपमानमवस्थितम् ॥ ४० ॥ सोऽपि ग्राहवरः श्रीमान्दृष्ट्वा देवीमुपागताम् ॥ तं गृहीत्वा द्रुतं यातो मध्यं सरस एव
हि ॥ ४१ ॥ स कृष्यमाणस्तेजस्वी नादमार्तं तदाऽकरोत ॥ अथाऽऽह देवी दुःखार्ता बालं दृष्ट्वा महाव्रता ॥ ४२ ॥ ॥ पार्वत्युवाच ॥ ग्राह
राज महासत्त्व बालकं ह्येकपुत्रकम् ॥ विसृजेमं महादंष्ट्र क्षिप्रं भीमपराक्रम ॥ ४३ ॥ ॥ ग्राह उवाच ॥ यो देवि दिवसे षष्ठे प्रथमं समुपैति माम् ॥
स आहारो मम पुरा विहितो लोककर्तृभिः ॥ ४४ ॥ सोऽयं मम महाभागे षष्ठेऽहनि गिरीन्द्रजे ॥ ब्रह्मणा प्रेरितो नूनं नैनं मोक्ष्ये कथंचन ॥
॥ ४५ ॥ ॥ देव्युवाच ॥ यन्मया हिमवच्छृङ्गे चरितं तप उत्तमम् ॥ तेन बालमिमं मुञ्च ग्राहराज नमोऽस्तु ते ॥ ४६ ॥ ॥ ग्राह उवाच ॥
मा व्ययस्तपसो देवि भृशं बाले शुभानने ॥ यद्ब्रवीमि कुरु श्रेष्ठे तथा मोक्षमवाप्स्यति ॥ ४७ ॥ ॥ देव्युवाच ॥ ग्राहाधिप वदस्वाऽऽशु यत्स
तामविगर्हितम् ॥ तत्कृतं नात्र संदेहो यतो मे ब्राह्मणाः प्रियाः ॥ ४८ ॥ ॥ ग्राह उवाच ॥ यत्कृतं वै तपः किंचिद्भवत्या स्वल्पमुत्तमम् ॥ तत्सर्वं
मे प्रयच्छाऽऽशु ततो मोक्षमवाप्स्यति ॥ ४९ ॥ ॥ देव्युवाच ॥ जन्मप्रभृति यत्पुण्यं महाग्राह कृतं मया ॥ तत्ते सर्वं मया दत्तं मुञ्च बालं महा
ग्रह ॥ ५० ॥ ॥ ब्रह्मोवाच ॥ प्रजज्वाल ततो ग्राहस्तपसा तेन संवृतः ॥ आदित्य इव मध्याह्ने दुर्निरीक्ष्यस्तदाऽभवत् ॥ उवाच चैवं तुष्टात्मा
देवीं लोकस्य धारिणीम् ॥ ५१ ॥ ॥ ग्राह उवाच ॥ देवि किं कृत्यमेतावदनिश्चित्य महाव्रते ॥ तपसोऽप्यर्जनं दुःखं तस्य त्यागो न शस्यते ॥
॥ ५२ ॥ गृहाण तप एव त्वं बालं चेमं सुमध्यमे ॥ तुष्टोऽस्मि ते विप्रभक्त्या वरं तस्माद्ददामि ते ॥ सा त्वेवमुक्ता ग्राहेण उवाचेदं महा

व्रता ॥ ५३ ॥ ॥ देव्युवाच ॥ देहेनापि मया ग्राह रक्ष्यो विप्रः प्रयत्नतः ॥ तपः पुनर्मया प्राप्यं न प्राप्यो ब्राह्मणः पुनः ॥ ५४ ॥ सुनिश्चित्य महाग्राह कुरु बालस्य मोक्षणम् ॥ न विप्रेभ्यस्तपः श्रेष्ठं श्रेष्ठा मे ब्राह्मणा मताः ॥ ५५ ॥ दत्त्वा चाहं न गृह्णामि ग्राहेन्द्र विहितं हि ते ॥ न हि कश्चिन्नरो ग्राह प्रदत्तं पुनराहरेत् ॥ ५६ ॥ दत्तमेतन्मया तुभ्यं नाऽऽददामीह तत्पुनः ॥ त्वय्येव रमतामेतद्बालश्चायं विमुच्यताम् ॥ ५७ ॥ ॥ ब्रह्मोवाच ॥ तथोक्तस्तां प्रशस्याथ मुक्त्वा बालं नमस्य च ॥ देवीमादिश्य स ग्राहस्तत्रैवान्तरधीयत ॥ ५८ ॥ बालोऽपि सरसस्तीरे मुक्तो ग्राहेण वै तदा ॥ स्वप्नलब्ध इवार्थौघस्तत्रैवान्तरधीयत ॥ ५९ ॥ तपसोऽपचयं मत्वा देवी हिमगिरीन्द्रजा ॥ भूय एव तपः कर्तुमारेभे नियम स्थिता ॥ ६० ॥ कर्तुकामां तपो भूयो ज्ञात्वा तां शंकरः स्वयम् ॥ प्रोवाच वचनं विप्रा मा कृथास्तप इत्युत ॥ ६१ ॥ मह्यमेतत्तपो देवि त्वया दत्तं महाव्रते ॥ तत्तेनैवाक्षयं तुभ्यं भविष्यति सहस्रधा ॥६२॥ इति लब्ध्वा वरं देवी तपसोऽक्षयमुत्तमम् ॥ स्वयंवरमुदीक्षन्ती तस्थौ प्रीता मुदा युता ॥ ६३ ॥ इदं पठेद्यो हि नरः सदैव गिरीन्द्रकन्याचरणञ्च सम्यक् ॥ स देहभेदं समवाप्य पूतो भवेद्गणेशस्तु कुमारतुल्यः ॥ ६४ ॥ इति श्रीब्रह्मपुराणे स्वयंभ्वृषिसंवादे पार्वत्याः सत्त्वदर्शनं नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ ॥ ब्रह्मोवाच ॥ विस्तृते हिमवत्पृष्ठे विमानशतसंकुले ॥ अभवत्स तु कालेन शैलपुत्र्याः स्वयंवरः ॥ १ ॥ अथ पर्वतराजोऽसौ हिमवान्ध्यानकोविदः ॥ दुहितुर्देवदेवेन ज्ञात्वा तदभिमन्त्रितम् ॥ २ ॥ जानन्नपि महाशैलः समयारक्षणेप्सया ॥ स्वयंवरं ततो देव्याः सर्वलोकेष्ववोषयत ॥ ३ ॥ देवदानवसिद्धानां सर्वलोकनिवासिनाम् ॥ वृणुयात्तं महादेवं समक्षं यदि मे सुता ॥ ४ ॥ तदेव सुकृतं श्लाघ्यं ममाभ्युदयसंमतम् ॥ इति संचिन्त्य शैलेन्द्रः कृत्वा हृदि महेश्वरम् ॥ ५ ॥ आब्रह्मकेषु देवेषु देव्याः शैलेन्द्रसत्तमः ॥ कृत्वा रत्नाकुलं देशं स्वयंवरमचीकरत् ॥ ६ ॥ अथैवमाघोषितमात्र एव स्वयंवरे तत्र नगेन्द्रपुत्र्याः ॥ देवादयः सर्वजगन्निवासाः समाययुर्दिव्यगृहीतवेषाः ॥ ७ ॥ प्रफुल्लपद्मासनसन्निविष्टः सिद्धैर्वृतो योगिभिरप्रमेयैः ॥ विज्ञापितस्तेन महीधराज्ञाऽऽगतस्तदाऽहं त्रिदशैरुपेतः ॥ ८ ॥ अक्ष्णां सहस्रं सुरराट्स बिभ्रद्दिव्याङ्गहारस्त्वगुदाररूपः ॥ ऐरावतं सर्वगजेन्द्रमुख्यं स्रवन्मदासारकृतप्रवाहम् ॥९॥ आरुह्य सर्वामरराट् स वज्रं बिभ्रत्समागात्पुरतः सुराणाम् ॥ तेजःप्रभावाधिकतुल्यरूपी प्रोद्भासयन्सर्वदिशो विवस्वान् ॥ १० ॥ हैमं विमानं स चलत्पताकमारूढ आगात्त्वरितं जवेन ॥ मणिप्रदीप्तोज्ज्वलकुण्डलश्च वह्न्यर्कतेजःप्रतिमे विमाने ॥ ११ ॥ समभ्यगात्कश्यपसूनुरेक आदित्यमध्याद्गतो मरीचिः ॥ पीताङ्गयष्टिः सुकृताङ्गहारतेजोबलाह्लासदृशप्रभावः ॥ १२ ॥ दण्डं समागृह्य कृतान्त आगादारुह्य भीमं महिषं जवेन ॥ महामहीध्रोच्छ्रयपीन

गात्रः स्वर्णादिरत्नाञ्चितचारुवेशः ॥ १३ ॥ समीरणः सर्वजगद्विभर्ता विमानमारुह्य समभ्यगाद्वि ॥ संतापयन्सर्वसुरासुरेशांस्तेजोधिकस्तेजसि संनिविष्टः ॥ १४ ॥ वह्निः समभ्येत्य सुरेन्द्रमध्ये ज्वलन्प्रतस्थौ वरवेशधारी ॥ नानामणिप्रज्वलितागयष्टिर्जगद्वरं दिव्यविमानमग्र्यम् ॥ १५ ॥ आरुह्य सर्वद्रविणाधिपेशः स राजराजस्त्वरितोऽभ्यगाच्च ॥ आप्याययन्सर्वसुरासुरेशान्कान्त्या च वेशेन च चारुरूपः ॥ १६ ॥ ज्वलन्महारत्नविचित्ररूपं विमानमारुह्य शशी समायात् ॥ श्यामांगयष्टिः सुविचित्रवेशः सर्वांग आबद्धसुगन्धिमाल्यः ॥ १७ ॥ तार्क्ष्यं समारुह्य महीध्रकल्पं गदाधरोऽसौ त्वरितः समेतः ॥ अथाश्विनौ चापि भिषग्वरौ द्वावेकं विमानं त्वरयाऽधिरुह्य ॥ १८ ॥ मनोहरावुज्ज्वलचारुवेशावाजग्मतुर्देववरौ सुधीरौ ॥ सहस्रनागः स्फुरदग्निवर्णं बिभ्रत्तदानीं ज्वलनार्कतेजाः ॥ १९ ॥ सार्धं स नागैरपरैर्महात्मा विमानमारुह्य समभ्यगाच्च ॥ दितेः सुतानां च महासुराणां वह्न्यर्कशक्रानिलतुल्यभासाम् ॥ २० ॥ वरानुरूपं प्रविधाय वेशं वृन्दं समागात्पुरतः सुराणाम् ॥ गन्धर्वराजः स च चारुरूपी दिव्यांगदो दिव्यविमानचारी ॥ २१ ॥ गन्धर्वसंघैः सहितोऽप्सरोभिः शक्राज्ञया तत्र समाजगाम ॥ अन्ये च देवास्त्रिदिवात्तदानीं पृथक्पृथक्चारुगृहीतवेषाः ॥ २२ ॥ आजग्मुरारुह्य विमानपृष्ठं गन्धर्वयक्षोरगकिंनराश्च ॥ राज्ञां पतिस्तत्र सुरेन्द्रमध्ये राजाधिराजोधिकतुल्यमूर्तिः ॥ २३ ॥ आज्ञाबलैश्वर्यकृतप्रमोदः स्वयंवरं तं समलंचकार ॥ हेतुस्त्रिलोकस्य जगत्प्रसूतेर्माता च तेषां ससुरासुराणाम् ॥ २४ ॥ पत्नी च शंभोः पुरुषस्य धीमतो गीता पुराणे प्रकृतिः परा या ॥ दक्षस्य कोपाद्धिमवद्गृहं सा कार्यार्थमायात्रिदिवौकसां हि ॥२५॥ विमानपृष्ठे मणिहेमजुष्टे स्थिता चलच्चामरवीजितांगी ॥ सर्वर्तुपुष्पां सुसुगन्धमालां प्रगृह्य देवी प्रसभं प्रतस्थे॥२६॥ ॥ब्रह्मोवाच॥ मालां प्रगृह्य देव्यां तु स्थितायां देवसंसदि ॥ शक्राद्यैरागतैर्देवैः स्वयंवर उपागते ॥२७॥ देव्या जिज्ञासया शंभुर्भूत्वा पञ्चशिखः शिशुः ॥ उत्सङ्गतलसंसुप्तो बभूव च महाद्युतिः ॥ २८ ॥ ततो ददर्श तं देवी शिशुं पञ्चशिखं स्थितम् ॥ ज्ञात्वा तं समवध्यानाज्जगृहे प्रीतिसंयुता ॥२९॥ अथ सा शुद्धसंकल्पा काङ्क्षितं प्राप्य सत्पतिम् ॥ निवृत्त्यैव तदा तस्थौ कृत्वा सा हृदि तं विभुम् ॥ ३० ॥ ततो दृष्ट्वा शिशुं देवा देव्या उत्सङ्गवर्तिनम् ॥ कोऽयमत्रेति संमन्त्र्य चुक्रुशुर्भृशमोहिताः ॥ ३१ ॥ वज्रमाहारयत्तस्य बाहुमुत्क्षिप्य वृत्रहा ॥ स बाहुरुत्थितस्तस्य तथैव समतिष्ठत ॥ ३२ ॥ स्तम्भितः शिशुरूपेण देवदेवेन शंभुना ॥ शशाक वज्रं क्षेप्तुं न वृत्रहा चलितुं न च ॥३३॥ भगो नाम ततो देव आदित्यः काश्यपो बली ॥ उत्क्षिप्य स्वायुधं दीप्तं छेत्तुमिच्छन्विमोहितः ॥ ३४ ॥ तस्यापि भगवान्बाहुं तथैवास्तम्भयद्विभुः ॥ बलं तेजश्च योगश्च तथैवास्तम्भयद्विभुः ॥ ३५ ॥ शिरः प्रकम्पयन्विष्णुः शंकरं समवैक्षत ॥ अथ तेषु स्थितेष्वेवं मन्युमत्सु सुरेषु

च ॥ ३६ ॥ अहं परमसंविग्नो ध्यानमास्थाय शङ्करम् ॥ बुद्धवान्देवदेवेशमुमोत्सङ्गे समास्थितम् ॥ ३७ ॥ ज्ञात्वाऽहं परमेशानं शीघ्रमुत्थाय साद
रम् ॥ ववन्दे चरणं शंभोः स्तुतवांस्तमहं द्विजाः ॥ ३८ ॥ पुराणैः सामसंगीतैः पुण्याख्यैर्गुह्यनामभिः ॥ अजस्त्वमजरो देवः स्रष्टा देवः परापरम् ॥
॥ ३९ ॥ प्रधानं पुरुषो यस्त्वं ब्रह्म ध्येयं तदक्षरम् ॥ अमृतं परमात्मा च ईश्वरः कारणं महत् ॥ ४० ॥ ब्रह्मसृक्प्रकृतेः स्रष्टा सर्वकृत्प्रकृतेः परः ॥
इयं च प्रकृतिर्देवी सदा ते सृष्टिकारिणी ॥ ४१ ॥ पत्नीरूपं समास्थाय जगत्कारणमागता ॥ नमस्तुभ्यं महादेव देव्या वै सहिताय च ॥ ४२ ॥
प्रसादात्तव देवेश नियोगाच्च मया प्रजाः ॥ देवाद्यास्तु इमाः सृष्टा मूढास्त्वद्योगमायया ॥ ४३ ॥ कुरु प्रसादमेतेषां यथापूर्वं भवन्त्विमे ॥ तत एव
महं विप्रा विज्ञाप्य परमेश्वरम् ॥ ४४ ॥ स्तम्भितान्सर्वदेवांस्तानिदं चाहं तदोक्तवान् ॥ मूढाश्च देवताः सर्वा नैनं बुध्यत शंकरम् ॥ ४५ ॥ गच्छध्वं
शरणं सर्वे शीघ्रञ्चैव महेश्वरम् ॥ सार्धं भवान्या देवेशं परमात्मानमव्ययम् ॥ ४६ ॥ ततस्संस्तम्भिताः सर्वे तथैव त्रिदिवौकसः ॥ प्रणेमुर्मनसा शर्वं
भावशुद्धेन चेतसा ॥ ४७ ॥ अथ तेषां प्रसन्नोऽभूद्देवदेवो महेश्वरः ॥ यथापूर्वं चकाराऽऽशु देवतानां तनूस्तदा ॥ ४८ ॥ तत एवं प्रवृत्ते तु सर्वे
देवनिवारणे ॥ वपुश्चकार देवेशस्त्र्यक्षं परममद्भुतम् ॥ ४९ ॥ तेजसा तस्य ते ध्वस्ताश्चक्षुः सर्वे न्यमीलयन् ॥ तेभ्यः स परमं चक्षुः स्ववपुर्दृष्टिश
क्तिमत् ॥ ५० ॥ प्रादात्परमदेवेशमपश्यंस्ते तदा विभुम् ॥ ते दृष्ट्वा परमेशानं तृतीयेक्षणधारिणम् ॥ ५१ ॥ शक्राद्या मेनिरे देवाः सर्व एव सुरे
श्वराः ॥ तस्य देवी तदा हृष्टा समक्षं त्रिदिवौकसाम् ॥ ५२ ॥ पादयोः स्थापयामास स्रङ्मालाममितद्युतेः ॥ साधु साध्विति संप्रोच्य सर्वे देवाः
पुनर्विभुम् ॥ ५३ ॥ सह देव्या नमश्चक्रुः शिरोभिर्भूतलाश्रितैः ॥ अथास्मिन्नन्तरे विप्रास्तमहं दैवतैः सह ॥ ५४ ॥ हिमवन्तं महाशैलमुक्तवांश्च
महाद्युतिम् ॥ श्लाघ्यः पूज्यश्च वन्द्यश्च सर्वेषां त्वं महानसि ॥ ५५ ॥ शर्वेण सह संबन्धो यस्य तेऽभ्युदयो महान् ॥ क्रियतां चारुरुद्वाहः किमर्थं
स्थीयते परम् ॥ ततः प्रणम्य हिमवांस्तदा मां प्रत्यभाषत ॥ ५६ ॥ ॥ हिमवानुवाच ॥ त्वमेव कारणं देव यस्य सर्वोदये मम ॥ प्रसादः सहसो
त्पन्नो हेतुश्चापि त्वमेव हि ॥ उद्वाहस्तु यदा यादृक्तं विधत्स्व पितामह ॥ ५७ ॥ ॥ ब्रह्मोवाच ॥ तत एवं वचः श्रुत्वा गिरिराजस्य भो द्विजाः ॥
उद्वाहः क्रियतां देव इत्यहं चोक्तवान्विभुम् ॥ ५८ ॥ मामाह शंकरो देवो यथेष्टमिति लोकपः ॥ तत्क्षणाच्च ततो विप्रा अस्माभिर्निर्मितं पुरम् ॥
॥ ५९ ॥ उद्वाहार्थं महेशस्य नानारत्नोपशोभितम् ॥ रत्नानि मणयश्चित्रा हेममौक्तिकमेव च ॥ ६० ॥ मूर्तिमन्त उपागम्य अलंचक्रुः पुरोत्तमम् ॥
चित्रा मारकती भूमिः सुवर्णस्तम्भभूषिता ॥ ६१ ॥ भास्वत्स्फटिकभित्तिश्च मुक्ताहारप्रलम्बिता ॥ तस्मिन्द्वारि पुरे रम्य उद्वाहार्थं विनिर्मि

तम् ॥ ६२ ॥ शुशुभे देवदेवस्य महेशस्य महात्मनः ॥ सोमादित्यौ समं तत्र तापयन्तौ महामणी ॥ ६३ ॥ सौरभेयं मनोरम्यं गन्धमादाय मारुतः ॥ प्रववौ सुखसंस्पर्शो भवभक्तिं प्रदर्शयन् ॥ ६४ ॥ समुद्रास्तत्र चत्वारः शक्राद्याश्च सुरोत्तमाः ॥ देवनद्यो महानद्यः सिद्धा मुनय एव च ॥ ६५ ॥ गन्धर्वाप्सरसः सर्वे नागा यक्षाः सराक्षसाः ॥ औदकाः खेचराश्चान्ये किंनरा देवचारणाः ॥ ६६ ॥ तम्बुरुर्नारदो हाहा हूहूश्चैव तु सामगाः ॥ रत्नान्यादाय चान्यानि तत्राऽऽजग्मुस्तदा पुरम् ॥ ६७ ॥ ऋषयः कुशलास्तत्र वेदगीतास्तपोधनाः ॥ पुण्यान्वैवाहिकान्मंत्राञ्जेपुः संहृष्टमानसा ॥ ६८ ॥ जगतो मातरः सर्वा देवकन्याश्च कृत्स्नशः ॥ गायन्ति हर्षिताः सर्वा उद्वाहे परमेष्ठिनः ॥ ६९ ॥ ऋतवः षट् समं तत्र नानागन्धसुखावहाः ॥ उद्वाहे शंकरस्यैते मूर्तिमन्त उपस्थिताः ॥ ७० ॥ नीलजीमूतसंकाशैर्मन्द्रध्वनिप्रहर्षिभिः ॥ केकायमानैः शिखिभिर्नृत्यमानैश्च सर्वशः ॥ ॥ ७१ ॥ विलोलपिङ्गलस्पष्टविद्युल्लेखाविलासिता ॥ कुमुदापीडशुक्लाभिर्बलाकाभिश्च शोभिता ॥ ७२ ॥ प्रत्यग्रसंजातशिलीन्ध्रकन्दलीलताद्रुमाद्युद्गतपल्लवा शुभा ॥ शुभाम्बुधाराप्रणयप्रबोधितैर्मदालसैर्भेकगणैश्च नादिता ॥७३॥ प्रियेषु मानोद्धतमानसानां मनस्विनीनामपि कामिनीनाम्॥ मयूरकेकाभिरुतैः क्षणेन मनोहरैर्मानविभङ्गहेतुभिः ॥ ७४ ॥ तथा विवर्णोज्ज्वलचारुमूर्तिना सुवर्णकान्त्या कुटिलेन सर्वतः ॥ पयोदसंघातसमीपवर्तिना महेन्द्रचापेन भृशं विराजिता ॥ ७५ ॥ विचित्रपुष्पाम्बुभवैः सुगन्धिभिर्घनाम्बुसंपर्कतया सुशीतलैः ॥ विकम्पयन्ती पवनैर्मनोहरैः सुराङ्गनानामलकावलीः शुभाः॥७६॥गर्जत्पयोदस्थगितेन्दुबिम्बा नवाम्बुसिक्तोदकचारुदूर्वा॥निरीक्षिता सादरमुत्सुकाभिर्निश्वासधूम्रं पथिकाङ्गनाभिः७७ हंसनूपुरशब्दाढ्या समुन्नतपयोधरा ॥ चलद्विद्युल्लताहारा स्पष्टपद्मविलोचना ॥ ७८ ॥ असितजलदवृंदाधारचित्रांबुहंसा गलितसलिलधारोत्पातनम्रोत्पलाक्षी ॥ सुरभिकुसुमरेणुव्यक्तसर्वाङ्गशोभा गिरिदुहितृविवाहे प्रावृडाविर्बभूव ॥७९॥ मेघकंचुकनिर्मुक्ता पद्मकोशोद्भवस्तनी ॥ हंसनूपुरनिर्ह्रादा शरद्रम्यदिगन्तरा ॥ ८० ॥ विस्तीर्णपुलिनश्रोणी कूजत्सारसमेखला ॥ प्रोत्फुल्लेन्दीवरश्यामविलोचनमनोहरा ॥ ८१ ॥ पक्वबिम्बाधरपुटा कुन्ददन्तप्रहासिनी ॥ नवश्यामलताश्यामरोमराजिपुरस्कृता ॥ ८२ ॥ चन्द्रांशुहारवर्येण कण्ठोरस्थलगामिना ॥ प्रह्लादयन्ती नारीव सर्वेषां त्रिदिवौकसाम् ॥ ८३ ॥ समदालिकुलोद्गीतमधुरस्वरभाषिणी ॥ चलत्कुमुदसंघातचारुकुण्डलशोभिनी ॥ ८४ ॥ रक्ताशोकप्रशाखोत्थपल्लवांगुलिधारिणी ॥ तत्पुष्पसंचयमयैर्वासोभिः समलंकृता ॥ ८५ ॥ रक्तोत्पलाग्रचरणा जातीपुष्पनखावली ॥ कदलीस्तम्भचारूरूः शशाङ्कवदना तथा ॥ ८६ ॥ सर्वलक्षणसंपन्ना सर्वालंकारभूषिता ॥ प्रेम्णा स्पृशति कान्तेव सानुरागा मनोरमा ॥ ८७ ॥ निर्मुक्तासितमेघकंचुकपुटा पूर्णे

न्दुबिम्बानना नीलाम्भोजविलोचना रविकरप्रोद्भिन्नपद्मस्तनी ॥ नानापुष्परजःसुगन्धिपवनप्रह्लादिनी चेतसां तत्राऽऽसीत्कलहंसनूपुररवा देव्या विवाहे शरत् ॥ ८८ ॥ अत्यर्थशीतलाम्भोभिः प्लावयन्तौ दिशस्तदा ॥ ऋतू हेमन्तशिशिरौ आजग्मतुरतिद्युती ॥ ८९ ॥ ताभ्यामृतुभ्यां संप्राप्तो हिमवान्स नगोत्तमः ॥ प्रालेयचूर्णवर्षिभ्यां क्षिप्तं प्रेष्य इवा बभौ ॥ ९० ॥ तेन प्रालेयवर्षेण घनेनैव हिमालयः ॥ अगाधेन तदा रेजे क्षीरोद इव सागरः ॥ ९१ ॥ ऋतुपार्यसंप्राप्तो बभूव स महागिरिः ॥ साधूपचारात्सहसा कृतार्थ इव दुर्जनः ॥ ९२ ॥ प्रालेयपटलच्छन्नैः शृङ्गैस्तु शुशुभे नगः ॥ छत्रैरिव महाभोगैः पाण्डुरैः पृथिवीपतिः ॥ ९३ ॥ मनोभवोद्रेककराः सुराणां सुराङ्गनानां च मुहुः समीराः ॥ स्वच्छाम्बुपूर्णाश्च तथा नलिन्यः पद्मोत्पलानां कुसुमैरुपेताः ॥ ९४ ॥ विवाहे गुरुकन्याया वसन्तः समगाद्दतुः ॥ ९५ ॥ ईषत्समुद्भिन्नपयोधराग्रा नार्यो यथा रम्यतरा बभूवुः ॥ नात्युष्णशीतानि पयःसरांसि किञ्जल्कचूर्णैः कपिलीकृतानि ॥ चक्राह्वयुग्मैरुपनादितानि ययुः प्रहृष्टाः सुरदन्तिमुख्याः ॥ ९६ ॥ प्रियं गूश्चूततरवश्चूतांश्चापि प्रियंगवः ॥ तर्जयन्त इवान्योन्यं मञ्जरीभिश्चकाशिरे ॥ ९७ ॥ हिमशृङ्गेषु शुक्लेषु तिलकाः कुसुमोत्करैः ॥ शिशुभिः कार्यमुद्दिश्यवृद्धा इव समागताः ॥ ९८ ॥ फुल्लाशोकलतास्तत्र रेजिरे शालसंश्रिताः ॥ कामिन्य इव कान्तानां कण्ठालम्बितबाहवः ॥ ९९ ॥ तस्मिनृतौ चूतकदम्बनीपास्तालास्तमालाः सरलाः कपित्थाः ॥ १०० ॥ अशोकसर्जार्जुनकोविदाराः पुंनागनागेश्वरकर्णिकाराः ॥ लवङ्गकालागुरुसप्तपर्णा न्यग्रोधशोभाञ्जननारिकेलाः ॥ १०१ ॥ वृक्षास्तथाऽन्ये फलपुष्पवन्तो दृश्यन्ति सर्वत्र मनोहराङ्गाः ॥ जलाशयाश्चैव सुवर्णतोयाश्चक्राह्वकारण्डवहंसजुष्टाः ॥ १०२ ॥ कोयष्टिदात्यूहबलाकयुक्ता दृश्यन्ति नीलोत्पलमीनपूर्णाः ॥ खगाश्च नानाविधभूषिताङ्गा दृश्यन्ति वृक्षेषु सुचित्रपक्षाः ॥ १०३ ॥ क्रीडासु युक्तानथ तर्जयन्तः कुर्वन्ति शब्दं मदनेरिताङ्गाः ॥ तस्मिन्गिरावद्रिसुताविवाहे ववुश्च वाताः सुखशीतलाङ्गाः ॥ ॥ १०४ ॥ पुष्पाणि शुभ्राण्यपि पातयन्तः शनैर्नगेभ्यो मलयाद्रिजाताः ॥ तथैव सर्वे ऋतवश्च पुण्याश्चकाशिरेऽन्योन्यविमिश्रिताङ्गाः ॥१०५॥ येषां सुलिंगानि च कीर्तितानि ते तत्र आसन्सुमनोज्ञरूपाः ॥ १०६ ॥ समदालिकुलोद्गीतलताकुसुमसंचयैः ॥ परस्परं हि मालत्यो भीषयंत्यो विरेजिरे ॥ १०७ ॥ नीलानि नीलाम्बुरुहैः पयांसि गौराणि गौरैश्च मृणालदण्डैः ॥ रक्तैश्च रक्तानि भृशं कृतानि मत्तद्विरेफावलिजुष्टपत्रैः ॥ ॥ १०८ ॥ हैमानि विस्तीर्णजलेषु केषुचिन्निरन्तरं चारुतराणि केषुचित् ॥ वैदूर्यनालानि सरःसु केषुचित्प्रजज्ञिरे पद्मवनानि सर्वतः ॥ १०९ ॥ वाप्यस्तत्राभवन्रम्याः कमलोत्पलपुष्पिताः ॥ नानाविहंगसंघुष्टा हैमसोपानपङ्क्तयः ॥ ११० ॥ शृङ्गाणि तस्य तु गिरेः कर्णिकारैः सुपुष्पितैः ॥ समु

च्छ्रितान्यविरलैर्हैमानीव बभुर्द्विजाः ॥ १११ ॥ ईषदुद्भिन्नकुसुमैः पाटलैश्चापि पाटलाः ॥ संबभूवुर्दिशः सर्वाः पवनाकम्पिमूर्तिभिः ॥ ११२ ॥ कृष्णार्जुना दशगुणा नीलाशोकमहीरुहाः ॥ गिरौ ववृधिरे फुल्लाः स्पर्धयन्तः परस्परम् ॥ ११३ ॥ चारुरावविघुष्टानि किंशुकानां वनानि च ॥ पर्वतस्य नितम्बेषु सर्वेषु च विरेजिरे ॥ ११४ ॥ तमालगुल्मैस्तस्याऽऽसीच्छोभा हिमवतस्तदा ॥ नीलजीमूतसंघातैर्निलीनैरिव संधिषु ॥ ११५ ॥ निकामपुष्पैः सुविशालशाखैः समुच्छ्रितैश्चन्दनचम्पकैश्च ॥ प्रमत्तपुंस्कोकिलसंप्रलापैर्हिमाचलोऽतीव तदा रराज ॥ ११६ ॥ श्रुत्वा शब्दं मृदुमदकलं सर्वतः कोकिलानां वल्गत्पक्षाः सुमधुरतरं नीलकण्ठा विनेदुः ॥ तेषां शब्दैरुपचितबलः पुष्पचापेषुहस्तः सज्जीभूतास्त्रिदशवनिता वेद्धुमङ्गेष्वनङ्गः ॥ ११७ ॥ पटुः सूर्यातपश्चापि प्रायशोऽल्पजलाशयः ॥ देवीविवाहसमये ग्रीष्म आगाद्धिमाचलम् ॥ ११८ ॥ स चापि तरुभिस्तत्र बहुभिः कुसुमोत्करैः ॥ शोभयामास शृंगाणि प्रालेयाद्रेः समन्ततः ॥ ११९ ॥ तस्याऽपि च ऋतोस्तत्र वायवः सुमनोहराः ॥ ववुः पाटलविस्तीर्णकदम्बार्जुनगन्धिनः ॥ १२० ॥ वाप्यः प्रफुल्लपद्मौघकेसरारुणमूर्तयः ॥ अभवंस्तटसंघुष्टकलहंसकदम्बकाः ॥ १२१ ॥ तथा कुरबकाश्चापि कुसुमावृतमूर्तयः ॥ सर्वेषु नगशृङ्गेषु भ्रमरावलिसेविताः ॥ १२२ ॥ बकुलाश्च नितम्बेषु विशलेषु महीभृतः ॥ ससृजुश्च मनोज्ञानि कुसुमानि समन्ततः ॥ १२३ ॥ इति कुसुमविचित्रसर्ववृक्षा विविधविहङ्गमनादरम्यदेशाः ॥ हिमगिरितनयाविवाहभूत्यै समुपययुर्ऋतुभिर्मुनिप्रवीराः ॥ १२४ ॥ तत एवं प्रवृत्ते तु सर्वभूतसमागमे ॥ नानावाद्यशताकीर्णे ह्यहं तत्र द्विजातयः ॥ १२५ ॥ शैलपुत्रीमलंकृत्य योग्याभरणसंपदा ॥ पुरं प्रवेशितवांस्तां स्वयमादाय भो द्विजाः ॥ १२६ ॥ ततस्तु पुनरेवेशमहं चैवोक्तवान्विभुम् ॥ हविर्जुहोमि वह्नौ ते उपाध्यायपदे स्थितः ॥ १२७ ॥ ददासि मह्यं यद्याज्ञां कर्तव्योऽयं क्रियाविधिः ॥ मामाह शंकरश्चैवं देवदेवो जगत्पतिः ॥ १२८ ॥ ॥ शिव उवाच ॥ यदुद्दिष्टं सुरेशान तत्कुरुष्व यथेप्सितम् ॥ कर्ताऽस्मि वचनं सर्वं ब्रह्मंस्तव जगद्विभो ॥ १२९ ॥ ततश्चाहं प्रहृष्टात्मा कुशानादाय सत्वरम् ॥ हस्तं देवस्य देव्याश्च योगबन्धेन युक्तवान् ॥ १३० ॥ ज्वलनश्च स्वयं तत्र कृताञ्जलिपुटः स्थितः ॥ श्रुतिगीतैर्महामन्त्रैर्मूर्तिमद्भिरुपस्थितैः ॥ १३१ ॥ यथोक्तविधिना हुत्वा सर्पिस्तदमृतं हविः ॥ ततस्तं ज्वलनं देवं कारयित्वा प्रदक्षिणम् ॥ १३२ ॥ मुक्त्वा हस्तसमायोगं सहितः सर्वदेवतैः ॥ पुत्रैश्च मानसैः सिद्धैः प्रहृष्टेनान्तरात्मना ॥ १३३ ॥ वृत्त उद्वाहकाले तु प्रणम्य च वृषध्वजम् ॥ योगेनैव तयोर्विप्रास्तदुमापरमेशयोः ॥ १३४ ॥ उद्वाहः स परो वृत्तो यं देवा न विदुः क्वचित् ॥ इति वः सर्वमाख्यातं स्वयंवरमिदं शुभम् ॥ उद्वाहश्चैव देवस्य शृणुध्वं परमाद्भुतम् ॥ १३५ ॥ इति श्रीब्रह्मपुराणे स्वयंभुऋषि

संवादे उमामहेश्वरयोर्विवाहनिरूपणं नाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ ॥ ब्रह्मोवाच ॥ अथ वृत्ते विवाहे तु भवस्यामिततेजसः ॥ प्रहर्षमतुलं गत्वा देवाः शक्रपुरोगमाः ॥ तुष्टुवुर्वाग्भिरिष्टाभिः प्रणेमुस्ते महेश्वरम् ॥ १ ॥ ॥ देवा ऊचुः ॥ नमः पर्वतलिङ्गाय पर्वतेशाय वै नमः ॥ नमः पवनवेगाय विरूपायाजिताय च ॥ नमः क्लेशविनाशाय दात्रे च शुभसंपदाम् ॥ २ ॥ नमो नीलशिखण्डाय अम्बिकापतये नमः ॥ नमः पवनरूपाय शतरूपाय वै नमः ॥३॥ नमो भैरवरूपाय विरूपनयनाय च ॥ नमः सहस्रनेत्राय सहस्रचरणाय च॥४॥नमो देवस्वरूपाय वेदाङ्गाय नमो नमः॥ विष्टम्भनाय शक्रस्य बाह्वोर्वेदाङ्कराय च ॥ ५ ॥ चराचराधिपतये शमनाय नमो नमः ॥ सलिलाशयलिङ्गाय युगान्ताय नमो नमः ॥ ६ ॥ नमः कपालमालाय कपालसूत्रधारिणे ॥ नमः कपालहस्ताय दण्डिने गदिने नमः ॥ ७ ॥ नमस्त्रैलोक्यनाथाय पशुलोकरताय च ॥ नमः खट्वाङ्गहस्ताय प्रणतार्तिहराय च ॥८॥ नमो यज्ञशिरोहन्त्रे कृष्णकेशापहारिणे ॥ भगनेत्रनिपाताय पूष्णो दन्तहराय च ॥९॥ नमः पिनाकशूलासिखड्गमुद्गरधारिणे ॥ नमोऽस्तु कालकालाय तृतीयनयनाय च॥१०॥अन्तकान्तकृते चैव नमः पर्वतवासिने ॥ सुवर्णरेतसे चैव नमः कुण्डलधारिणे ॥ ११ ॥ दैत्यानां योगनाशाय योगिने गुरवे नमः ॥ शशाङ्कादित्यनेत्राय ललाटनयनाय च ॥ १२ ॥ नमः श्मशानरतये श्मशानवरदाय च ॥ नमोऽस्विनीतनाशाय व्यंश काय नमो नमः ॥ अशनीशतहासाय पर्वतेशाय वै नमः ॥ १३ ॥ गृहस्थसाधवे नित्यं जटिने ब्रह्मचारिणे ॥ नमो मुण्डार्धमुण्डाय पशूनां पतये नमः ॥ १४ ॥ सलिले तप्यमानाय योगैश्वर्यप्रदाय च ॥ नमः शान्ताय दान्ताय प्रलयोत्पत्तिकारिणे ॥ १५ ॥ नमोऽनुग्रहकर्त्रे च स्थितिकर्त्रे नमो नमः ॥ नमो रुद्राय वसव आदित्यायाश्विने नमः ॥ १६ ॥ नमः पित्रेऽथ सांख्याय विश्वेदेवाय वै नमः ॥ नमः शर्वाय उग्राय शिवाय वरदाय च ॥ १७ ॥ नमो भीमाय सेनान्ये पशूनां पतये नमः ॥ शुचये वैरिहानाय सद्योजाताय वै नमः ॥ १८ ॥ महादेवाय चित्राय शूलिने च नमो नमः ॥ प्रधानायाप्रमेयाय कार्याय कारणाय च ॥ १९ ॥ पुरुषाय नमस्तेऽस्तु पुरुषेच्छाकराय च ॥ नमः पुरुषसंयोगप्रधानगुणकारिणे ॥ २० ॥ प्रवर्तकाय प्रकृतेः पुरुषस्य च सर्वशः ॥ कृताकृतस्य सङ्क्त्रे फलसंयोगदाय च ॥ २१ ॥ कालज्ञाय च सर्वेषां नमो नियमकारिणे ॥ नमो वैषम्यकर्त्रे च गुणानां वृत्तिदाय च ॥ २२ ॥ नमस्ते देवदेवेश नमस्ते भूतभावन ॥ शिव सौम्यमुखो द्रष्टुं भव सौम्यो हि नः प्रभो ॥ २३ ॥ ॥ ब्रह्मोवाच ॥ एवं स भगवान्देवो जगत्पतिरुमापतिः ॥ स्तूयमानः सुरैः सर्वैरमरानिदमब्रवीत् ॥ २४ ॥ ॥ श्रीरुद्र उवाच ॥ दंष्ट्रामुखश्च सौम्यश्च देवानामस्मि भोः सुराः ॥ वरान्ब्रूत यथेष्टं च दाताऽस्मि तदसंशयम् ॥ २५ ॥

॥ ब्रह्मोवाच ॥ ततस्ते प्रणताः सर्वे सुरा ऊचुस्त्रिलोचनम् ॥ २६ ॥ तवैव भगवन्हस्ते वर एषोऽवतिष्ठताम् ॥ यदा कार्यं तदा नस्त्वं दास्यसे वरमीप्सितम् ॥ २७ ॥ ॥ ब्रह्मोवाच ॥ एवमस्त्विति तानुक्त्वा विसृज्य च सुरान्हरः ॥ लोकांश्च प्रमथैः सार्धं विवेश भवनं ततः ॥ ॥ २८ ॥ यस्तु हरोत्सवमद्भुतमेनं गायति दैवतविप्रसमक्षम् ॥ सोऽप्रतिरूपगणेशसमानो देहविपर्ययमेत्य सुखी स्यात् ॥ २९ ॥ विप्रवर्याः स्तवं हीमं शृणुयाद्यः पठेत्तथा ॥ स सर्वलोकगो देवैः पूज्यते चासुरादिभिः ॥ ३० ॥ इति श्रीब्रह्मपुराणे स्वयंभुऋषिसंवादे शिवस्तुतिनिरूपणं नाम पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥ ब्रह्मोवाच ॥ प्रविष्टे भवनं देवे सूपविष्टे वरासने ॥ सपत्नो मन्मथः क्रूरो देवं वेद्धुमनाभवत ॥ १ ॥ तमनाचार संयुक्तं दुरात्मानं कुलाधमम् ॥ लोकान्सर्वांस्तापयन्तं सर्वांगावरणात्मकम् ॥ २ ॥ ऋषीणां विघ्नकर्तारं नियमानां व्रतैः सह ॥ चक्राह्वयस्य रूपेण रत्या सह समागतम् ॥ ३ ॥ अथाऽऽततायिनं विप्रा वेद्धुकामं सुरेश्वरः ॥ नयनेन तृतीयेन सावज्ञं समवैक्षत ॥ ४ ॥ ततोऽस्य नेत्रजो वह्निर्ज्वाला मालासहस्रवान् ॥ सहसा रतिभर्तारमदहत्सपरिच्छदम् ॥ ५ ॥ स दह्यमानः करुणमार्तोऽक्रोशत विस्वरम् ॥ प्रसादयंश्च तं देवं पपात धरणीतले ॥ ६ ॥ अथ सोऽग्निपरीतांगो मन्मथो लोकतापनः ॥ पपात सहसा मूर्छां क्षणेन समपद्यत ॥ ७ ॥ पत्नी तु करुणं तस्य विललाप सुदुःखिता ॥ देवीं देवं च दुःखार्ता अयाचत्करुणावती ॥ ८ ॥ तस्याश्च करुणं ज्ञात्वा देवौ तौ करुणात्मकौ ॥ ऊचतुस्तां समालोक्य समाश्वास्य च दुःखिताम्॥ ॥ ९ ॥ ॥ उमामहेश्वरावूचतुः ॥ दग्ध एष ध्रुवं भद्रे नास्योत्पत्तिर्भविष्यते ॥ अशरीरोऽपि ते भद्रे कार्यं सर्वं करिष्यति ॥ १० ॥ यदा तु विष्णुर्भ गवान्वसुदेवसुतः शुभे ॥ तदा तस्य सुतो भूयः पतिस्ते संभविष्यति ॥ ११ ॥ ॥ ब्रह्मोवाच ॥ ततः सा च वरं लब्ध्वा कामपत्नी शुभानना ॥ जगामेष्टं तदा देशं प्रीतियुक्ता गतक्लमा ॥ १२ ॥ दग्ध्वा कामं तदा विप्राः स तु देवो वृषध्वजः ॥ रेमे तत्रोमया सार्धं प्रहृष्टस्तु हिमाचले ॥ १३ ॥ कन्दरेषु च रम्येषु पद्मिनीषु सरःसु च ॥ निर्जनेषु च रम्येषु कर्णिकारवनेषु च ॥ १४ ॥ नदीतीरेषु कान्तेषु किंनराचारितेषु च ॥ शृङ्गेषु शैलराजस्य तडागेषु सरःसु च ॥ १५ ॥ वनराजिषु चम्पासु नानापक्षिरुतेषु च ॥ तीर्थेषु पुण्यतोयेषु मणीनामङ्कणेषु च ॥ १६ ॥ एतेषु पुण्येषु मनोहरेषु देशेषु विद्याधरभूषितेषु ॥ गन्धर्वयक्षामरसेवितेषु रेमे स देव्या सहितस्त्रिनेत्रः ॥१७॥ देवैः सहेन्द्रैर्मुनियक्षसिद्धैर्गन्धर्वविद्याधरदैत्यमुख्यैः ॥ अन्यैश्च सर्वैर्विविधैर्वृतोऽसौ तस्मिन्नगे हर्षमवाप शंभुः ॥ १८ ॥ नृत्यन्ति तत्राप्सरसः सुरेशा गायन्ति गन्धर्वगणाः प्रहृष्टाः ॥ ध्यायन्ति विप्रास्त्वथ वादयन्ति केचिद्द्रुतं देववरं स्तुवन्ति ॥ १९ ॥ एवं स देवः स्वगणैरुपेतो महाबलैः शक्रयमाग्नितुल्यैः ॥ देव्याः प्रियार्थं भगनेत्रहन्ता गिरिं न तत्याज

तदा महात्मा ॥ २० ॥ ॥ ऋषय ऊचुः ॥ देव्याः समं तु भगवांस्तिष्ठंस्तत्र स कामहा ॥ अकरोत्किं महादेव एतदिच्छाम वेदितुम् ॥ २१ ॥ ॥ ब्रह्मोवाच ॥ भगवान्हिमवच्छृङ्गे स हि देव्याः प्रियेच्छया ॥ गणेशैर्विविधाकारैर्हासं संजनयन्मुहुः ॥ २२ ॥ देवीं बालेन्दुतिलको रमयंश्च रराम च ॥ महानुभावैः सर्वज्ञैः कामरूपधरैः शुभैः ॥ २३ ॥ अथ देव्याससादैका मातरं परमेश्वरी ॥ आसीनां काञ्चने शुभ्र आसने परमाद्भुते ॥ साथ दृष्ट्वा सतीं देवीमागतां सुररूपिणीम् ॥ २४ ॥ आसनेन महार्हेणासंपादयदनिन्दिताम् ॥ अथ देव्या सहासीना मेना कमललोचना ॥ आसीनां तामथोवाच तथा हिमवतः प्रिया ॥ २५ ॥ ॥ मेनोवाच ॥ चिरस्याऽऽगमनं तेऽद्य वद पुत्रि शुभेक्षणे ॥ दरिद्रक्रीडनैस्त्वं हि भर्त्रा क्रीडसि संगता ॥ २६ ॥ ये दरिद्रा भवन्तीह तथैव च निराश्रयाः ॥ उमे त एवं क्रीडन्ति यथा तव पतिः शुभे ॥ २७ ॥ ॥ ब्रह्मोवाच ॥ सैवमुक्ताऽथ मात्रा तु नातिहृष्टमनाऽभवत् ॥ महत्या क्षमया युक्ता किंचिन्नोवाच मातरम् ॥ विसृष्टा च तदा मात्रा गत्वा देवमुवाच ह ॥ २८ ॥ ॥ पार्वत्युवाच ॥ भगवन्देवदेवेश नेह वत्स्यामि भूधरे ॥ अन्यं कुरु ममाऽऽवासं भुवनेषु महाद्युते ॥ २९ ॥ ॥ महादेव उवाच ॥ सदा त्वमुच्यमाना वै मया वासार्थमीश्वरि ॥ अन्यं न रोचितवती वासं वै देवि कर्हिचित् ॥ ३० ॥ इदानीं स्वयमेव त्वं वासमन्यत्र शोभने ॥ कस्मान्मृगयसे देवि ब्रूहि तन्मे शुचिस्मिते ॥ ३१ ॥ ॥ देव्युवाच ॥ गृहं गताऽहं देवेश पितुरद्य महात्मनः ॥ दृष्ट्वा च तत्र मे माता विजने लोकभावन ॥ ३२ ॥ आसनादिभिरभ्यर्च्य मामेवं समभाषत ॥ उमे तव सदा भर्ता दरिद्रक्रीडनैः शुभे ॥ ३३ ॥ क्रीडते न हि देवानां क्रीडा भवति तादृशी ॥ यत्किल त्वं महादेव गणैश्च विविधैस्तथा ॥ रमसे तदनिष्टं हि मम मातुर्वृषध्वज ॥ ३४ ॥ ॥ ब्रह्मोवाच ॥ ततो देवः प्रहस्याऽऽह देवीं हासयितुं प्रभुः ॥ ३५ ॥ ॥ देव उवाच ॥ एवमेव न संदेहः कस्मान्मन्युरभूत्तव ॥ कृत्तिवासा ह्यवासाश्च श्मशाननिलयश्च ह ॥ ३६ ॥ अनिकेतो ह्यरण्येषु पर्वतानां गुहासु च ॥ विचरामि गणैर्नग्नैर्वृतोऽम्भोजविलोचने ॥ ३७ ॥ मा क्रुधो देवि मात्रे त्वं तथ्यं माताऽवदत्तव ॥ न हि मातृसमो बन्धुर्जन्तूनामस्ति भूतले ॥ ३८ ॥ ॥ देव्युवाच ॥ न मेऽस्ति बन्धुभिः कृत्यं किंचित्त्रिपुरनाशन ॥ तथा कुरु महादेव यथाऽहं सुखमाप्नुयाम् ॥ ३९ ॥ ॥ ब्रह्मोवाच ॥ श्रुत्वा स देव्या वचनं सुरेशस्तस्याः प्रियार्थं श्वशुरं विहाय ॥ जगाम मेरुं सुरसिद्धसेवितं भार्यासहायः स्वगणैश्च युक्तः ॥ ४० ॥ इति श्रीब्रह्मपुराणे स्वयंभुऋषिसंवाद उमाशङ्करयोर्हिमवत्परित्यागनिरूपणं नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥ ॥ ऋषय ऊचुः ॥ प्राचेतसस्य दक्षस्य कथं वैवस्वतेऽन्तरे ॥ विनाशमगमद्ब्रह्मन्हयमेधः प्रजापतेः ॥ १ ॥ देव्या मन्युकृतं बुद्ध्वा क्रुद्धः सर्वात्मकः प्रभुः ॥ कथं विनाशितो यज्ञो दक्षस्य

मिततेजसः ॥ महादेवेन रोषाद्वै तन्नः प्रब्रूहि विस्तरात् ॥ २ ॥ ब्रह्मोवाच ॥ वर्णयिष्यामि वो विप्रा महादेवेन वै यथा ॥ क्रोधाद्विध्वंसितो यज्ञो देव्याः प्रियचिकीर्षया ॥ ३ ॥ पुरा मेरोर्द्विजश्रेष्ठाः शृङ्गं त्रैलोक्यपूजितम् ॥ ज्योतिःस्थलं नाम चित्रं सर्वरत्नविभूषितम् ॥ ४ ॥ अप्रमेयमनाधृष्यं सर्वलोकनमस्कृतम् ॥ तत्र देवो गिरितटे सर्वधातुविचित्रिते ॥ ५ ॥ पर्यङ्क इव विभ्राजन्नुपविष्टो बभूव ह ॥ शैलराजसुता चास्य नित्यं पार्श्वे स्थिताऽभवत् ॥ ६ ॥ आदित्याश्च महात्मानो वसवश्च महौजसः ॥ तथैव च महात्मानावश्विनौ भिषजां वरौ ॥ ७ ॥ तथा वैश्रवणो राजा गुह्यकैः परिवारितः ॥ यक्षाणामीश्वरः श्रीमान्कैलासनिलयः प्रभुः ॥ ८ ॥ उपासते महात्मानमुशना च महामुनिः ॥ सनत्कुमारप्रमुखास्तथैव परमर्षयः ॥ ९ ॥ अङ्गिरःप्रमुखाश्चैव तथा देवर्षयोऽपि च ॥ विश्वावसुश्च गन्धर्वस्तथा नारदपर्वतौ ॥ १० ॥ अप्सरोगणसंघाश्च समाजग्मुरनेकशः ॥ ववौ सुखशिवो वायुर्नानागन्धवहः शुचिः ॥ ११ ॥ सर्वर्तुकुसुमोपेतः पुष्पवन्तो वनद्रुमाः ॥ तथा विद्याधराः साध्याः सिद्धाश्चैव तपोधनाः ॥ १२ ॥ महादेवं पशुपतिं पर्युपासत तत्र वै ॥ भूतानि च तथाऽन्यानि नानारूपधराण्यथ ॥ १३ ॥ राक्षसाश्च महारौद्राः पिशाचाश्च महाबलाः ॥ बहुरूपधरा धृष्टा नानाप्रहरणायुधाः ॥ १४ ॥ देवस्यानुचरास्तत्र तस्थुर्वैश्वानरोपमाः ॥ नन्दीश्वरश्च भगवान्देवस्यानुमते स्थितः ॥ १५ ॥ प्रगृह्य ज्वलितं शूलं दीप्यमानं स्वतेजसा ॥ गंगा च सरितां श्रेष्ठा सर्वतीर्थजलोद्भवा ॥ १६ ॥ पर्युपासत तं देवं रूपिणी द्विजसत्तमाः ॥ एवं स भगवांस्तत्र पूज्यमानः सुरर्षिभिः ॥ १७ ॥ देवैश्च सुमहाभागैर्महादेवो व्यवस्थितः ॥ कस्यचित्त्वथ कालस्य दक्षो नाम प्रजापतिः ॥ १८ ॥ पूर्वोक्तेन विधानेन यक्ष्यमाणोऽभ्यपद्यत ॥ ततस्तस्य मखे देवाः सर्वे शक्रपुरोगमाः ॥ १९ ॥ स्वर्गस्थानादथाऽऽगम्य दक्षमापेदिरे तथा ॥ ते विमानैर्महात्मानो ज्वलद्भिर्ज्वलनप्रभाः ॥ २० ॥ देवस्यानुमतेऽगच्छन्गङ्गाद्वारमिति श्रुतिः ॥ गन्धर्वाप्सरसाकीर्णं नानाद्रुमलतावृतम् ॥ २१ ॥ ऋषिसंघैः परिवृतं दक्षं धर्मभृतां वरम् ॥ पृथिव्यामन्तरिक्षे च ये च स्वर्लोकवासिनः ॥ २२ ॥ सर्वे प्राञ्जलयो भूत्वा उपतस्थुः प्रजापतिम् ॥ आदित्या वसवो रुद्राः साध्याश्च समरुद्गणाः ॥ २३ ॥ विष्णुना सहिताः सर्वे आगता यज्ञभागिनः ॥ तत्रागताः सुरवरा आज्यपाः सोमपास्तथा ॥ २४ ॥ अश्विनौ मरुतश्चैव नानादेवगणैः सह ॥ एते चान्ये च बहवो भूतग्रामास्तथैव च ॥ २५ ॥ जरायुजाण्डजाश्चैव तथैव स्वेदजोद्भिदः ॥ आहूता मंत्रिताः सर्वे देवाः स्त्रीभिः सहर्षिभिः ॥ २६ ॥ विराजन्ते विमानस्था दीप्यमाना इवाग्नयः ॥ ( दधीचिस्तु महांस्तत्र ऋषिस्तं यज्ञमण्डपम् ॥ रुद्रेण रहितं दृष्ट्वा ऋषीन्वाक्यमभाषत ॥ ऋषयोऽस्मिन्महायज्ञे शंकरः सर्वनायकः ॥ न दृश्यते विना तेन यज्ञोऽयं नैव शोभते ) ॥ २७ ॥

अपूज्यपूजने चैव पूज्यानां चाप्यपूजने ॥ नरः पापमवाप्नोति महद्वै नात्र संशयः ॥ २८ ॥ ॥ ब्रह्मोवाच ॥ एवमुक्त्वा तु विप्रर्षिः पुनर्दक्षमुवाच ह ॥ २९ ॥ ॥ दधीचिरुवाच ॥ पूज्यं च पशुभर्तारं कस्मान्नार्चयसे विभुम् ॥ ३० ॥ ॥ दक्ष उवाच ॥ सन्ति मे बहवो रुद्राः शूलहस्ताः कपर्दिनः ॥ एकादशस्थानगता नान्यं विद्मो महेश्वरम् ॥ ३१ ॥ ॥ दधीचिरुवाच ॥ सर्वेषामेकमन्त्रोऽयं ममेशो न निमन्त्रितः ॥ यथाऽहं शङ्करादूर्ध्वं नान्यं पश्यामि दैवतम् ॥ तथा दक्षस्य विपुलो यज्ञोऽयं न भविष्यति ॥ ३२ ॥ ॥ दक्ष उवाच ॥ ( एतन्मखेशाय सुवर्णपात्रैर्हविः समस्तं विधिमन्त्रपूतम् ॥ विष्णोर्नयाम्यप्रतिमस्य भागं यज्ञस्य विप्रा न तु शंकराय ॥ ) जगत्प्रभोस्तस्य दधीचभागं विष्णोश्च नित्यं विधिना प्रयुक्तम् ॥ तस्मादहं देववराय दद्यां यज्ञस्य भागं न तु शङ्कराय ॥ ३३ ॥ ॥ ब्रह्मोवाच ॥ गतास्तु देवता ज्ञात्वा शैलराजसुता तदा ॥ उवाच वचनं साध्वी देवं पशुपतिं पतिम् ॥ ३४ ॥ ॥ उमोवाच ॥ भगवन्कुत्र यान्त्येते देवाः शक्रपुरोगमाः ॥ ब्रूहि तत्त्वेन तत्त्वज्ञ संशयो मे महानयम् ॥ ३५ ॥ ॥ महेश्वर उवाच ॥ दक्षो नाम महाभागः प्रजानां पतिरुत्तमः ॥ हयमेधेन यजते तत्र यान्ति दिवौकसः ॥ ३६ ॥ ॥ देव्युवाच ॥ यज्ञमेतं महाभाग किमर्थं त्वं न गच्छसि ॥ केन वा प्रतिषेधेन गमनं ते न विद्यते ॥ ३७ ॥ ॥ महेश्वर उवाच ॥ सुरैरेव महाभागे सर्वमेतदनुष्ठितम् ॥ यज्ञेषु मम सर्वेषु न भाग उपकल्पितः ॥ ३८ ॥ पूर्वभागोपपन्नेन मार्गेण वरवर्णिनि ॥ न मे सुराः प्रयच्छन्ति भागं यज्ञस्य धर्मतः ॥ ३९ ॥ ॥ उमोवाच ॥ भगवन्सर्वदेवेषु प्रभावाभ्यधिको गुणैः ॥ अजेयश्चाप्यधृष्यश्च तेजसा यशसा श्रिया ॥ ४० ॥ अनेन तु महाभाग प्रतिषेधेन भागतः ॥ अतीव दुःखमापन्ना वेपथुश्च महानयम् ॥ ४१ ॥ किं नाम दानं नियमं तपो वा कुर्यामहं येन पतिर्ममाद्य ॥ लभेत भागं भगवाननन्तो यज्ञस्य भागं ह्यथवा तृतीयम् ॥ ४२ ॥ एवं ब्रुवाणां भगवान्विचिन्त्य पत्नीं प्रहृष्टः क्षुभितामुवाच ॥ न वेत्सि मां देवि कृशोदराङ्गि किं नाम युक्तं वचनं तवेदम् ॥ ४३ ॥ अहं हि जानामि विशालनेत्रे ध्यानेन सर्वे च विदन्ति सन्तः ॥ तवाद्य कोपेन तु सर्वदेवा लोकत्रयं सर्वमथो विनष्टम् ॥ ४४ ॥ मामध्वरेशं नितरां स्तुवन्ति रथंतरं साम गायन्ति मह्यम् ॥ मां ब्राह्मणाः क्रतुभिर्वै यजन्ते ममाध्वर्यवः कल्पयन्ते च भागम् ॥ ४५ ॥ ॥ देव्युवाच ॥ प्राकृतोपीह भगवन्मनस्वी जनसंसदि ॥ स्तौति गर्वायते चापि स्त्रीसान्निध्ये विशेषतः ॥ ४६ ॥ ॥ भगवानुवाच ॥ नाऽऽत्मानं स्तौमि देवेशि यथा त्वमनुगच्छसि ॥ संस्रक्ष्यामि वरारोहे भागार्थे वरवर्णिनि ॥ ४७ ॥ ॥ ब्रह्मोवाच ॥ इत्युक्त्वा भगवान्पत्नीमुमां प्राणैरपि प्रियाम् ॥ सोऽसृजद्भगवान्वक्त्राद्भूतं क्रोधाग्निसंभवम् ॥ ४८ ॥ तमुवाच ध्वंस मखं दक्षस्येति महेश्वरः ॥ नाशयाऽऽशु व्रतं तस्य दक्षस्य मदनु

ज्ञया ॥ ४९ ॥ ॥ ब्रह्मोवाच ॥ ततो रुद्रप्रयुक्तेन सिंहवेषेण लीलया ॥ देव्या मन्युकृतं ज्ञात्वा हतो दक्षस्य स क्रतुः ॥ ५० ॥ मन्युना च महाभीमा भद्रकाली महेश्वरी ॥ आत्मनः कर्मसाक्षित्वे तेन सार्धं सहानुगा ॥ ५१ ॥ स एष भगवान्क्रोधप्रेतावासकृतालयः ॥ वीरभद्रेति विख्यातो देव्या मन्युप्रमार्जकः ॥ ५२ ॥ सोऽसृजद्रोमकूपेभ्य आत्मनैव गणेश्वरान् ॥ रुद्रानुगान्गणान्रौद्रान्रुद्रवीर्यपराक्रमान् ॥ ५३ ॥ रुद्रस्यानुचराः सर्वे सर्वे रुद्रपराक्रमाः ॥ ते निपेतुस्ततस्तूर्णं शतशोऽथ सहस्रशः ॥ ५४ ॥ ततः किलकिलाशब्द आकाशं पूरयन्निव ॥ समभूत्सुमहान्विप्राः सर्वरुद्रगणैः कृतः ॥ ५५ ॥ तेन शब्देन महता त्रस्ताः सर्वे दिवौकसः ॥ पर्वताश्च व्यशीर्यन्त चकम्पे च वसुंधरा ॥ ५६ ॥ मरुतश्च ववुः क्रूराश्चुक्षुभे वरुणालयः ॥ अग्नयो वै न दीप्यन्ते न चादीप्यत भास्करः ॥ ५७ ॥ ग्रहा नैव प्रकाशन्ते नक्षत्राणि न तारकाः ॥ ऋषयो न प्रभासन्ते न देवा न च दानवाः ॥ ५८ ॥ एवं हि तिमिरीभूते निर्दहन्ति विमानिताः ॥ प्रभञ्जना ववुर्घोराः पूयविट्गंधिनस्तथा ॥ ५९ ॥ प्रणदन्ति तथा चान्ये विमर्दन्ति तथा परे ॥ त्वरितं वै प्रधावन्ति वायुवेगा मनोजवाः ॥ ६० ॥ चूर्ण्यन्ते यज्ञपात्राणि यज्ञस्याऽऽयतनानि च ॥ शीर्यमाणान्यदृशन्त तारा इव नभस्तलात् ॥ ६१ ॥ दिव्यान्नपानभक्ष्याणां राशयः पर्वतोपमाः ॥ क्षीरनद्यस्तथा चान्या घृतपायसकर्दमाः ॥ ६२ ॥ मधुमण्डोदका दिव्याः खण्डशर्करवालुकाः ॥ षड्रसान्निवहन्त्यन्या गुडकुल्या मनोरमाः ॥ ६३ ॥ उच्चावचानि मांसानि भक्ष्याणि विविधानि च ॥ यानि कानि च दिव्यानि लेह्यचोष्याणि यानि च ॥६४॥ भुञ्जन्ति विविधैर्वक्त्रैर्विलुम्पन्ति क्षिपन्ति च ॥ रुद्रकोपा महाकायाः कालाग्निसदृशोपमाः ॥ ६५ ॥ क्षोभयन्तोऽथ शैलाभा भीषयन्तश्च सर्वतः ॥ क्रीडन्ति विविधाकाराश्चिक्षिपुः सुरयोषितः ॥ ६६ ॥ एवं गणाश्च तैर्युक्तो वीरभद्रः प्रतापवान् ॥ रुद्रकोपप्रयुक्तश्च सर्वदेवैः सुरक्षितम् ॥ ६७ ॥ तं यज्ञमदहच्छीघ्रं भद्रकाल्याः समीपतः ॥ चक्रुरन्ये तथा नादान्सर्वभूतभयंकरान् ॥ ६८ ॥ छित्त्वा शिरोऽन्ये यज्ञस्य व्यनदन्त भयंकरम् ॥ ततः शक्रादयो देवा दक्षश्चैव प्रजापतिः ॥ ऊचुः प्राञ्जलयो भूत्वा कथ्यतां को भवानिति ॥ ६९ ॥ ॥ वीरभद्र उवाच ॥ नाहं देवो न दैत्यो वा न च भोक्तुमिहाऽऽगतः ॥ नैव द्रष्टुं च देवेन्द्रा न च कौतूहलान्वितः ॥ ७० ॥ दक्षयज्ञविनाशार्थं संप्राप्तोऽहं सुरोत्तमाः ॥ वीरभद्रेतिविख्यातो रुद्रकोपाद्विनिःसृतः ॥ ७१ ॥ भद्रकाली च विज्ञेया देव्याः क्रोधाद्विनिर्गता ॥ प्रेषिता देवदेवेन यज्ञान्तिकमुपागता ॥ ७२ ॥ शरणं गच्छ राजेन्द्र देवदेवमुमापतिम् ॥ वरं क्रोधोऽपि देवस्य न वरं परिचारकैः ॥ ७३ ॥ ॥ ब्रह्मोवाच ॥ निखातोत्पाटितैर्यूपैरपविद्धैस्ततस्ततः ॥ उत्पतद्भिः पतद्भिश्च गृध्रैरामिषगृध्नुभिः ॥ ७४ ॥ पक्षवातविनिर्धूतैः शिवाशतनिनादितैः ॥ मत्तस्य यज्ञो नृपतेर्बाध्य

ानस्तदा गणैः ॥ ७५ ॥ आस्थाय मृगरूपं वै खमेवाभ्यपतत्तदा ॥ तं तु यज्ञं तथारूपं गच्छन्तमुपलभ्य सः ॥ ७६ ॥ धनुरादाय बाणं च तदर्थमगमत्प्रभुः ॥ ततस्तस्य गणेशस्य क्रोधादमिततेजसः ॥ ७७ ॥ ललाटात्प्रसृतो घोरः स्वेदबिन्दुर्बभूव ह ॥ तस्मिन्पतितमात्रे च स्वेदबिन्दौ तदा भुवि ॥ ७८ ॥ प्रादुर्भूतो महानग्निर्ज्वलत्कालानलोपमः ॥ तत्रोदपद्यत तदा पुरुषो द्विजसत्तमाः ॥ ७९ ॥ ह्रस्वोऽतिमात्रो रक्ताक्षो हरिच्छ्मश्रुर्विभीषणः ॥ ऊर्ध्वकेशोऽतिरोमाङ्गः शोणकर्णस्तथैव च ॥ ८० ॥ करालकृष्णवर्णश्च रक्तवासास्तथैव च ॥ तं यज्ञं स महासत्त्वोऽदहत्कक्षमिवानलः ॥ ॥ ८१ ॥ देवाश्च प्रद्रुताः सर्वे गता भीता दिशो दश ॥ तेन तस्मिन्विचरता विक्रमेण तदा तु वै ॥८२॥ पृथिवी व्यचलत्सर्वा सप्तद्वीपा समन्ततः ॥ महाभूते प्रवृत्ते तु देवलोकभयंकरे ॥ ८३ ॥ तदा चाहं महादेवमब्रवं प्रतिपूजयन् ॥ भवतेऽपि सुराः सर्वे भागं दास्यन्ति वै प्रभो ॥ ८४ ॥ क्रियतां प्रतिसंहारः सर्वदेवेश्वर त्वया ॥ इमाश्च देवताः सर्वा ऋषयश्च सहस्रशः ॥ ८५ ॥ तव क्रोधान्महादेव न शान्तिमुपलेभिरे ॥ यश्चैव पुरुषो जातः स्वेदजस्ते सुरर्षभ ॥ ८६ ॥ ज्वरो नामैष धर्मज्ञ लोकेषु प्रचरिष्यति ॥ एकीभूतस्य न ह्यस्य धारणे तेजसः प्रभो ॥ ८७ ॥ समर्था सकला पृथ्वी बहुधा सृज्यतामयम् ॥ इत्युक्तः स मया देवो भागे चापि प्रकल्पिते ॥ ८८ ॥ भगवान्मां तथेत्याह देवदेवः पिनाकधृक् ॥ परां च प्रीतिमगमत्स स्वयं च पिनाकधृक् ॥ ८९ ॥ दक्षोऽपि मनसा देवं भवं शरणमन्वगात् ॥ प्राणापानौ सन्निरुध्य चक्षुःस्थाने प्रयत्नतः ॥ ९० ॥ विवार्य सर्वतो दृष्टिं बृहद्दृष्टिरमित्रजित् ॥ स्मितं कृत्वाऽब्रवीद्वाक्यं ब्रूहि किं करवाणि ते ॥ ९१ ॥ श्राविते च महाख्याने देवानां पितृभिः सह ॥ तमुवाचाञ्जलिं कृत्वा दक्षो देवं प्रजापतिः ॥ भीतः शङ्कितवित्रस्तः सबाष्पवदनेक्षणः ॥ ९२ ॥ ॥ दक्ष उवाच ॥ यदि प्रसन्नो भगवन्यदि वाऽहं तव प्रियः ॥ यदि चाहमनुग्राह्यो यदि देवो वरो मम ॥ ९३ ॥ यद्भक्ष्यं भक्षितं पीतं ग्रसितं यच्च नाशितम् ॥ चूर्णीकृतापविद्धं च यज्ञसंभारमीदृशम् ॥ ९४ ॥ दीर्घकालेन महता प्रयत्नेन च साधितम् ॥ न च मिथ्या भवेन्मह्यं त्वत्प्रसादान्महेश्वर ॥ ९५ ॥ ॥ ब्रह्मोवाच ॥ तथाऽस्त्वित्याह भगवान्भगनेत्रहरो हरः ॥ धर्माध्यक्षं महादेवं त्र्यम्बकं च प्रजापतिः ॥ ९६ ॥ जानुभ्यामवनीं गत्वा दक्षो लब्ध्वा भवाद्वरम् ॥ नाम्नां चाष्टसहस्रेण स्तुतवान्वृषभध्वजम् ॥९७॥ इति श्रीब्रह्मपुराणे स्वयंभुऋषिसंवादे दक्षयज्ञविध्वंसनं नाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥ ॥ ब्रह्मोवाच ॥ एवं दृष्ट्वा तदा दक्षः शंभोर्वीर्यं द्विजोत्तमाः ॥ प्राञ्जलिः प्रणतो भूत्वा संस्तोतुमुपचक्रमे ॥ १ ॥ ॥ दक्ष उवाच ॥ नमस्ते देवदेवेश नमस्ते बलसूदन ॥ देवेन्द्र त्वं बलश्रेष्ठ देवदानवपूजित ॥२॥ सहस्राक्ष विरूपाक्ष त्र्यक्ष यक्षाधिपप्रिय ॥ सर्वतःपाणिपादस्त्वं सर्वतोक्षिशिरोमुखः ॥ ३ ॥ सर्वतः श्रुतिमाँल्लोके सर्वमावृत्य तिष्ठसि ॥ शङ्कुकर्णो

महाकर्णः कुम्भकर्णोऽर्णवालयः ॥ ४ ॥ गजेन्द्रकर्णो गोकर्णः शतकर्णो नमोऽस्तु ते ॥ शतोदरः शतावर्तः शतजिह्वः सनातनः ॥ ५ ॥ गायन्ति त्वां गायत्रिणो अर्चयन्ति ह्यर्कार्मिणः ॥ देवदानवगोप्ता च ब्रह्मा च त्वं शतक्रतुः ॥ ६ ॥ मूर्तिमांस्त्वं महामूर्तिः समुद्रः सरसां निधिः ॥ त्वयि सर्वा देवता हि गावो गोष्ठ इवाऽऽसते ॥ ७ ॥ त्वत्तः शरीरे पश्यामि सोममग्निं जलेश्वरम् ॥ आदित्यमथ विष्णुं च ब्रह्माणं सबृहस्पतिम् ॥ ८ ॥ क्रिया करणकार्ये च कर्ता कारणमेव च ॥ असच्च सदसच्चैव तथैव प्रभवाप्ययौ ॥ ९ ॥ नमो भवाय शर्वाय रुद्राय वरदाय च ॥ पशूनां पतये चैव नमोऽस्त्वन्धकघातिने ॥ १० ॥ त्रिजटाय त्रिशीर्षाय त्रिशूलवरधारिणे ॥ त्र्यम्बकाय त्रिनेत्राय त्रिपुरघ्नाय वै नमः ॥ ११ ॥ नमश्चण्डाय मुण्डाय विश्वचण्डधराय च ॥ दण्डिने शङ्कुकर्णाय चण्डीचण्डाय वै नमः ॥ १२ ॥ नमोऽर्धदण्डिकेशाय शुष्काय विकृताय च ॥ विलोहिताय धूम्राय नीलग्रीवाय वै नमः ॥ १३ ॥ नमोऽस्त्वप्रतिरूपाय विरूपाय शिवाय च ॥ सूर्याय सूर्यपतये सूर्यध्वजपताकिने ॥ १४ ॥ नमः प्रमथनाथाय वृषस्कन्धाय वै नमः ॥ नमो हिरण्यवर्णाय हिरण्यकवचाय च ॥ १५ ॥ हिरण्यकृतचूडाय हिरण्यपतये नमः ॥ शत्रुघाताय चण्डाय पर्णसंघशयाय च ॥ १६ ॥ नमः स्तुताय स्तुतये स्तूयमानाय वै नमः ॥ सर्वाय सर्वभक्षाय सर्वभूतान्तरात्मने ॥१७॥ नमो होमाय मन्त्राय शुक्लध्वजपताकिने ॥ नमोऽनम्याय नम्याय नमः किलकिलाय च ॥ १८ ॥ नमस्त्वां शयमानाय शयितायोत्थिताय च ॥ स्थिताय धावमानाय भूताय कुटिलाय च ॥ १९ ॥ नमो नर्तनशीलाय मुखवादित्रकारिणे ॥ बाधापहाय लुब्धाय गीतवादित्रकारिणे ॥ २० ॥ नमो ज्येष्ठाय श्रेष्ठाय बलप्रमथनाय च ॥ कल्पनाय च कल्प्याय क्षमायोपक्षमाय च ॥ उग्राय च नमो नित्यं नमश्च दशबाहवे ॥२१॥ नमः कपालहस्ताय सितभस्मप्रियाय च ॥ विभीषणाय भीमाय भीमव्रतधराय च ॥ २२ ॥ नानाविकृतवक्त्राय खड्गजिह्वोग्रदंष्ट्रिणे ॥ पक्षमासलवाद्याय तुम्बीवीणाप्रियाय च ॥ २३ ॥ अघोरघोररूपाय घोराद्घोरतराय च ॥ नमः शिवाय शान्ताय नमः शान्ततराय च ॥ २४ ॥ नमो बुद्धाय शुद्धाय संविभागप्रियाय च ॥ प्रपञ्चाय तथोग्राय नमः सांख्यपराय च ॥ २५ ॥ नमश्चण्डैकघण्टाय घण्टानादाय घण्टिने ॥ सहस्रशतघण्टाय घण्टामालाप्रियाय च ॥ २६ ॥ प्राणदण्डाय नित्याय नमस्ते लोहिताय च ॥ हूंहूंकाराय रुद्राय हूंहूंकारप्रियाय च ॥ २७ ॥ नमोऽपारवते नित्यं गिरिवृक्षप्रियाय च ॥ मार्गमांसशृगालाय तारकाय तराय च ॥ नमो यज्ञाधिपतये कृताय प्रकृताय च ॥२८॥ यज्ञवाहाय दान्ताय तथ्याय वितथाय च ॥ नमस्तटाय तट्याय तटिनीपतये नमः ॥ २९ ॥ अन्नदायान्नपतये नमस्त्वन्नभुजाय च ॥ नमः सहस्रशीर्षाय सहस्रचरणाय च ॥ ३० ॥ सहस्रोद्यतशूलाय सहस्र

१०





नयनाय च ॥ नमो बालार्कवर्णाय बालरूपधराय च ॥ ३१ ॥ नमो बालार्करूपाय बालक्रीडनकाय च ॥ नमः शुद्धाय बुद्धाय क्षोभणाय क्षयाय च ॥ ३२ ॥ तरङ्गाङ्कितकेशाय मुक्तकेशाय वै नमः ॥ नमः षट्कर्मतुष्टाय त्रिकर्मनिरताय च ॥ ३३ ॥ वर्णाश्रमाणां विधिवत्पृथग्धर्मप्रवर्तिने ॥ नमः श्रेष्ठाय ज्येष्ठाय नमः कलकलाय च ॥ ३४ ॥ श्वेतपिङ्गलनेत्राय कृष्णरक्तेक्षणाय च ॥ धर्मकामार्थमोक्षाय क्रथाय क्रथनाय च ॥ ३५ ॥ सांख्याय सांख्यमुख्याय योगाधिपतये नमः ॥ नमो रथ्याधिरथ्याय चतुष्पथपथाय च ॥ ३६ ॥ कृष्णाजिनोत्तरीयाय व्यालयज्ञोपवीतिने ॥ ईशान रुद्रसंघात हरिकेश नमोऽस्तु ते ॥ ३७ ॥ त्र्यम्बकायाम्बिकानाथ व्यक्ताव्यक्त नमोऽस्तु ते ॥ कालकामदकामघ्न दुष्टोद्वृत्तनिवारण ॥ ३८ ॥ सर्वगर्हित सर्वघ्न सद्योजात नमोऽस्तु ते ॥ उन्मादन शतावर्तगङ्गातोयार्द्रमूर्धज ॥ ३९ ॥ चन्द्रार्धसंयुगावर्त मेघावर्त नमोऽस्तु ते ॥ नानार्थदानभर्त्ता च अर्थदश्च त्वमेव हि ॥ ४० ॥ अन्नस्रष्टा च भोक्ता च यज्ञभुक् च तथानलः ॥ जरायुजाण्डजाश्चैव स्वेदजोद्भिज्ज एव च ॥४१॥ त्वमेव देवदेवेश भूतग्रामश्चतुर्विधः ॥ चराचरस्य स्रष्टा त्वं प्रतिहर्ता त्वमेव च ॥४२॥ त्वमेव ब्रह्म विश्वेश अप्सु ब्रह्म वदन्ति ते ॥ सर्वस्य परमा योनिः स्वधा त्वं ज्योतिषां निधिः ॥ ४३ ॥ ऋक्सामानि तथोंकारमाहुस्त्वां ब्रह्मवादिनः ॥ हायि हायि हरे हायि हुवाहावेति वाऽसकृत् ॥ ४४ ॥ गायन्ति त्वां सुरश्रेष्ठाः सामगा ब्रह्मवादिनः ॥ यजुर्मय ऋङ्मयस्त्वं सामाथर्वयुतस्तथा ॥ ४५ ॥ सेव्यसे ब्रह्मविद्भिस्त्वं कल्पोपनिषदां गणैः ॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वर्णाश्रमाश्च ये ॥ ४६ ॥ त्वमेवाऽऽश्रमसंघाश्च विद्युत्स्तनितमेव च ॥ संवत्सरस्त्वमृतवो मासो मासार्धमेव च ॥ ४७ ॥ कला काष्ठा निमेषाश्च नक्षत्राणि युगानि च ॥ वृषाणां ककुदं त्वं हि गिरीणां शिखराणि च ॥ ४८ ॥ सिंहो मृगाणां च पतिस्तक्षकोऽनन्तभोगिनाम् ॥ क्षीरोदो ह्युदधीनां च मन्त्राणां यजुरेव च ॥ ४९ ॥ वज्रं प्रहरणानां च व्रतानां सत्यमेव च ॥ त्वमेवेच्छा च द्वेषश्च रागो मोहः शमः क्षमा ॥ ५० ॥ व्यवसायो धृतिर्लोभः कामक्रोधौ जयाजयौ ॥ त्वं गदी त्वं शरी चापी खट्वाङ्गी त्वं ध्वजी रथी ॥ ५१ ॥ छेत्ता भेत्ता प्रहर्ता च नेता मन्ताऽसि नो मतः ॥ दशलक्षणसंयुक्तो धर्मोऽर्थः काम एव च ॥ ५२ ॥ इन्द्रः समुद्रः सरितः पल्वलानि सरांसि च ॥ लता वल्ल्यस्तृणौषध्यः पशवो मृगपक्षिणः ॥ ५३ ॥ द्रव्यकर्मगुणारम्भः कालपुष्पफलप्रदः ॥ आदिश्चान्तश्च मध्यश्च गायत्र्योंकार एव च ॥ ५४ ॥ हरितो लोहितः कृष्णो नीलः पीतस्तथाऽरुणः ॥ कद्रुश्च कपिलो बभ्रुः कपोतो मेचकस्तथा ॥ ५५ ॥ सुवर्णरेता विख्यातः सुवर्णश्चाप्यथो मतः ॥ सुवर्णनामा च तथा सुवर्णप्रिय एव च ॥ ५६ ॥ त्वमिन्दुश्च यमश्चैव वरुणो धनदोऽनलः ॥ उत्फुल्लश्चित्रभानुश्च स्वर्भानुर्भानुरेव च ॥ ५७ ॥

होत्रं होता च होम्यं च हुतं चैव तथा प्रभुः॥ त्रिसौपर्णस्तथा ब्रह्मन्यजुषां शतरुद्रियम् ॥ ५८ ॥ पवित्रं च पवित्राणां मङ्गलानां च मङ्गलम् ॥ गिरिः पापान्तको वृक्षो जीवः प्रलय एव च ॥ प्राणश्च त्वं रजश्च त्वं तमः सत्त्वयुतस्तथा ॥ ५९ ॥ प्राणोऽपानः समानश्च उदानो व्यान एव च ॥ उन्मेषश्च निमेषश्च कालः कल्पस्तथैव च ॥ ६० ॥ लोहिताङ्गश्च दंष्ट्री च महावक्त्रो महोदरः ॥ शुचिरोमा हरिच्छ्मश्रुरूर्ध्वकेशश्चलाचलः ॥ ६१ ॥ गीतवादित्रनृत्याङ्गो गीतवादनकप्रियः ॥ मत्स्यो जालो जलोऽजय्यो जलव्यालः कुटीचरः ॥ ६२ ॥ विकालश्च सुकालश्च दुष्कालः कालनाशनः ॥ मृत्युश्चैवाक्षयोऽन्तश्च क्षमामायाकरोत्करः ॥ ६३ ॥ संवर्तो वर्तकश्चैव संवर्तकबलाहकौ ॥ घण्टाकी घण्टकी घण्टी चूडालो लवणोदधिः ॥ ६४ ॥ ब्रह्मा कालाग्निवक्त्रश्च दण्डी मुण्डस्त्रिदण्डधृक् ॥ चतुर्युगश्चतुर्वेदश्चतुर्होत्रश्चतुष्पथः ॥ ६५ ॥ चातुराश्रम्यनेता च चातुर्वर्ण्यकरश्च हि ॥ क्षराक्षरः प्रियो धूर्तो गणैर्गण्यो गणाधिपः ॥ ६६ ॥ रक्तमाल्याम्बरधरो गिरीशो गिरिजाप्रियः ॥ शिल्पीशः शिल्पिनः श्रेष्ठः सर्वशिल्पप्रवर्तकः ॥ ६७ ॥ भगनेत्रान्तकश्चण्डः पूष्णो दन्तविनाशनः ॥ स्वाहा स्वधा वषट्कारो नमस्कार नमोऽस्तु ते ॥६८॥ गूढव्रतश्च गूढश्च गूढव्रतनिषेवितः॥ तरणस्तारणश्चैव सर्वानुरयूतचारणः ॥ ६९ ॥ धाता विधाता संधाता निधाता धरणीधरः ॥ तपो ब्रह्म च सत्यं च ब्रह्मचर्यं तथाऽऽर्जवम् ॥ ७० ॥ भूतात्मा भूतकृद्भूतो भूतभव्यभवोद्भवः ॥ भूर्भुवः स्वरितश्चैव वृतो ह्यग्निर्महेश्वरः ॥ ७१ ॥ रेक्षणो दोक्षणाकान्तो दान्तोऽदान्तविनाशनः ॥ ब्रह्मावर्तः सुरावर्तः कामावर्त नमोऽस्तु ते ॥ कामबिम्बविनिर्हन्ता कर्णिकारस्रजप्रियः ॥ ७२ ॥ गोनेता गोप्रचारश्च गोवृपेश्वरवाहनः ॥ त्रैलोक्यगोप्ता गोविन्दो गोप्ता गोगर्ग एव च ॥ ७३ ॥ अखण्डचन्द्राभिमुखः सुमुखो दुर्मुखोऽमुखः ॥ चतुर्मुखो बहुमुखो रणेष्वभिमुखः सदा ॥ ७४ ॥ हिरण्यगर्भः शकुनिर्धनदोऽन्नपतिर्विराट् ॥ अधर्महा महादक्षो दण्डधारी रणप्रियः ॥ ७५ ॥ तिष्ठन्स्थिरश्च स्थाणुश्च निष्कम्पश्च सुनिश्चलः ॥ दुर्वारणो दुर्विषहो दुर्दर्पो दुरतिक्रमः ॥ ७६ ॥ दुर्धरो दुर्वशो नित्यो दुर्दमो विजयो जयः ॥ शशः शशाङ्कनयनः शीतोष्णः क्षुत्तृषा जरा ॥ ७७ ॥ आधयो व्याधयश्चैव व्याधिहा व्याधिपश्च यः ॥ सह्यो यज्ञमृगव्याधो व्याधीनामाकरोऽकरः ॥ ७८ ॥ शिखण्डी पुण्डरीकश्च पुण्डरीकावलोकनः ॥ दण्डधृक्चक्रदण्डश्च रौद्रभागविनाशनः ॥ ७९ ॥ विषपोऽमृतपश्चैव सुरापः क्षीरसोमपः ॥ मधुपश्चाऽऽपपश्चैव सर्वपश्च बलाबलः ॥ ८० ॥ वृषाङ्गवाह्यो वृषभस्तथा वृषभलोचनः ॥ वृषभश्चैव विख्यातो लोकानां लोकसंस्कृतः ॥ ८१ ॥ चन्द्रादित्यौ चक्षुषी ते हृदयं च पितामहः ॥ अग्निष्टोमस्तथा देहो धर्मकर्मप्रसाधितः ॥ ८२ ॥ न ब्रह्मा न च गोविन्दः पुराणऋषयो न च ॥ माहात्म्यं वेदितुं शक्ता याथातथ्येन ते शिव ॥ ८३ ॥ शिव या







मूर्तयः सूक्ष्मास्ता मह्यं यान्तु दर्शनम् ॥ ताभिर्मां सततं रक्ष पिता पुत्रमिवौरसम् ॥ ८४ ॥ रक्ष मां रक्षणीयोऽहं तवानघ नमोऽस्तु ते ॥ भक्तानु कम्पी भगवान्भक्तश्चाहं सदा त्वयि ॥ ८५ ॥ यः सहस्राण्यनेकानि पुंसामावृत्य दुर्दृशाम् ॥ तिष्ठत्येकः समुद्रान्ते स मे गोप्ताऽस्तु नित्यशः ॥ ८६ ॥ जितनिद्रा जितश्वासाः सत्वस्थाः समदर्शिनः ॥ ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ॥ ८७ ॥ संभक्ष्य सर्वभूतानि युगान्ते समुप स्थिते ॥ यः शेते जलमध्यस्थस्तं प्रपद्येऽम्बुशायिनम् ॥ ८८ ॥ प्रविश्य वदनं राहोर्यः सोमं पिवते निशि ॥ ग्रसत्यर्कं च स्वर्भानुर्भूत्वा सोमा ग्निरेव च ॥ ८९ ॥ अङ्गुष्ठमात्राः पुरुषा देहस्थाः सर्वदेहिनाम् ॥ रक्षन्तु ते च मां नित्यं नित्यं चाऽऽप्याययन्तु माम् ॥ ९० ॥ येनाप्युत्पादिता देवाः पंचत्वं च गताश्च ये ॥ तेषां स्वाहा स्वधा चैव अहस्त्वाञ्च स्तुवन्ति च ॥ ९१ ॥ यत्रारोहन्ति देहस्थाः प्राणिनोऽवतरन्ति च ॥ हर्षयन्ति न कृष्यन्ति नमस्तेभ्यस्तु नित्यशः ॥ ९२ ॥ ये समुद्रे नदीदुर्गे पर्वतेषु गुहासु च ॥ वृक्षमूलेषु गोष्ठेषु कान्तारगहनेषु च ॥ ९३ ॥ चतुष्पथेषु रथ्यासु कान्तारेषु सभासु च ॥ हस्त्यश्वरथशालासु जीर्णोद्यानालयेषु च ॥ ९४ ॥ येषु पञ्चसु भूतेषु दिशासु विदिशासु च ॥ इन्द्रार्कयोर्मध्य गता ये च चन्द्रार्करश्मिषु ॥ ९५ ॥ रसातलगता ये च ये च तस्मात्परं गताः ॥ नमस्तेभ्यो नमस्तेभ्यो नमस्तेभ्योस्तु नित्यशः ॥ ९६ ॥ सर्वं त्वं सर्वगो देवः सर्वभूतपतिर्भवः ॥ सर्वभूतान्तरात्मा च तेन त्वं न निमन्त्रितः ॥ ९७ ॥ त्वमेव चेज्यसे देव यज्ञैर्विविधदक्षिणैः ॥ त्वमेव कर्ता सर्वस्य तेन त्वं न निमन्त्रितः ॥ ९८ ॥ अथवा मायया देव मोहितः सूक्ष्मया तव ॥ तस्मात्तु कारणाद्वाऽपि त्वं मया न निमन्त्रितः ॥ ९९ ॥ प्रसीद मम देवेश त्वमेव शरणं मम ॥ त्वं गतिस्त्वं प्रतिष्ठा च नान्योऽस्तीति मतिर्मम ॥ १०० ॥ ॥ ब्रह्मोवाच ॥ स्तुत्वैवं स महादेवं विरराम महामतिः ॥ भगवानपि सुप्रीतः पुनर्दक्षमभाषत ॥ १०१ ॥ ॥ श्रीभगवानुवाच ॥ परितुष्टोऽस्मि ते दक्ष स्तवेनानेन सुव्रत ॥ बहुनाऽत्र किमु क्तेन मत्समीपं गमिष्यसि ॥ १०२ ॥ ॥ ब्रह्मोवाच ॥ तथैवमब्रवीद्वाक्यं त्रैलोक्याधिपतिर्भवः ॥ कृत्वाऽऽश्वासकरं वाक्यं सर्वज्ञो वाक्यसंहितम् ॥ ॥ १०३ ॥ ॥ श्रीशिव उवाच ॥ दक्ष दुःखं न कर्तव्यं यज्ञविध्वंसनं प्रति ॥ अहं यज्ञहनस्तुभ्यं दृष्टमेतत्पुराऽनघ ॥ १०४ ॥ भूयश्च त्वं वरमिमं मत्तो गृह्णीष्व सुव्रत ॥ प्रसन्नसुमुखो भूत्वा ममैकाग्रमनाः शृणु ॥ १०५ ॥ अश्वमेधसहस्रस्य वाजपेयशतस्य च ॥ प्रजापते मत्प्रसादात्फलभागी भविष्यसि ॥ १०६ ॥ वेदान्षडङ्गान्बुध्यस्व सांख्ययोगांश्च कृत्स्नशः ॥ तपश्च विपुलं तप्त्वा दुश्चरं देवदानवैः ॥ १०७ ॥ अब्दैर्द्वादशभिर्युक्तं सूक्ष्ममप्रज्ञनिन्दितम् ॥ वर्णाश्रमकृतैर्धर्मैर्विनीतं न क्वचित्क्वचित् ॥ १०८ ॥ समागतं व्यवसितं पशुपाशविमोक्षणम् ॥ सर्वेषामाश्रमाणां च मया

पाशुपतं व्रतम् ॥ १०९ ॥ उत्पादितं दक्ष शुभं सर्वपापविमोचनम् ॥ अस्य चीर्णस्य यत्सम्यक् फलं भवति पुष्कलम् ॥ तच्चास्तु सुमहाभाग मानसस्त्यज्यतां ज्वरः ॥ ११० ॥ ॥ ब्रह्मोवाच ॥ एवमुक्त्वा तु देवेशः सपत्नीकः सहानुगः ॥ अदर्शनमनुप्राप्तो दक्षस्यामिततेजसः ॥ १११ ॥ अवाप्य च तथा भागं यथोक्तं चोमया भवः ॥ ज्वरं च सर्वधर्मज्ञा बहुधा व्यभजत्तदा ॥११२॥ शान्त्यर्थं सर्वभूतानां शृणुध्वमथ वै द्विजाः ॥ शिखाभितापो नागानां पर्वतानां शिलाजतु ॥ ११३ ॥ अपां तु नीलिकां विद्यान्निर्मोको भुजगेषु च ॥ खोरकः सौरभेयाणामूखरः पृथिवीतले ॥ ११४ ॥ शुनामपि च धर्मज्ञा दृष्टिप्रत्यवरोधनम् ॥ रन्ध्रागतमथाश्वानां शिखोद्भेदश्च बर्हिणाम् ॥ ११५ ॥ नेत्ररागः कोकिलानां ज्वरः प्रोक्तो महात्मनाम् ॥ जनानामपि भेदश्च सर्वेषामिति नः श्रुतम् ॥ ११६ ॥ शुकानामपि सर्वेषां हिक्किका प्रोच्यते ज्वरः ॥ शार्दूलेष्वथ वै विप्राः श्रमो ज्वर इहोच्यते ॥ ११७ ॥ मानुषेषु च धर्मज्ञा ज्वरो नामैष कीर्तितः ॥ मरणे जन्मनि तथा मध्ये चापि निवेशितः ॥ ११८ ॥ एतन्माहेश्वरं तेजो ज्वरो नाम सुदारुणः ॥ नमस्यश्चैव मान्यश्च सर्वप्राणिभिरीश्वरः ॥ ११९ ॥ इमां ज्वरोत्पत्तिमदीनमानसः पठेत्सदा यस्तु समाहितो नरः ॥ विमुक्तरोगः स नरो मुदा युतो लभेत कामांश्च यथामनीषितान् ॥ १२० ॥ दक्षप्रोक्तं स्तवं चापि कीर्तयेद्यः शृणोति वा ॥ नाशुभं प्राप्नुयात्किंचिद्दीर्घमायुरवाप्नुयात् ॥ १२१ ॥ यथा सर्वेषु देवेषु वरिष्ठो भगवान्भवः ॥ तथा स्तवो वरिष्ठोऽयं स्तवानां दक्षनिर्मितः ॥ १२२ ॥ यशःस्वर्गसुरैश्वर्यवित्तादिजयकाङ्क्षिभिः ॥ स्तोतव्यो भक्तिमास्थाय विद्याकामैश्च यत्नतः ॥ १२३ ॥ व्याधितो दुःखितो दीनो नरो ग्रस्तो भयादिभिः ॥ राजकार्यनियुक्तो वा मुच्यते महतो भयात् ॥ १२४ ॥ अनेनैव च देहेन गणानां च महेश्वरात् ॥ इह लोके सुखं प्राप्य गणराडुपपद्यते ॥ १२५ ॥ न यक्षा न पिशाचा वा न नागा न विनायकाः ॥ कुर्युर्विघ्नं गृहे तस्य यत्र संस्तूयते भवः ॥ १२६ ॥ शृणुयाद्वा इदं नारी भक्त्याऽथ भवभाविता ॥ पितृपक्षे भर्तृपक्षे पूज्या भवति चैव हि ॥ १२७ ॥ शृणुयाद्वा इदं सर्वं कीर्तयेद्वाऽप्यभीक्ष्णशः ॥ तस्य सर्वाणि कार्याणि सिद्धिं गच्छन्त्यविघ्नतः ॥ १२८ ॥ मनसा चिन्तितं यच्च यच्च वाचाऽप्युदीरितम् ॥ तत्तत्संपद्यते तस्य स्तवस्यास्यानुकीर्तनात् ॥ १२९ ॥ देवस्य सगुहस्याथ देव्या नन्दीश्वरस्य च ॥ बलिं विभवतः कृत्वा दमेन नियमेन च ॥ १३० ॥ ततः प्रयुक्तो गृह्णीयान्नामान्याशु यथाक्रमम् ॥ ईप्सितांल्लभतेऽप्यर्थान्कामान्भोगांश्च मानवः ॥ १३१ ॥ मृतश्च स्वर्गमाप्नोति स्त्रीसहस्रसमावृतः ॥ सर्वकामसुयुक्तो वा युक्तो वा सर्वपातकैः ॥ १३२ ॥ पठन्दक्षकृतं स्तोत्रं सर्वपापैः प्रमुच्यते ॥ मृतश्च गणसायुज्यं पूज्यमानः सुरासुरैः ॥ १३३ ॥ वृषेण विनियुक्तेन विमानेन विराजते ॥ आभूतसंप्लवस्था

निवासिभ्यो नृपेभ्यो विधिवद्धनम् ॥ गजानश्वान्सुवासांसि देशान्प्रायच्छदीश्वरः ॥ ७९ ॥ विप्रान्नानाविधै रत्नैर्भक्ष्यभोज्यादिसंयुतैः ॥ संतर्प्य दीनानाथांश्च दत्त्वा नानाविधेप्सितम् ॥ ८० ॥ विप्रान्नृपान्विशः शूद्रांस्तर्पितानिष्टदानतः ॥ अनुजज्ञे स्वदेशेभ्यो गमनाय नृपोत्तमः ॥ ८१ ॥ स्वकुटुंबं दासदासीः संतोष्येष्टप्रदानतः ॥ मेने कृतार्थमात्मानमश्वमेधमखेन सः ॥८२॥ इति श्रीब्रह्मपुराणे स्वयंभ्वृषिसंवादे राज्ञोऽश्वमेधकरणं नाम पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥ ॥ ब्रह्मोवाच ॥ एवं वेदोक्तविधिना हयमेधं महामखम् ॥ स्वान्तःकरणशुद्ध्यर्थं भीतः संसारसागरात् ॥ १ ॥ एकान्त उपविश्याथ प्राप्तुं विष्णोः परं पदम् ॥ तुष्टाव जगतां नाथं जगदानन्ददायकम् ॥२॥ ॥ राजोवाच ॥ जगदाधार विश्वेश सर्वकामप्रपूरक ॥ लक्ष्मी

---

—यानि च । अलंकारवतीः शुभ्राः कन्या राजीवलोचनाः ॥ शतानि पञ्च विप्रेभ्यो राजा हृष्टः प्रदत्तवान् । स्त्रियः पीनपयोभाराः कञ्चुकैः स्वस्तनावृताः ॥ मध्यहीनाश्च सुश्रोण्यः पद्मपत्रायतेक्षणाः । हावभावान्वितग्रीवा बह्व्यो वलयभूषिताः ॥ पादनूपुरसंयुक्ताः पट्टदुकूलवाससः । एकैकशोऽददात्तस्मिन्काम्याश्च कामिनीर्बहूः ॥ अर्थिभ्यो ब्राह्मणादिभ्यो हयमेधे द्विजोत्तमाः । भक्ष्यं भोज्यं च संपूर्णं नानासंभारसंयुतम् ॥ खण्डकाद्यान्यनेकानि स्विन्नपक्कांश्च पिष्टकान् । अन्नान्यन्यानि मेध्यांश्च घृतपूरांश्च खाण्डवान् ॥ मधुरांस्तर्जितान्सूपानन्नं मृष्टं सुपाकिकम् । प्रीत्यर्थं सर्वसत्त्वानां दीयतेऽन्नं पुनः पुनः । दत्तस्य दीयमानस्य धनस्यान्तो न विद्यते । एवं दृष्ट्वा महायज्ञं देवदैत्याः सचारणाः ॥ गन्धर्वाप्सरसः सिद्धा ऋषयश्च मनेश्वराः । विस्मयं परमं याता दृष्ट्वा क्रतुवरं शुभम् ॥ पुरोधा मन्त्रिणो राजा हृष्टास्तत्रैव सर्वशः ॥ न तत्र मलिनः कश्चिन्न दीनो न क्षुधाऽन्वितः ॥ न चोपसर्गो न ग्लानिर्नाऽऽधयो व्याधयस्तथा । नाकालमरणं तत्र न दंशो न ग्रहा विषम् ॥ हृष्टपुष्टजनाः सर्वे तस्मिन्राज्ञो महोत्सवे । ये च तत्र तपःसिद्धा मुनयश्चिरजीविनः ॥ न ज्ञातस्तादृशो यज्ञो धनधान्यसमन्वितः । एवं स राजा विधिवद्वाजिमेधं द्विजोत्तमाः ॥ कर्तुं समापयामास प्रासादं वैष्णवं तथा ॥

१ अयमत्राधिको ग्रंथः—ब्रूहि नो देवदेवेश यत्पृच्छामः पुरातनम् । यथा ताः प्रतिमाः पूर्वमिन्द्रद्युम्नेन निर्मिताः ॥ केन चैव प्रकारेण तुष्टस्तस्मै स माधवः । तत्सर्वं वद नास्माकं परं कौतूहलं हि नः ॥ शृणुध्वं मुनिशार्दूलाः पुराणं वेदसंमितम् । कथयामि पुरा वृत्तं प्रतिमानां च संभवम् ॥ प्रवृत्ते च महायज्ञे प्रासादे चैव निर्मिते । चिन्ता तस्य बभूवाथ प्रतिमार्थमहर्निशम् ॥ न वेद्मि केन देवेशं सर्वेशं लोकपावनम् । सर्गस्थित्यन्तकर्तारं पश्यामि पुरुषोत्तमम् ॥ चिन्ताविष्टस्त्वभूद्राजा शेते रात्रौ दिवाऽपि न । न भुंक्ते विविधान्भोगान्न च स्नानं प्रसाधनम् ॥ नैव वाद्येन गन्धेन गायनैर्वर्णकैरपि । न गजैर्भद्रयुक्तैश्च न चानेकैर्हयान्वितैः ॥ नेन्द्रनीलैर्महानीलैः पद्मरागमयैर्न च । सुवर्णरजताद्यैश्च वज्रस्फटिकसंयुतैः ॥ बहुरागार्थकामैर्वा न वन्यैरन्तरिक्षगैः । बभूव तस्य नृपतेर्मनसस्तुष्टिवर्धनम् ॥ शैलमृद्दारुजातेषु प्रशस्तं किं महीतले । विष्णुप्रतिमायोग्यं न सर्वलक्षणलक्षितम् ॥ एतैरेव त्रयाणां तु दयितं स्यात्सुरार्चितम् । स्थापिते प्रीतिमभ्येति इति चिन्तापरोऽभवत् ॥ पञ्चरात्रविधानेन संपूज्य पुरुषोत्तमम् । चिन्ताविष्टो महीपालः संस्तोतुमुपचक्रमे ॥ वासुदेव नमस्तेऽस्तु नमस्ते मोक्षकारण । त्राहि मां सर्वलोकेश जन्मसंसारसागरात् ॥ निर्मलाम्बरसंकाश नमस्ते पुरुषोत्तम । संकर्षण नमस्तेऽस्तु त्राहि मां धरणीधर ॥ नमस्ते हेमगर्भाभ नमस्ते मकरध्वज । रतिकान्त नमस्तेऽस्तु त्राहि मां संवरान्तक ॥ नमस्तेऽञ्जनसंकाश नमस्ते भक्तवत्सल । अनिरुद्ध नमस्तेऽस्तु त्राहि मां वरदो भव ॥ नमस्ते विबुधावास नमस्ते विबुधप्रिय । नारायण नमस्तेऽस्तु त्राहि मां शरणागतम् ॥ नमस्ते बलिनां श्रेष्ठ नमस्ते लाङ्गलायुध । चतुर्मुख जगद्धाम त्राहि मां प्रपितामह ॥ नमस्ते नीलमेघाभ नमस्ते त्रिदशार्चित ॥

कान्त कृपासिंधो भक्तवत्सल सत्प्रिय ॥३॥ त्राहि विष्णो महाराज मग्नं मां भवसागरे ॥ प्रलयानलसंकाश नमस्ते दितिजान्तक ॥ नरसिंह महावीर्य त्राहि मां दीप्तलोचन ॥ ४ ॥ यथा रसातलादुर्वी त्वया दंष्ट्रोद्धृता पुरा ॥ तथा महावराह त्वं त्राहि मां दुःखसागरात् ॥ ५ ॥ तवैता मूर्तयः कृष्ण वरदाः संस्तुता मया ॥ त्वञ्चेमे बलदेवाद्याः पृथग्रूपेण संस्थिताः ॥ ६ ॥ अङ्गानि तव देवेश गरुत्माद्यास्तथा प्रभो ॥ दिक्पालाः सायुधाश्चैव केशवाद्यास्तथाऽच्युत ॥७॥ ये चान्ये तव देवेश भेदाः प्रोक्ता मनीषिभिः ॥ तेऽपि सर्वे जगन्नाथ प्रसन्नायतलोचन ॥८॥ मयाऽर्चिताः स्तुताः सर्वे तथा यूयं नमस्कृताः ॥ प्रयच्छध्वं वरं मह्यं धर्मकामार्थमोक्षदाः ॥ ९ ॥ भेदास्ते कीर्तिता ये तु हरसंकर्षणादयः ॥ तत्र पूजार्थसंभूतास्ते च त्वयि समाश्रिताः ॥ १० ॥ न भेदस्तव देवेश विद्यते परमार्थतः ॥ विविधं तव यन्नाथ रूपं तदुपचारतः ॥११॥ अद्वैतं त्वां कथं द्वैतं वक्तुं शक्नोति मानवः ॥ एकस्त्वं हि हरे व्यापी चित्स्वभावो निरञ्जनः ॥ १२ ॥ परमं तव यद्रूपं भावाभावविवर्जितम् ॥ निर्लेपं विमलं सूक्ष्मं कूटस्थमचलं ध्रुवम् ॥ १३ ॥ सर्वपापविनिर्मुक्तं सत्तामात्रव्यवस्थितम् ॥ तद्देवाश्च न जानन्ति कथं जानाम्यहं प्रभो ॥ १४ ॥ अपरं तव यद्रूपं पीतवस्त्रं चतुर्भुजम् ॥ शङ्खचक्रगदापाणिमुकुटाङ्गदधारिणम् ॥ १५ ॥ श्रीवत्सोरस्कसंयुक्तं वनमालाविभूषितम् ॥ तदर्चयन्ति विबुधा ये चान्ये तव संश्रयाः ॥ १६ ॥ देवदेव सुरश्रेष्ठ भक्तानामभयप्रद ॥ त्राहि मां पद्मपत्राक्ष मग्नं विषयसागरे ॥ १७ ॥ नान्यं पश्यामि लोकेश यस्याहं शरणं व्रजे ॥ त्वामृते कमलाकान्त प्रसीद मधुसूदन ॥ १८ ॥ जराव्याधिशतैर्युक्तो नानादुःखैर्निपीडितः ॥ हर्षशोकान्वितो मूढः कर्मपाशैः सुयन्त्रितः ॥ १९ ॥ पतितोऽहं महारौद्रे घोरे संसारसागरे ॥ विषयोदकदुष्पारे रागद्वेषझषाकुले ॥ २० ॥ इन्द्रियावर्तगम्भीरे तृष्णाशोकोर्मिसंकुले ॥ निराश्रये निरालम्बे निःसारेऽत्यन्तचञ्चले ॥ २१ ॥ मायया मोहितस्तत्र भ्रमामि सुचिरं प्रभो ॥ नानाजातिसहस्रेषु जायमानः पुनः पुनः ॥ २२ ॥ मया जन्मान्यनेकानि सहस्राण्ययुतानि च ॥ विविधान्यनुभूतानि संसारेऽस्मिञ्जनार्दन ॥ २३ ॥ वेदाः साङ्गा मयाऽधीताः शास्त्राणि विविधानि च ॥ इतिहासपुराणानि तथा शिल्पान्यनेकशः ॥ २४ ॥ असंतोषाश्च संतोषाः संचयापचया व्ययाः ॥ मया प्राप्ता जगन्नाथ जयवृद्ध्युदयेतराः ॥ २५ ॥ भार्यारिमित्रबन्धूनां वियोगाः संगमास्तथा ॥ पितरो विविधा दृष्टा मातरश्च तथा मया ॥ २६ ॥ दुःखानि चानुभूतानि यानि सौख्यान्यनेकशः ॥ प्राप्ताश्च बान्धवाः पुत्रा भ्रातरो ज्ञातयस्तथा ॥ २७ ॥ *मयोषितं तथा स्त्रीणां कोष्ठे विण्मूत्रविप्लवे ॥ गर्भवासे महादुःखमनुभूतं तथा प्रभो ॥ २८ ॥ दुःखानि यान्यनेकानि बाल्ययौवनगोचरे ॥ वार्धके च हृषीकेश तानि प्राप्तानि वै मया ॥ २९ ॥ मरणे यानि दुःखानि यममार्गे*

यमालये ॥ मया तान्यनुभूतानि नरके यातनाकुले ॥ ३० ॥ कृमिकीटद्रुमाणां च हस्त्यश्वमृगपक्षिणाम् ॥ माहिषोष्ट्रगवां चैव तथाऽन्येषां वनौकसाम् ॥ ३१ ॥( द्विजातीनां च सर्वेषां शूद्राणां चैव योनिषु ॥ धनिनां क्षत्रियाणां च दरिद्राणां तपस्विनाम् ॥ ३२ ॥ नृपाणां नृपभृत्यानां तथाऽन्येषां च देहिनाम् ॥ गृहेषु तेषामुत्पन्नो देव चाहं पुनः पुनः ॥ ३३ ॥ गतोऽस्मि दासतां नाथ श्रीमतां बहुशो नृणाम् ॥ दरिद्रत्वं चेश्वरत्वं स्वामित्वं च तथा गतः ॥ ३४ ॥ हता मया हतश्चान्यैर्घातितो घातितास्तथा ॥ दत्तं ममान्यैरन्येभ्यो मया दत्तमनेकशः ॥ ३५ ॥ पितृमातृसुहृद्भ्रातृकलत्राणां कृते न च ॥ धनिनां श्रोत्रियाणां च दरिद्राणां तपस्विनाम् ॥ ३६ ॥ उक्तं दैन्यं बहुविधं त्यक्त्वा लज्जां जनार्दन ॥ देवतिर्यङ्मनुष्येषु स्थावरेषु चरेषु च ॥ ३७ ॥ न पश्यामि तु तत्स्थानं यत्राहं न गतः प्रभो ॥ कदा मे नरके वासः कदा स्वर्गे जगत्पते ॥ ३८ ॥ कदा मनुष्यलोकेषु कदा तीर्थजलेषु च ॥ जलयन्त्रे यथा चक्रे घटी रज्जुनिबन्धिनी ॥ ३९ ॥ याति चोर्ध्वमधश्चैव कदा मध्ये च तिष्ठति ॥ तथा चाहं सुरश्रेष्ठ कर्मरज्जुसमाश्रितः ॥ ४० ॥ अधश्चोर्ध्वं तथा मध्ये भ्रमामि कर्मयोगतः ॥ एवं संसारचक्रेऽस्मिन्भैरवे रोमहर्षणे ॥ ४१ ॥ भ्रमामि सुचिरं कालं नान्तं पश्यामि कर्हिचित ॥ न जाने किं करोम्यद्य हरे व्याकुलितेन्द्रियः ॥ ४२ ॥ शोकतृष्णाभिभूतश्च कांदिशीको विचेतनः ॥ इदानीं त्वामहं देव विह्वलः शरणं गतः ॥ ४३ ॥ त्राहि मां दुःखितं कृष्ण मग्नं संसारसागरे ॥ कृपां कुरु जगन्नाथ भक्तं मां यदि मन्यसे ॥ ४४ ॥ त्वदृते नास्ति मे बन्धुर्योऽसौ चिन्तां करिष्यति ॥ देव त्वां नाथमासाद्य न भयं ·मेऽस्ति कुत्रचित् ॥ ४५ ॥ जीविते मरणे चैव योगक्षेमेऽथ वा प्रभो ॥ ये तु त्वां विधिवद्देव नार्चयन्ति नराधमाः ॥ ४६ ॥ सुगतिस्तु कथं तेषां भवेत्संसारबन्धनात् ॥ किं तेषां कुलशीलेन विद्यया जीवितेन वा ॥ ४७ ॥ येषां न जायते भक्तिर्जगद्धातारि केशवे ॥ प्रकृतिं चासुरीं प्राप्य ये त्वां निन्दति मोहिताः ॥ ४८ ॥ पतन्ति नरके ते तु जायमानाः पुनः पुनः ॥ न तेषां निष्कृतिस्तस्माद्विद्यते नरकार्णवात् ॥ ४९ ॥ ये दूषयन्ति दुर्वृत्तास्त्वां देव पुरुषाधमाः ॥ यत्र यत्र भवेज्जन्म मम कर्मनिबन्धनात् ॥ ५० ॥ तत्र तत्र हरे भक्तिस्त्वयि चास्तु दृढा सदा ॥ आराध्य त्वां सुरा दैत्या नराश्चान्येऽपि संयताः ॥ ५१ ॥ अवापुः परमां सिद्धिं कस्त्वां देवं न पूजयेत् ॥ न शक्नुवन्ति ब्रह्माद्याः स्तोतुं त्वां त्रिदशा हरे ॥ ५२ ॥ कथं मानुषबुद्ध्याऽहं स्तौमि त्वां प्रकृतेः परम् ॥ तथा चाज्ञानभावेन संस्तुतोऽसि मया प्रभो ॥ ५३ ॥ तत्क्षमस्वापराधं मे यदि चास्ति कृपा मयि ॥ कृतापराधेऽपि हरे क्षमां कुर्वन्ति साधवः ॥ ५४ ॥ तस्मात्प्रसीद देवेश भक्तस्नेहं समाश्रितः ॥ स्तुतोऽसि यन्मया देव भक्तिभावेन चेतसा ॥ सत्यं भवतु तत्सर्वं वासुदेव नमोऽस्तु

ते ॥ ५५ ॥ ॥ ब्रह्मोवाच ॥ इत्थं स्तुतस्तदा तेन प्रसन्नो गरुडध्वजः ॥ ददौ तस्मै मुनिश्रेष्ठाः सकलं मनसेप्सितम् ॥ ५६ ॥ यः संपूज्य जगन्नाथं प्रत्यहं स्तौति मानवः ॥ स्तोत्रेणानेन मतिमान्स मोक्षं लभते ध्रुवम् ॥ ५७ ॥ त्रिसंध्यं यो जपेद्विद्वानिदं स्तोत्रवरं शुचिः ॥ धर्मं चार्थं च कामं च मोक्षं च लभते नरः ॥ ५८ ॥ यः पठेच्छृणुयाद्वाऽपि श्रावयेद्वा समाहितः ॥ स लोकं दिव्यमाप्नोति विष्णोर्निर्धूतकल्मषः ॥ ५९ ॥ धन्यं पापहरं चेदं भुक्तिमुक्तिप्रदं शिवम् ॥ गुह्यं सुदुर्लभं पुण्यं न देयं यस्य कस्यचित् ॥ ६० ॥ न नास्तिकाय मूर्खाय न कृतघ्नाय मानिने ॥ न दुष्टमतये दद्यान्न धूर्ताय कदाचन ॥ ६१ ॥ दातव्यं भक्तियुक्ताय गुणशीलान्विताय च ॥ विष्णुभक्ताय शान्ताय श्रद्धानुष्ठानशालिने ॥ ६२ ॥ इदं समस्ताघविनाशहेतु कारुण्यसंज्ञं सुखमोक्षदं च ॥ अशेषवाञ्छाफलदं वरिष्ठं स्तोत्रं मयोक्तं पुरुषोत्तमस्य ॥ ६३ ॥ ये तं सुसूक्ष्मं विमला मुरारिं ध्यायन्ति नित्यं पुरुषं पुराणम् ॥ ते मुक्तिभाजः प्रविशन्ति विष्णुं मन्त्रैर्यथाऽज्यं हुतमध्वराग्नौ ॥ ६४ ॥ एकः स देवो भवदुःखहन्ता परः परेषां न ततोऽस्ति चान्यत् ॥ स्रष्टा स पाता स तु नाशकर्ता विष्णुः समस्ताखिलसारभूतः ॥६५॥ किं विद्यया किं स्वगुणैश्च तेषां यज्ञैश्च दानैश्च तपोभिरुग्रैः ॥ येषां न भक्तिर्भवतीह कृष्णे जगद्गुरौ मोक्षसुखप्रदे च ॥ ६६ ॥ लोके स धन्यः स शुचिः स विद्वान्मखैस्तपोभिः स गुणैर्वरिष्ठः ॥ ज्ञाता स दाता स तु सत्यवक्ता यस्यास्ति भक्तिः पुरुषोत्तमाख्ये॥६७॥इति श्रीब्रह्मपुराणे स्वयम्भुऋषिसंवादे कारुण्यस्तववर्णनं नाम षट्चत्वारिंशोऽध्यायः॥४६॥ ब्रह्मोवाच॥ स्तुत्वैवं मुनिशार्दूलाः प्रणम्य च सनातनम् ॥ वासुदेवं जगन्नाथं सर्वकामफलप्रदम् ॥ १ ॥ चिन्ताविष्टो महीपालः कुशानास्तीर्य भूतले ॥ वस्त्रं च तन्मना भूत्वा सुष्वाप नियतेन्द्रियः ॥ २ ॥ कथं प्रत्यक्षमभ्येति देवदेवो जनार्दनः ॥ मम सोऽर्तिहरो देवस्तदाऽसाविति चिन्तयन् ॥ ३ ॥ सुप्तस्य तस्य नृपतेर्वासुदेवो जगद्गुरुः ॥ आत्मानं दर्शयामास शङ्खचक्रगदाभृतम् ॥ ४ ॥ स ददर्श च स्वप्नेऽथ देवदेवं जगद्गुरुम् ॥ शङ्खचक्रधरं देवं गदाचक्रोग्रपाणिनम् ॥ ५ ॥ शार्ङ्गबाणासिसंयुक्तं उद्यत्तेजोग्रमण्डलम् ॥ युगान्तादित्यवर्णाभं नीलवैदूर्यसंनिभम् ॥ ६ ॥ सुपर्णांसे समासीनं षोडशार्धभुजं शुभम् ॥ स चास्मै प्राब्रवीद्धीराः साधु राजन्महामते ॥ ७ ॥ क्रतुनाऽनेन दिव्येन तथा भक्त्या च श्रद्धया ॥ तुष्टोऽस्मि ते महीपाल वृथा किमनुशोचसि ॥ ८ ॥ यदत्र प्रतिमा राजञ्जगत्पूज्या सनातनी ॥ यथा तां प्राप्यसे भूप तदुपायं ब्रवीमि ते ॥ ९ ॥ प्रभातायाञ्च शर्वर्यां निर्मले भास्करोदये ॥ सागरस्य जलस्यान्ते नानाद्रुमविभूषिते ॥ १० ॥ जलं तथैव वेलायां दृश्यते तत्र वै महत् ॥ लवणस्योदधे राजंस्तरंगैः समभिप्लुतम ॥ ११ ॥ कूलालम्बी महावृक्षः ।स्थितः स्थलजलेषु च ॥ वेलाभिर्हन्यमानस्तु न चासौ कम्पते द्रुमः ॥ १२ ॥ परशु





मादाय हस्तेन ऊर्मेरन्तस्ततो व्रज ॥ एकाकी विहरन्राजन्स त्वं पश्यसि पादपम् ॥ १३ ॥ अश्वत्थं तु समालोक्य छेदय त्वमशङ्कितः ॥ शात्यमानं तु तं वृक्षं प्रातरद्भुतदर्शनम् ॥ १४ ॥ दृष्ट्वा तेनैव संचिन्त्य ततो भूपाल दर्शनात् ॥ कुरु मे प्रतिमां दिव्यां जहि चिन्तां विमोहिनीम् ॥ १५ ॥ ॥ ब्रह्मोवाच ॥ एवमुक्त्वा महाभागो जगामादर्शनं हरिः ॥ स चापि स्वप्नमालोक्य परं विस्मयमागतः ॥ १६ ॥ तां निशां स समुद्वीक्ष्य स्थितस्तद्गतमानसः ॥ व्याहरन्वैष्णवान्मन्त्रान्सूक्तं चैव तदात्मकम् ॥ १७ ॥ प्रभातायां रजन्यां तु उत्थितो नृपतिस्तदा ॥ स स्नात्वा सागरे सम्यग्यथावद्विधिना ततः ॥ १८ ॥ दत्त्वा दानं च विप्रेभ्यो ग्रामांश्च नगराणि च ॥ कृत्वा पौर्वाह्णिकं कर्म जगाम स नृपोत्तमः ॥ १९ ॥ न रथो न पदातिश्च न गजो न च सारथिः ॥ एकाकी स महावेलां प्रविवेश महामतिः ॥ २० ॥ तत्रापश्यन्महावृक्षं तेजस्वन्तं महाद्रुमम् ॥ महातीक्ष्णं महारौद्रं पुण्यं विपुलमेव च ॥ २१ ॥ महोत्सेधं महाकायं प्रगुप्तं च जलान्तिके ॥ सान्द्रमाञ्जिष्ठवर्णाभं नामजातिविवर्जितम् ॥ २२ ॥ नरनाथस्तदा विप्रा द्रुमं दृष्ट्वा मुदाऽन्वितः ॥ परशुना शातयामास निशितेन दृढेन च ॥ २३ ॥ द्वैधीकर्तुमनास्तत्र बभूवेन्द्रसखः स च ॥ निरीक्ष्यमाणे काष्ठे तु बभूवाद्भुतदर्शनम् ॥ २४ ॥ विश्वकर्मा च विष्णुश्च विप्रवेषधरावुभौ ॥ आजग्मतुर्महाभागौ तदा तुल्याग्रजन्मनौ ॥ २५ ॥ ज्वलमानौ स्वतेजोभिर्दिव्यस्रगनुलेपनौ ॥ अथ तौ तं समागम्य नृपमिन्द्रसखं तदा ॥ २६ ॥ तावूचतुर्महाराज किमत्र त्वं करिष्यसि ॥ किमर्थं च महाबाहो शातितश्च वनस्पतिः ॥ २७ ॥ असहायो महाबाहो निर्जने गहने वने ॥ महासिन्धुतटे चैव कथं वै शातितो द्रुमः ॥ २८ ॥ ब्रह्मोवाच ॥ तयोः श्रुत्वा वचो विप्राः स तु राजा मुदाऽन्वितः ॥ बभाषे वचनं ताभ्यां मृदु वै मधुरं तथा ॥ २९ ॥ दृष्ट्वा तौ रूपसंपन्नौ चन्द्रसूर्याविवाऽऽगतौ ॥ नमस्कृत्य जगन्नाथाववाङ्मुखमवस्थितः ॥ ३० ॥ ॥ राजोवाच ॥ देवदेवमनाद्यन्तमनन्तं जगतां पतिम् ॥ आराधनाय प्रतिमां करोमीति मतिर्मम ॥ ३१ ॥ अहं स देवदेवेन परमेण महात्मना ॥ स्वप्नान्ते च समुद्दिष्टो भवद्भ्यां श्रावितं मया ॥ ३२ ॥ राज्ञस्तु वचनं श्रुत्वा देवेन्द्रप्रतिमस्य च ॥ प्रहस्य तस्मै विश्वेशस्तुष्टो वचनमब्रवीत् ॥ ३३ ॥ विष्णुरुवाच ॥ साधु साधु महाभाग यदेतन्मतमुत्तमम् ॥ संसारसागरे घोरे कदलीदलसन्निभे ॥ ३४ ॥ निःसारे दुःखबहुले भोगग्राहसमाकुले ॥ इन्द्रियावर्तकलिले दुस्तरे रोमहर्षणे ॥ ३५ ॥ नानाव्याधिशतावर्ते जलबुद्बुदसन्निभे ॥ यतस्ते मतिरुत्पन्ना विष्णोराराधनाय वै ॥ ३६ ॥ धन्यस्त्वं नृपशार्दूल गुणैः सर्वैरलंकृतः ॥ सप्रजा पृथिवी धन्या सशैलवनकानना ॥ ३७ ॥ सपुरग्रामनगरा चतुर्वर्णैरलंकृता ॥ यतस्त्वं नृपशार्दूल प्रजाः पालयिता प्रभुः ॥ ३८ ॥ एह्येहि सुमहाभाग द्रुमेऽस्मिन्सुख

शीतले ॥ आवाभ्यां सह तिष्ठ त्वं कथाभिर्धर्मसंश्रितः ॥ ३९ ॥ अयं मम सहायस्तु आगतः शिल्पिनां वरः ॥ विश्वकर्मसमः साक्षान्निपुणः सर्वकर्मसु ॥ मयोदिष्टां तु प्रतिमां करोत्येष तटं त्यज ॥ ४० ॥ श्रुत्वैवं वचनं तस्य तदा राजा द्विजन्मनः ॥ सागरस्य तटं त्यक्त्वा गत्वा तस्य समीपतः ॥ ४१ ॥ तस्थौ स नृपतिश्रेष्ठो वृक्षच्छाये सुशीतले ॥ ततस्तस्मै स विश्वात्मा ददावाज्ञां द्विजाकृतिः ॥ ४२ ॥ शिल्पिमुख्याय विप्रेन्द्राः कुरुष्व प्रतिमामिमाम् ॥ कृष्णरूपं परं शान्तं पद्मपत्रायतेक्षणम् ॥ ४३ ॥ श्रीवत्सकौस्तुभधरं शङ्खचक्रगदाधरम् ॥ चन्द्रगोक्षीरवर्णाभं द्वितीयं स्वस्तिकांकितम् ॥ ४४ ॥ लांगलास्त्रधरं देवमनन्ताख्यं महाबलम् ॥ देवदानवगन्धर्वयक्षविद्याधरोरगैः ॥ ४५ ॥ न विज्ञातो हि तस्यान्तस्तेनानन्त इति स्मृतः ॥ भगिनीं वासुदेवस्य रुक्मवर्णां सुशोभनाम् ॥ ४६ ॥ तृतीयां वै सुभद्रां च सर्वलक्षणलक्षिताम् ॥ ४७ ॥ ॥ ब्रह्मोवाच ॥ श्रुत्वैतद्वचनं तस्य विश्वकर्मा सुकर्मकृत् ॥ तत्क्षणात्कारयामास प्रतिमाः शुभलक्षणाः ॥ ४८ ॥ कुण्डलाभ्यां विचित्राभ्यां कर्णाभ्यां सुविराजितम् ॥ चक्रलांगलविन्यस्तहस्ताभ्यां साधुसंमतम् ॥ ४९ ॥ प्रथमं शुक्लवर्णाभं शारदेन्दुसमप्रभम् ॥ आरक्ताक्षं महाकायं फणाविकटमस्तकम् ॥ ५० ॥ नीलाम्बरधरं चोग्रं बलं बलमदोद्धतम् ॥ कुण्डलैकधरं दिव्यं गदामुशलधारिणम् ॥ ५१ ॥ द्वितीयं पुण्डरीकाक्षं नीलजीमूतसंनिभम् ॥ अतसीपुष्पसंकाशं पद्मपत्रायतेक्षणम् ॥ ५२ ॥ पीतवाससमत्युग्रं शुभं श्रीवत्सलक्षणम् ॥ चक्रपूर्णकरं दिव्यं सर्वपापहरं हरिम् ॥ ५३ ॥ तृतीयां स्वर्णवर्णाभां पद्मपत्रायतेक्षणाम् ॥ विचित्रवस्त्रसंछन्नां हारकेयूरभूषिताम् ॥ ५४ ॥ विचित्राभरणोपेतां रत्नहारावलम्बिताम् ॥ पीनोन्नतकुचां रम्यां विश्वकर्मा विनिर्ममे ॥ ५५ ॥ स तु राजाऽद्भुतं दृष्ट्वा क्षणेनैकेन निर्मिताः ॥ दिव्यवस्त्रयुगच्छन्ना नानारत्नैरलंकृताः ॥ ५६ ॥ सर्वलक्षणसंपन्नाः प्रतिमाश्च मनोहराः ॥ विस्मयं परमं गत्वा इदं वचनमब्रवीत् ॥ ५७ ॥ ॥ इन्द्रद्युम्न उवाच ॥ किं देवौ समनुप्राप्तौ द्विजरूपधरावुभौ ॥ उभौ चाद्भुतकर्माणौ देववृत्तौ न मानुषौ ॥ ५८ ॥ देवौ वा मानुषौ वाऽपि यक्षविद्याधरौ च किम् ॥ किंनु ब्रह्महृषीकेशौ किं वसू किमुताश्विनौ ॥ ५९ ॥ न वेद्मि सत्यसद्भावौ मायारूपेण संस्थितौ ॥ युवां गतोऽस्मि शरणमात्मा स्वो मे प्रकाश्यताम् ॥ ६० ॥ इति श्रीब्रह्मपुराणे स्वयंभ्वृषिसंवादे प्रतिमोत्पत्तिकथनं नाम सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ ॥ श्रीभगवानुवाच ॥ नाहं देवो न यक्षो वा न दैत्यो न च देवराट् ॥ न ब्रह्मा न च रुद्रोऽहं विद्धि मां परमेश्वरम् ॥ १ ॥ आर्तिहा सर्वलोकानां समग्रबलपौरुषः ॥ आराधनीयो भूतानामन्तो यस्य न विद्यते ॥ २ ॥ पठ्यते सर्वशास्त्रेषु वेदान्तेषु निगद्यते ॥ यमाहुर्ज्ञानगम्येति वासुदेवेति योगिनः ॥ ३ ॥ अहमेव स्वयं ब्रह्मा अहं विष्णुः शिवोऽप्यहम् ॥ इन्द्रोऽहं



देवराजश्च जगत्संयमनो यमः ॥ ४ ॥ पृथिव्यादीनि भूतानि त्रेताग्निर्हुतभुङ्नृप ॥ वरुणोऽपां पतिश्चाहं धरित्री च महीधरः ॥ ५ ॥ यत्किंचिद्वाङ्मयं लोके जगत्स्थावरजङ्गमम् ॥ चराचरं च यद्विश्वं मदन्यन्नास्ति किंचन ॥ ६ ॥ प्रीतोऽहं ते नृपश्रेष्ठ वरं वरय सुव्रत ॥ यदिष्टं तत्प्रयच्छामि हृदि यत्ते व्यवस्थितम् ॥ ७ ॥ मद्दर्शनमपुण्यानां स्वप्नान्तेऽपि न जायते ॥ त्वं पुनर्दृढभक्तित्वात्प्रत्यक्षं दृष्टवानसि ॥ ८ ॥ ॥ ब्रह्मोवाच ॥ ॥ श्रुत्वैवं वासुदेवस्य वचनं तस्य भो द्विजाः ॥ रोमाञ्चिततनुर्भूत्वा इदं स्तोत्रं जगौ नृपः ॥ ९ ॥ ॥ राजोवाच ॥ श्रियःकान्त नमस्तेऽस्तु श्रीपते पीतवाससे ॥ श्रीद श्रीश श्रीनिवास नमस्ते श्रीनिकेतन ॥ १० ॥ आद्यं पुरुषमीशानं सर्वेशं सर्वतोमुखम् ॥ निष्कलं परमं देवं प्रणतोऽस्मि सनातनम् ॥ ११ ॥ शब्दातीतं गुणातीतं भावाभावविवर्जितम् ॥ निर्लेपं निर्गुणं सूक्ष्मं सर्वज्ञं सर्वभावनम् ॥ १२ ॥ प्रावृण्मेघप्रतीकाशं गोब्राह्मणहिते रतम् ॥ सर्वेषामेव गोप्तारं व्यापिनं सर्वभाविनम् ॥ १३ ॥ शङ्खचक्रधरं देवं गदामुशलधारिणम् ॥ नमस्ये वरदं देवं नीलोत्पलदलच्छविम् ॥ १४ ॥ नागपर्यङ्कशयनं क्षीरोदार्णववासिनम् ॥ नमस्येऽहं हृषीकेशं सर्वपापहरं हरिम् ॥ १५ ॥ पुनस्त्वां देवदेवेशं नमस्ये वरदं विभुम् ॥ सर्वलोकेश्वरं विष्णुं मोक्षकारणमव्ययम् ॥ १६ ॥ ब्रह्मोवाच ॥ एवं स्तुत्वा तु तं देवं प्रणिपत्य कृताञ्जलिः ॥ उवाच प्रणतो भूत्वा निपत्य वसुधातले ॥ १७ ॥ राजोवाच ॥ प्रीतोऽसि यदि मे नाथ वृणोमि वरमुत्तमम् ॥ देवासुराः सगन्धर्वा यक्षरक्षोमहोरगाः ॥ १८ ॥ सिद्धविद्याधराः साध्याः किन्नरा गुह्यकास्तथा ॥ ऋषयो ये महाभागा नानाशास्त्रविशारदाः ॥ १९ ॥ परिव्राड्योगयुक्तश्च वेदतत्त्वार्थचिन्तकाः ॥ मोक्षशास्त्रविदो येऽन्ये ध्यायन्ति परमं पदम् ॥ २० ॥ निर्गुणं निर्मलं शान्तं गुह्यं परमपावनम् ॥ तत्पदं गन्तुमिच्छामि त्वत्प्रसादात्सुदुर्लभम् ॥ २१ ॥ ॥ श्रीभगवानुवाच ॥ सर्वं भवतु भद्रं ते यथेष्टं सर्वमाप्नुहि ॥ भविष्यति यथाकामं मत्प्रसादान्न संशयः ॥ २२ ॥ दश वर्षसहस्राणि तथा नव शतानि च ॥ अविच्छिन्नं महाराज्यं कुरु त्वं नृपसत्तम ॥ २३ ॥ प्रयास्यसि पदं दिव्यं दुर्लभं यत्सुरासुरैः ॥ पूर्णं मनोरथं शान्तं गुह्यमव्यक्तमव्ययम् ॥ २४ ॥ परात्परतरं सूक्ष्मं निर्लेपं निश्चलं ध्रुवम् ॥ जराशोकाविनिर्मुक्तं क्रियाकारणवर्जितम् ॥ २५ ॥ तदहं दर्शयिष्यामि ज्ञेयाख्यं परमं पदम् ॥ यं प्राप्य परमानन्दं प्राप्स्यसे परमां गतिम् ॥ २६ ॥ कीर्तिश्च तव राजेन्द्र तिष्ठत्वत्र महीतले ॥ यावद्धना नभो यावद्यावच्चन्द्रार्कतारकम् ॥ ॥ २७ ॥ यावत्समुद्राः सप्तैव यावन्मेर्वादिपर्वताः ॥ तिष्ठन्ति दिवि देवाश्च तावत्सर्वत्र चाव्यया ॥ २८ ॥ इन्द्रद्युम्नसरो नाम तीर्थं यज्ञाङ्गसंभवम् ॥ यत्र स्नात्वा सकृल्लोकः शक्रलोकमवाप्नुयात् ॥ २९ ॥ दापयिष्यति यः पिण्डांस्तटेऽस्मिन्सरसः शुभे ॥ कुलैकविंशमुद्धृत्य शक्रलोकं गमिष्यति ॥ ३० ॥

पूज्यमानोऽप्सरोभिश्च गन्धर्वैर्गीतनिःस्वनैः ॥ विमानेन वसेत्तत्र यावदिन्द्राश्चतुर्दश ॥ ३१ ॥ सरसो दक्षिणे भागे नैर्ऋत्यां तु समाश्रितः ॥ न्यग्रोधस्तिष्ठते तत्र तत्समीपे तु मण्डपः ॥ ३२ ॥ केतकीवनसंछन्नो नानापादपसंकुलः ॥ नारिकेलैरसंख्येयैश्चम्पकैर्वकुलावृतैः ॥ ३३ ॥ अशोकैः कर्णिकारैश्च पुंनागैर्नागकेसरैः ॥ पाटलाम्रातसरलैश्चन्दनैर्देवदारुभिः ॥ ३४ ॥ न्यग्रोधाश्वत्थखदिरैः पारिजातैः सहार्जुनैः ॥ हिन्तालैश्चैव तालैश्च शिंशपैर्बदरैस्तथा ॥ ३५ ॥ करञ्जैर्लकुचैः प्लक्षैः पनसैर्बिल्वधातुकैः ॥ अन्यैर्बहुविधैर्वृक्षैः शोभितः समलंकृतः ॥ ३६ ॥ आषाढस्य सिते पक्षे पञ्चम्यां पितृदैवते ॥ ऋक्षे नेष्यन्ति नस्तत्र नीत्वा सप्त दिनानि वै ॥ ३७ ॥ मण्डपे स्थापयिष्यन्ति सुवेश्याभिः सुशोभनैः ॥ क्रीडाविशेषबहुलैर्नृत्यगीतमनोहरैः ॥ ३८ ॥ चामरैः स्वर्णदण्डैश्च व्यजनै रत्नभूषितैः ॥ वीजयन्तस्तथाऽस्मभ्यं स्थापयिष्यन्ति मङ्गलाः ॥ ३९ ॥ ब्रह्मचारी यतिश्चैव स्नातकाश्च द्विजोत्तमाः ॥ वानप्रस्था गृहस्थाश्च सिद्धाश्चान्ये च ब्राह्मणाः ॥ ४० ॥ नानावर्णपदैः स्तोत्रैर्ऋग्यजुःसामनिस्वनैः ॥ करिष्यन्ति स्तुतिं राजन्रामकेशवयोः पुनः ॥ ४१ ॥ ततः स्तुत्वा च दृष्ट्वा च नमस्कृत्वा च भक्तितः ॥ नरो वर्षायुतं दिव्यं श्रीमद्धरिपुरे वसेत् ॥ ४२ ॥ पूज्यमानोऽप्सरोभिश्च गन्धर्वैर्गीतनिःस्वनैः ॥ हरेरनुचरस्तत्र क्रीडते केशवेन वै ॥ ४३ ॥ विमानेनार्कवर्णेन रत्नहारेण राजता ॥ सर्वकामैर्महाभोगैस्तिष्ठते भुवनोत्तमे ॥ ४४ ॥ तपःक्षयादिहाऽऽगत्य मनुष्यो ब्राह्मणो भवेत् ॥ कोटीधनपतिः श्रीमांश्चतुर्वेदी भवेद्ध्रुवम् ॥ ४५ ॥ ॥ ब्रह्मोवाच ॥ एवं तस्मै वरदं दत्त्वा कृत्वा च समयं हरिः ॥ जगामादर्शनं विप्राः सहितो विश्वकर्मणा ॥ ४६ ॥ स तु राजा तदा हृष्टो रोमाञ्चिततनूरुहः ॥ कृतकृत्यमिवाऽऽत्मानं मेने संदर्शनाद्धरेः ॥ ४७ ॥ ततः कृष्णं च रामं च सुभद्रां च वरप्रदाम् ॥ रथैर्विमानसंकाशैर्मणिकाञ्चनचित्रितैः ॥ ४८ ॥ संवाह्य तास्तदा राजा जयमङ्गलनिःस्वनैः ॥ आनयामास मतिमान्सामात्यः सपुरोहितः ॥ ४९ ॥ नानावादित्रनिर्घोषैर्नानावेदस्वनैः शुभैः ॥ संस्थाप्य च शुभे देशे पवित्रे सुमनोहरे ॥ ५० ॥ ततः शुभतिथौ काले नक्षत्रे शुभलक्षणे ॥ प्रतिष्ठां कारयामास सुमुहूर्ते द्विजैः सह ॥ ५१ ॥ यथोक्तेन विधानेन विधिदृष्टेन कर्मणा ॥ आचार्यानुमतेनैव सर्वं कृत्वा महीपतिः ॥ ५२ ॥ आचार्याय तदा दत्त्वा दक्षिणां विधिवत्प्रभुः ॥ ऋत्विग्भ्यश्च विधानेन तथाऽन्येभ्यो धनं ददौ ॥ ५३ ॥ कृत्वा प्रतिष्ठां विधिवत्प्रासादे भवनोत्तमे ॥ स्थापयामास तान्सर्वान्विधिदृष्टेन कर्मणा ॥ ५४ ॥ ततः संपूज्य विधिना नानापुष्पैः सुगन्धिभिः ॥ सुवर्णमणिमुक्ताद्यैर्नानावस्त्रैः सुशोभनैः ॥ ५५ ॥ रत्नैश्च विविधैर्दिव्यैरासनैर्ग्रामपत्तनैः ॥ ददौ चान्यान्स विषयान्पुराणि नगराणि च ॥ ५६ ॥ एवं बहुविधं दत्त्वा राज्यं कृत्वा यथोचितम् ॥ इष्ट्वा च विविधैर्यज्ञैर्दत्त्वा दानान्यनेकशः ॥ ५७ ॥ कृत

कृत्यस्ततो राजा त्यक्तसर्वपरिग्रहः ॥ जगाम परमं स्थानं तद्विष्णोः परमं पदम् ॥ ५८ ॥ एवं मया मुनिश्रेष्ठाः कथितोऽसौ नृपोत्तमः ॥ क्षेत्रस्य चैव माहात्म्यं किमन्यच्छ्रोतुमिच्छथ ॥ ५९ ॥ श्रुत्वैवं वचनं तस्य ब्रह्मणोऽव्यक्तजन्मनः ॥ आश्चर्यं मेनिरे विप्राः पप्रच्छुश्च पुनर्मुदा ॥ ॥ ६० ॥ ॥ मुनय ऊचुः ॥ कस्मिन्काले सुरश्रेष्ठ गन्तव्यं पुरुषोत्तमम् ॥ विधिना केन कर्तव्यं पञ्चतीर्थमिति प्रभो ॥ ६१ ॥ एकैकस्य च तीर्थस्य स्नानदानस्य यत्फलम् ॥ देवताप्रेक्षणे चैव ब्रूहि सर्वं पृथक्पृथक् ॥ ६२ ॥ ॥ ब्रह्मोवाच ॥ ॥ निराहारः कुरुक्षेत्रे पादेनैकेन यस्तपेत् ॥ जितेन्द्रियो जितक्रोधः सप्तसंवत्सरायुतम् ॥ ६३ ॥ दृष्ट्वा सकृद्द्विजश्रेष्ठा द्वादश्यां पुरुषोत्तमम् ॥ कृतोपवासः प्राप्नोति ततोऽधिकतरं फलम् ॥ ६४ ॥ तस्माज्ज्येष्ठे मुनिश्रेष्ठाः प्रयत्नेन सुसंयतैः ॥ स्वर्गलोकेप्सुविप्राद्यैर्द्रष्टव्यः पुरुषोत्तमः ॥ ६५ ॥ पञ्चतीर्थं तु विधिवत्कृत्वा ज्येष्ठे नरोत्तमः ॥ शुक्लपक्षस्य द्वादश्यां पश्येत्तं पुरुषोत्तमम् ॥ ६६ ॥ ये पश्यन्त्यव्ययं देवं द्वादश्यां पुरुषोत्तमम् ॥ ते विष्णुलोकमासाद्य न च्यवन्ते कदाचन ॥ ६७ ॥ तस्माज्ज्येष्ठे प्रयत्नेन गन्तव्यं भो द्विजोत्तमाः ॥ कृत्वा तस्मिन्पञ्चतीर्थं द्रष्टव्यः पुरुषोत्तमः ॥ ६८ ॥ सुदूरस्थोऽपि यो भक्त्या कीर्तयेत्पुरुषोत्तमम् ॥ अहन्यहनि शुद्धात्मा सोऽपि विष्णुपुरं व्रजेत् ॥ ६९ ॥ यात्रां करोति कृष्णस्य श्रद्धया यः समाहितः ॥ सर्वपापविनिर्मुक्तो विष्णुलोकं व्रजेन्नरः ॥ ७० ॥ चक्रं दृष्ट्वा हरेर्दूरात्प्रासादोपरि संस्थितम् ॥ सहसा मुच्यते पापान्नरो भक्त्या प्रणम्य तत् ॥ ७१ ॥ इति श्रीब्रह्मपुराणे स्वयंभुऋषिसंवादे पुरुषोत्तमवर्णनं नामाष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥ ॥ ब्रह्मोवाच ॥ आसीत्कल्पे मुनिश्रेष्ठाः संप्रवृत्ते महाक्षये ॥ नष्टेऽर्कचन्द्रे पवने नष्टे स्थावरजंगमे ॥ १ ॥ उदिते प्रलयादित्ये प्रचण्डे घनगर्जिते ॥ विद्युदुत्पातसंघातैः संभग्ने तरुपर्वते ॥ २ ॥ लोके च संहृते सर्वे महदुल्कानिबर्हणे ॥ शुष्केषु सर्वतोयेषु सरःसु च सरित्सु च ॥ ३ ॥ ततः संवर्तको वह्निर्वायुना सहितो द्विजाः ॥ लोकं तु प्राविशत्सर्वमादित्यैरुपशोभितम् ॥ ४ ॥ पश्चात्स पृथिवीं भित्त्वा प्रविश्य च रसातलम् ॥ देवदानवयक्षाणां भयं जनयते महत् ॥ ५ ॥ निर्दहन्नागलोकं च यच्च किंचित्क्षिताविह ॥ अधस्तान्मुनिशार्दूलाः सर्वं नाशयते क्षणात् ॥ ६ ॥ ततो योजनविंशानां सहस्राणि शतानि च ॥ निर्दहन्नाशुगो वायुः स च संवर्तकोऽनलः ॥ ७ ॥ सदेवासुरगन्धर्वं सयक्षोरगराक्षसम् ॥ ततो दहति संतप्तः सर्वमेव जगत्प्रभुः ॥ ८ ॥ प्रदीप्तोऽसौ महारौद्रः कल्पाग्निरिति संश्रुतः ॥ महाज्वालो महार्चिष्मान्संप्रदीप्तमहास्वनः ॥ ९ ॥ सूर्यकोटिप्रतीकाशो ज्वलन्निव स्वतेजसा ॥ त्रैलोक्यं चादहत्तूर्णं ससुरासुरमानुषम् ॥ १० ॥ एवंविधे महाघोरे महाप्रलयदारुणे ॥ ऋषिः परमधर्मात्मा ध्यानयोगपरोऽभवत् ॥ ११ ॥ एकः संतिष्ठते विप्रा

मार्कण्डेयेति विश्रुतः ॥ मोहपाशैर्निबद्धोऽसौ क्षुत्तृष्णार्व्याकुलेन्द्रियः ॥ १२ ॥ स दृष्ट्वा तं महावह्निं शुष्ककण्ठोष्ठतालुकः ॥ तृषार्तः प्रस्खलन्विप्रास्तदाऽसौ भयविह्वलः ॥ १३ ॥ बभ्राम पृथिवीं सर्वां कांदिशीको विचेतनः ॥ त्रातारं नाधिगच्छन्वै इतश्चेतश्च धावति ॥ १४ ॥ न लेभे स तदा शर्म यत्र विश्रम्यते द्विजाः ॥ करोमि किं न जानामि यमाहं शरणं व्रजे ॥ १५ ॥ कथं पश्यामि तं देवं पुरुषेशं सनातनम् ॥ इति संचिन्त्य देवमेकाग्रेण सनातनम् ॥ १६ ॥ प्राप्तवांस्तत्पदं दिव्यं महाप्रलयकारणम् ॥ पुरुषेशमिति ख्यातं वटराजं सनातनम् ॥ १७ ॥ त्वरायुक्तो मुनिश्चासौ न्यग्रोधस्यान्तिकं ययौ ॥ आसाद्य तं मुनिश्रेष्ठास्तस्य मूले समाविशत् ॥ १८ ॥ न कालाग्निभयं तत्र न चांगारप्रवर्षणम् ॥ न संवर्तागमस्तत्र नच वज्राशनिस्तथा ॥ १९ ॥ इति श्रीब्रह्मपुराणे स्वयंभुऋषिसंवादे मार्कण्डेयवटदर्शनं नामैकोनपञ्चाशतमोऽध्यायः ॥ ४९ ॥ ब्रह्मोवाच ॥

ततो गजकुलप्रख्यास्तडिन्मालाविभूषिताः ॥ समुत्तस्थुर्महामेघा नभस्यद्भुतदर्शनाः ॥ १ ॥ केचिन्नीलोत्पलश्यामाः केचित्कुमुदसंनिभाः ॥ केचित्किञ्जल्कसंकाशाः केचित्पीताः पयोधराः ॥ २ ॥ केचिद्धरितसंकाशाः काकाण्डकनिभास्तथा ॥ केचित्कमलपत्राभाः केचिद्धिङ्गुलसंनिभाः ॥ ३ ॥ केचित्पुरवराकाराः केचिद्गिरिवरोपमाः ॥ केचिदञ्जनसंकाशाः केचिन्मरकतप्रभाः ॥ ४ ॥ विद्युन्मालापिनद्धाङ्गाः समुत्तस्थुर्महाघनाः ॥ घोररूपा महाभागा घोरस्वननिनादिनः ॥ ५ ॥ ततो जलधराः सर्वे समावृण्वन्नभस्तलम् ॥ तैरियं पृथिवी सर्वा सपर्वतवनाकरा ॥ ६ ॥ आपूरिता दिशः सर्वाः सलिलौघप्रवर्षिभिः ॥ ततस्ते जलदा घोरा वारिणा मुनिसत्तमाः ॥ ७ ॥ सर्वतः प्लावयामासुश्चोदिताः परमेष्ठिना ॥ वर्षमाणा महातोयं पूरयन्तो वसुंधराम् ॥ ८ ॥ सुघोरमशिवं रौद्रं नाशयन्ति स्म पावकम् ॥ ततो द्वादश वर्षाणि पयोदाः समुपप्लवे ॥ ९ ॥ धाराभिः पूरयन्तो वै चोद्यमाना महात्मना ॥ ततः समुद्राः स्वां वेलामतिक्रामन्ति भो द्विजाः ॥ १० ॥ पर्वताश्च व्यशीर्यन्ते मही चाप्सु निमज्जति ॥ सर्वतः सुमहाभ्रान्तास्ते पयोदा नभस्तलम् ॥ ११ ॥ संवेष्टयित्वा नश्यन्ति वायुवेगसमाहताः ॥ ततस्तं मारुतं घोरं स विष्णुर्मुनिसत्तमाः ॥ १२ ॥ आदिपद्मालयो देवः पीत्वा स्वपिति भो द्विजाः ॥ तस्मिन्नेकार्णवे घोरे तमोभूत निराश्रये ॥ १३ ॥ नष्टे देवासुरनरे यक्षराक्षसवर्जिते ॥ ततो मुनिः स विश्रान्तो ध्यात्वा च पुरुषोत्तमम् ॥ १४ ॥ ददर्श चक्षुरुन्मील्य जलपूर्णां वसुंधराम् ॥ नापश्यत्तं वटं नोर्वीं न दिगादि न भास्करम् ॥ १५ ॥ न चन्द्रार्काग्निपवनं न देवासुरपन्नगम् ॥ तस्मिन्नेकार्णवे घोरे नष्टे स्थावरजंगमे ॥ १६ ॥ निमज्जन्स तदा विप्राः संतर्तुमुपचक्रमे ॥ बभ्रामासौ मुनिश्चाऽऽर्त इतश्चेतश्च संप्लवन् ॥ १७ ॥ निममज्ज तदा विप्रास्त्रातारं नाधिगच्छति ॥ एवं तं विह्वलं दृष्ट्वा कृपया पुरुषोत्तमः ॥ प्रोवाच मुनिशा

दूलं तदा ध्यानेन तोषितः ॥ १८ ॥ श्रीभगवानुवाच ॥ वत्स श्रान्तोऽसि बालस्त्वं भक्तश्च मम सुव्रत ॥ आगच्छाऽऽगच्छ शीघ्रं त्वं मार्कण्डेय ममा
न्तिकम् ॥ १९ ॥ मा भैर्वत्स मुनिश्रेष्ठ संप्राप्तोऽसि ममाग्रतः ॥ मार्कण्डेय महाधीर बालस्त्वं श्रमपीडितः ॥२०॥ ब्रह्मोवाच ॥ तस्य तद्वचनं श्रुत्वा
मुनिः परमकोपितः ॥ उवाच स तदा विप्रा विस्मितश्चाभवन्मुहुः ॥ २१ ॥ मार्कण्डेय उवाच ॥ कोमन्नाम्ना कीर्तयति तपः परिभवन्निव ॥ बहुवर्षसह
स्राख्यं धर्षयन्निव मे वपुः ॥ २२ ॥ न ह्येष समुदाचारो देवेष्वपि समाहितः ॥ मां ब्रह्मा सर्वदेवेशो दीर्घायुरिति भाषते ॥ २३ ॥ कस्तपोघोरशिरसो
ममाद्य त्यक्तजीवितः ॥ मार्कण्डेयेति चोक्त्वा मां मृत्युं गन्तुमिहेच्छति ॥ २४ ॥ ॥ ब्रह्मोवाच ॥ एवमुक्त्वा तदा विप्राश्चिन्ताविष्टोऽभवन्मुनिः ॥ किं
स्वप्नोऽयं मया दृष्टः किं वा मोहोऽयमागतः ॥२५॥ इत्थं चिन्तयतस्तस्य उत्पन्ना दुःखहा मतिः ॥ ब्रजामि शरणं देवं भक्त्याऽहं पुरुषोत्तमम् ॥२६॥
स गत्वा शरणं विष्णुं मुनिस्तद्गतमानसः ॥ ददर्श तं वटं भूयो विशालं सलिलोपरि ॥ २७ ॥ शाखायां तस्य सौवर्णं विस्तीर्णायां महाद्भुतम् ॥
रुचिरं दिव्यपर्यङ्कं रचितं विश्वकर्मणा ॥ २८ ॥ वज्रवैदूर्यरचितं मणिविद्रुमशोभितम् ॥ पद्मरागादिभिर्जुष्टं रत्नैरन्यैरलंकृतम् ॥ २९ ॥ नानास्तरण
संवीतं नानारत्नोपशोभितम् ॥ नानाश्चर्यसमायुक्तं प्रभामण्डलमण्डितम् ॥ ३० ॥ तस्योपरि स्थितं देवं कृष्णं बालवपुर्धरम् ॥ सूर्यकोटिप्रतीकाशं
दीप्यमानं सुवर्चसम् ॥ ३१ ॥ चतुर्भुजं सुन्दराङ्गं पद्मपत्रायतेक्षणम् ॥ श्रीवत्सवक्षसं देवं शङ्खचक्रगदाधरम् ॥ ३२ ॥ वनमालावृतोरस्कं दिव्यकुण्ड
लधारिणम् ॥ हारभारार्पितग्रीवं दिव्यरत्नविभूषितम् ॥३३॥ दृष्ट्वा तदा मुनिर्देवं विस्मयोत्फुल्ललोचनः ॥ रोमाञ्चिततनुर्देवं प्रणिपत्येदमब्रवीत् ॥३४॥
॥ मार्कण्डेय उवाच ॥ अहो नैकार्णवे घोरे विनष्टे सचराचरे ॥ कथमेको ह्ययं बालस्तिष्ठत्यत्र सुनिर्भयः ॥ ३५ ॥ ॥ ब्रह्मोवाच ॥ भूतं भव्यं भविष्य
च्च जानन्नपि महामुनिः ॥ बुबुधे न ततो देवं मायया तस्य मोहितः ॥ यदा न बुबुधे चैनं तदा खेदादुवाच ह ॥ ३६ ॥ ॥ मार्कण्डेय उवाच ॥
वृथा मे तपसो वीर्यं वृथा ज्ञानं वृथा क्रियाः ॥ वृथा मे जीवितं दीर्घं वृथा मानुष्यजन्म च॥३७॥योऽहं सुप्तं न जानामि पर्यङ्के दिव्यबालकम् ॥३८॥
॥ ब्रह्मोवाच ॥ एवं संचिन्तयन्विप्रः प्लवमानो विचेतनः ॥ त्राणार्थं विह्वलश्चासौ निर्वेदं गतवांस्तदा ॥ ३९ ॥ ततो बालार्कसंकाशं स्वमहिम्ना व्यव
स्थितम् ॥ बालतेजोमयं विप्रा न शशाकाभिवीक्षितुम् ॥ ४० ॥ दृष्ट्वा तं मुनिमायान्तं स बालः प्रहसन्निव ॥ प्रोवाच मुनिशार्दूलास्तदा मेघौघनि
स्वनः ॥ ४१ ॥ ॥ श्रीभगवानुवाच ॥ वत्स जानामि श्रान्तं त्वां त्राणार्थं मामुपस्थितम् ॥ शरीरं विश मे क्षिप्रं विश्रामस्ते मयोदितः ॥ ४२ ॥

ब्रह्मोवाच ॥ श्रुत्वा स वचनं तस्य किंचिन्नोवाच मोहितः ॥ विवेश वदनं तस्य विवृतं चावशो मुनिः ॥ ४३ ॥ इति श्रीब्रह्मपुराणे स्वयंभ्वृषिसंवादे मार्कण्डेयप्रलयदर्शनं नाम पञ्चाशत्तमोऽध्यायः ॥ ५० ॥ ॥ ब्रह्मोवाच ॥ स प्रविश्योदरे तस्य बालस्य मुनिसत्तमः ॥ ददर्श पृथिवीं कृत्स्नां नानाजनपदैर्वृताम् ॥ १ ॥ लवणेक्षुसुरासर्पिर्दधिदुग्धजलोदधीन् ॥ ददर्श तान्समुद्रांश्च जम्बु प्लक्षं च शाल्मलम् ॥ २ ॥ कुशं क्रौञ्चं च शाकं च पुष्करं च ददर्श सः ॥ भारतादीनि वर्षाणि तथा सर्वांश्च पर्वतान् ॥ ३ ॥ मेरुं च सर्वरत्नौघमपश्यत्कनकाचलम् ॥ नानारत्नान्वितैः शृङ्गैर्भूषितं बहुकन्दरम् ॥ ४ ॥ अन्त्यजानन्त्यजातींश्च सोऽपश्यत्तस्य चोदरे ॥ मृगाञ्छाखामृगान्सिंहान्वराहान्सृमराञ्छशान् ॥ गजांश्चान्यांस्तथा सत्त्वान्सोऽपश्यत्तस्य चोदरे ॥ ५ ॥ पृथिव्यां यानि तीर्थानि ग्रामाश्च नगराणि च ॥ कृषिगोरक्षवाणिज्यं क्रयविक्रयणं तथा ॥ ६ ॥ शक्रादीन्विबुधाञ्छ्रेष्ठांस्तथाऽन्यांश्च दिवौकसः ॥ गन्धर्वाप्सरसो यक्षानृषींश्चैव सनातनान् ॥ ७ ॥ दैत्यदानवसर्पांश्च नागांश्च मुनिसत्तमाः ॥ सिंहिकातनयांश्चैव ये चान्ये सुरशत्रवः ॥ ८ ॥ यत्किंचित्तेन लोकेऽस्मिन्दृष्टपूर्वं चराचरम् ॥ अपश्यत्स तदा सर्वं तस्य कुक्षौ द्विजोत्तमाः ॥ ९ ॥ अथ वा किं बहूक्तेन कीर्तितेन पुनः पुनः ॥ ब्रह्मादिस्तम्बपर्यन्तं यत्किंचित्सचराचरम् ॥ १० ॥ भूर्लोकं च भुवर्लोकं स्वर्लोकं च द्विजोत्तमाः ॥ महर्जनस्तपः सत्यमतलं वितलं तथा ॥ ११ ॥ पातालं भूतलं चैव वितलं च रसातलम् ॥ महातलं च ब्रह्माण्डमपश्यत्तस्य चोदरे ॥ १२ ॥ अव्याहता गतिस्तस्य तदाऽभूद्द्विजसत्तमाः ॥ प्रसादात्तस्य देवस्य स्मृतिलोपश्च नाभवत् ॥ १३ ॥ भ्रममाणस्तदा कुक्षौ कृत्स्नं जगदिदं द्विजाः ॥ नान्तं जगाम देहस्य तस्य विष्णोः कदाचन ॥ १४ ॥ यदाऽसौ नाऽऽगतश्चान्तं तस्य देहस्य भो द्विजाः ॥ तदा तं वरदं देवं शरणं गतवान्मुनिः ॥ १५ ॥ ततोऽसौ सहसा विप्रा वायुवेगेन निःसृतः ॥ महात्मनो मुखात्तस्य विवृतात्पुरुषस्य सः ॥ १६ ॥ इति श्रीब्रह्मपुराणे स्वयंभ्वृषिसंवादे मार्कण्डेयस्य भगवत्कुक्षिपरिवर्तनं नामैकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥ ॥ ब्रह्मोवाच ॥ स निष्क्रम्योदरा

---

१ अयमत्राधिको ग्रन्थः—नानामुनिजनाकीर्णं नानावृक्षवनाकुलम् ॥ नानासत्त्वसमायुक्तं नानाश्चर्यसमन्वितम् ॥ व्याघ्रैः सिंहैर्वराहैश्च चामरैर्महिषैर्गजैः ॥ मृगैः शाखामृगैश्चान्यैर्भूषितं सुमनोहरम् ॥ शक्राद्यैर्विविधैर्देवैः सिद्धचारणपन्नगैः ॥ मुनियक्षाप्सरोभिश्च वृतैश्चान्यैः सुरालयैः ॥ ब्रह्मोवाच ॥ एवं सुमेरुं श्रीमन्तमपश्यन्मुनिसत्तमः ॥ पर्यटन्स तदा विप्रस्तस्य बालस्य चोदरे ॥ हिमवन्तं हेमकूटं निषधं गन्धमादनम् ॥ श्वेतं च दुर्धरं नीलं कैलासं मन्दरं गिरिम् ॥ महेन्द्रं मलयं विन्ध्यं पारियात्रं तथाऽर्बुदम् ॥ सह्यं च शुक्तिमन्तं च मैनाकं वक्रपर्वतम् ॥ एते चान्ये च बहवो यावन्तः पृथिवीधराः ॥ ततस्तांस्तु मुनिश्रेष्ठः सोऽपश्यद्रत्नभूषितान् ॥ कुरुक्षेत्रं च पाञ्चालान्मत्स्यान्मद्रान्सकेकयान् ॥ बाह्लीकाञ्शूरसेनांश्च काश्मीरांस्तङ्गणान्खशान् ॥ पार्वतीयान्किरातांश्च कर्णप्रावरणान्मरून् ॥







तस्य बालस्य मुनिसत्तमाः ॥ पुनश्चैकार्णवामुर्वीमपश्यज्जनवर्जिताम् ॥ १ ॥ पूर्वदृष्टं च तं देवं ददर्श शिशुरूपिणम् ॥ शाखायां वटवृक्षस्य पर्यङ्कोपरि संस्थितम् ॥ २ ॥ श्रीवत्सवक्षसं देवं पीतवस्त्रं चतुर्भुजम् ॥ जगदादाय तिष्ठन्तं पद्मपत्रायतेक्षणम् ॥ ३ ॥ सोऽपि तं मुनिमायान्तं प्लवमानमचेतनम् ॥ दृष्ट्वा मुखाद्विनिष्क्रान्तं प्रोवाच प्रहसन्निव ॥ ४ ॥ श्रीभगवानुवाच ॥ कच्चित्त्वयोषितं वत्स विश्रान्तं च ममोदरे ॥ भ्रममाणश्च किं तत्र आश्चर्यं दृष्टवानसि ॥ ५ ॥ भक्तोऽसि मे मुनिश्रेष्ठ श्रान्तोऽसि च ममाऽऽश्रितः ॥ तेन त्वामुपकाराय संभाषे पश्य मामिह ॥ ६ ॥ ब्रह्मोवाच ॥ श्रुत्वा स वचनं तस्य संप्रहृष्टतनूरुहः ॥ ददर्श तं सुदुष्प्रेक्षं रत्नैर्दिव्यैरलंकृतम् ॥ ७ ॥ प्रसन्ना निर्मला दृष्टिर्मुहूर्तात्तस्य भो द्विजाः ॥ प्रसादात्तस्य देवस्य प्रादुर्भूता पुनर्नवा ॥ ८ ॥ रक्ताङ्गुलितलौ पादौ ततस्तस्य सुरार्चितौ ॥ प्रणम्य शिरसा विप्रा हर्षगद्गदया गिरा ॥ ९ ॥ कृताञ्जलिस्तदा हृष्टो विस्मितश्च पुनः पुनः ॥ दृष्ट्वा तं परमात्मानं संस्तोतुमुपचक्रमे ॥ १० ॥ मार्कण्डेय उवाच ॥ देवदेव जगन्नाथ मायाबालवपुर्धर ॥ त्राहि मां चारुपद्माक्ष दुःखितं शरणागतम् ॥ ११ ॥ संतप्तोऽस्मि सुरश्रेष्ठ संवर्ताख्येनव ह्निना ॥ अङ्गारवर्षभीतं च त्राहि मां पुरुषोत्तम ॥ १२ ॥ शोषितश्च प्रचण्डेन वायुना जगदायुना ॥ विह्वलोऽहं तथा श्रान्तस्त्राहि मां पुरुषोत्तम ॥ १३ ॥ तापितश्च तथादित्यैः प्रलयावर्तकादिभिः ॥ न शान्तिमधिगच्छामि त्राहि मां पुरुषोत्तम ॥ १४ ॥ तृषितश्च क्षुधाऽऽविष्टो दुःखितश्च जगत्पते ॥ त्रातारं नात्र पश्यामि त्राहि मां पुरुषोत्तम ॥ १५ ॥ अस्मिन्नेकार्णवे घोरे विनष्टे सचराचरे ॥ न चान्तमधिगच्छामि त्राहि मां पुरुषोत्तम ॥ १६ ॥ तवोदरे च देवेश मया दृष्टं चराचरम् ॥ विस्मितोऽहं विषण्णश्च त्राहि मां पुरुषोत्तम ॥ १७ ॥ संसारेऽस्मिन्निरालम्बे प्रसीद पुरुषोत्तम ॥ प्रसीद विबुधश्रेष्ठ प्रसीद विबुधप्रिय ॥ १८ ॥ प्रसीद विबुधां नाथ प्रसीद विबुधाश्रय ॥ प्रसीद सर्वलोकेश जगत्कारणकारण ॥ १९ ॥ प्रसीद सर्वदेवेश प्रसीद मम भूधर ॥ प्रसीद सलिलावास प्रसीद मधुसूदन ॥ २० ॥ प्रसीद कमलाकान्त प्रसीद त्रिदशेश्वर ॥ प्रसीद कंसकेशिघ्न प्रसीदारिष्टनाशन ॥ २१ ॥ प्रसीद कृष्ण दैत्यघ्न प्रसीद दनुजान्तक ॥ प्रसीद मथुरावास प्रसीद यदुनन्दन ॥ २२ ॥ प्रसीद शक्रावरज प्रसीद वरदाव्यय ॥ त्वं मही त्वं जलं देव त्वमग्निस्त्वं समीरणः ॥ २३ ॥ त्वं नभस्त्वं मनश्चैव त्वमहंकार एव च ॥ त्वं बुद्धिः प्रकृतिश्चैव सत्त्वाद्यास्त्वं जगत्पते ॥ २४ ॥ पुरुषस्त्वं जगद्बीजं पुरुषादपि चोत्तमः ॥ त्वमिन्द्रियाणि सर्वाणि शब्दाद्या विषयाः प्रभो ॥ २५ ॥ त्वं दिक्पालाश्च धर्माश्च वेदा यज्ञाः सदक्षिणाः ॥ त्वमिन्द्रस्त्वं शिवो देवस्त्वं हविस्त्वं हुताशनः ॥ २६ ॥ त्वं यमः पितृराट् देव त्वं रक्षोधिपतिः स्वयम् ॥ वरुणस्त्वमपां नाथस्त्वं वायुस्त्वं धनेश्वरः ॥ २७ ॥ त्वमीशानस्त्वमनन्तस्त्वं गणेशश्च षण्मुखः ॥

वसवस्त्वं तथा रुद्रास्त्वमादित्याश्च खेचराः ॥ २८ ॥ दानवास्त्वं तथा यक्षास्त्वं दैत्याः समरुद्गणाः ॥ सिद्धाश्चाप्सरसो नागा गन्धर्वास्त्वं सचारणाः ॥२९॥ पितरो वालखिल्याश्च प्रजानां पतयोऽच्युत ॥ मुनयस्त्वमृषिगणास्त्वमश्विनौ निशाचराः ॥ ३० ॥ अन्याश्च जातयस्त्वं हि यत्किंचिज्जीवसंज्ञितम् ॥ किंचात्र बहुनोक्तेन ब्रह्मादिस्तम्बगोचरम् ॥३१॥ भूतं भव्यं भविष्यं च त्वं जगत्सचराचरम् ॥ यत्ते रूपं परं देव कूटस्थमचलं ध्रुवम् ॥ ३२ ॥ ब्रह्माद्यास्तन्न जानन्ति कथमन्येऽल्पमेधसः ॥ देव शुद्धस्वभावोऽसि नित्यस्त्वं प्रकृतेः परः ॥ ३३ ॥ अव्यक्तः शाश्वतोऽनन्तः सर्वव्यापी महेश्वरः ॥ त्वमाकाशः परः शान्तो अजस्त्वं विभुरव्ययः ॥ ३४ ॥ एवं त्वां निर्गुणं स्तोतुं कः शक्नोति निरञ्जनम् ॥ स्तुतोऽसि यन्मया देव विकलेनाल्पचेतसा ॥ तत्सर्वं देवदेवेश क्षन्तुमर्हसि चाव्यय ॥३५॥ इति श्रीब्रह्मपुराणे स्वयंभुऋषिसंवादे भगवत्स्तवनिरूपणं नाम द्विपञ्चाशत्तमोऽध्यायः॥५२॥ ब्रह्मोवाच॥इत्थं स्तुतस्तदा तेन मार्कण्डेयेन भो द्विजाः॥ प्रीतः प्रोवाच भगवान्मेघगम्भीरया गिरा ॥१॥ श्रीभगवानुवाच॥ब्रूहि कामं मुनिश्रेष्ठ यत्ते मनसि वर्तते॥ददामि सर्वं विप्रर्षे मत्तो यदभिवाञ्छसि ॥२॥ ब्रह्मोवाच॥श्रुत्वा स वचनं विप्राः शिशोस्तस्य महात्मनः॥ उवाच परमप्रीतो मुनिस्तद्गतमानसः ॥ ३ ॥ ॥ मार्कण्डेय उवाच ॥ ज्ञातुमिच्छामि देव त्वां मायां वै तव मोक्षद ॥ त्वत्प्रसादाच्च देवेश स्मृतिर्न परिहीयते॥४॥ द्रुतमन्तः शरीरेण सततं परिवर्तितम् ॥ इच्छामि पुण्डरीकाक्ष ज्ञातुं त्वामहमव्ययम् ॥ ५ ॥ इह भूत्वा शिशुः साक्षात्किं भवानवतिष्ठते ॥ पीत्वा

---

१. अयमत्राधिको ग्रन्थः—आस्येन ते प्रविष्टोऽहं शरीरं भगवंस्तव ॥ दृष्टवान् भगवँल्लोकान् समस्तान् जठरे हि ते ॥ तव देव शरीरस्था देवदानवराक्षसाः ॥ यक्षगन्धर्वनागाश्च जगत्स्थावरजङ्गमम् ॥ नानामुनिजनाकीर्णं नानाधातुविभूषितम् ॥ नानाद्रुमलताकीर्णं नानाप्रस्रवणाकुलम् ॥ नानासत्वसमाकीर्णं नानाश्चर्यसमन्वितम् ॥ व्याघ्रैः सिंहैर्वराहैश्च चमरैर्महिषैर्गजैः ॥ मृगैः शाखामृगैश्चान्यैर्भूषितन्तु मनोहरम् ॥ शक्राद्यैर्विविधैर्देवैः सिद्धचारणपन्नगैः ॥ मुनियक्षाप्सरोभिश्च वृतं चान्यैः सुरालयैः ॥ एवं सुमेरुसीमान्तं ततोऽहं मुनिसत्तमः ॥ पर्यटंस्तु तदा विभस्तव बालस्य चोदरे ॥ हिमवन्तं हेमकूटं निषधं गन्धमादनम् ॥ श्वेतश्च कद्रुनीलं च कैलासं दुर्दरं गिरिम् ॥ महेन्द्रं मलयं विन्ध्यं पारियात्रं तथार्बुदम् ॥ सह्यं च शुक्तिमन्तश्च मैनाकं चक्रपर्वतम् ॥ एवं चान्ये च बहवो यावन्तः पृथिवीधराः ॥ तांस्तु देव मुनिश्रेष्ठः सोपश्यंरन्तभूषितान् ॥ कुरुक्षेत्रं च पांचाल्यं मत्स्यमद्रान्सकेकयान् ॥ बाह्लीकाञ्छूरसेनांश्च काश्मीरान्सगणांश्च तान् ॥ पर्वतीयात् किरातांश्च कर्णप्रावरणान् वरान् ॥ एकपादान् द्विपादांश्च त्रिपादान् बहुनेत्रकान् ॥ ऐन्द्रप्राग्ज्योतिषांश्चैव काम्बोजांस्ताम्रलिप्तकान् ॥ अङ्गान्वङ्गान्ससुह्मांश्च कलापांश्चोत्कलान्द्विजः ॥ महोरगान् कलिंगांश्च कोकणानर्बुदानि च ॥ मालवान् द्राविडांश्चापि सौराष्ट्रान्यवनांस्तथा ॥ एतांश्चान्यांश्च देशांश्च पर्यटन् मुनिसत्तमः ॥ अपश्यं ते मुनिश्रेष्ठस्तव कुक्षौ महात्मनः ॥ प्रयागं च कुरुक्षेत्रं पुष्करं नैमिषं गयाम् ॥ गंगाद्वारं च कुब्जाम्रं बदरीं सिन्धुसागरम् ॥ कोकामुखं शुद्धतीर्थं ब्रह्मावर्त्तं कुशस्थलीम् ॥ लोहजंघं त्वश्वतीर्थं सर्व्वपापप्रमोचनम् ॥ कर्दमालं चाग्नितीर्थं तथा चामरकंटकम् ॥ कोकार्गलं जम्बुमार्गं भोगतीर्थं पृथूदकम् ॥ तत्पलावर्त्तकं तीर्थं तथा श्रीपुरुषोत्तमम् ॥ एका–





जगदिदं सर्वमेतदाख्यातुमर्हसि ॥ ६ ॥ ( किमर्थं च जगत्सर्वं शरीरस्थं तवाऽनघ ॥ कियन्तं च त्वया कालमिह स्थेयमरिंदम ) ॥ ज्ञातुमिच्छामि देवेश ब्रूहि सर्वमशेषतः ॥ ७ ॥ त्वत्तः कमलपत्राक्ष विस्तरेण यथातथम् ॥ महदेतदचिन्त्यं च यदहं दृष्टवान्प्रभो ॥ ८ ॥ ब्रह्मोवाच ॥ इत्युक्तः स तदा तेन देवदेवो महाद्युतिः ॥ सान्त्वयन्स तदा वाक्यमुवाच वदतां वरः ॥ ९ ॥ ॥ श्रीभगवानुवाच ॥ कामं देवाश्च मां विप्र नहि जानन्ति तत्त्वतः ॥ तव प्रीत्या प्रवक्ष्यामि यथेदं विसृजाम्यहम् ॥ १० ॥ पितृभक्तोऽसि विप्रर्षे मामेव शरणं गतः ॥ ततो दृष्टोऽस्मि ते साक्षाद्ब्रह्मचर्यं च ते महत् ॥ ११ ॥ आपो नारा इति पुरा संज्ञाकर्म कृतं मया ॥ तेन नारायणोऽस्म्युक्तो मम तास्त्वयनं सदा ॥ १२ ॥ अहं नारायणो नाम प्रभवः शाश्वतोऽव्ययः ॥ विधाता सर्वभूतानां संहर्ता च द्विजोत्तम ॥ १३ ॥ अहं विष्णुरहं ब्रह्मा शक्रश्चापि द्विजोत्तम ॥ अहं वैश्रवणो राजा यमः प्रेताधिपस्तथा ॥ १४ ॥ अहं शिवश्च सोमश्च कश्यपश्च प्रजापतिः ॥ अहं धाता विधाता च यज्ञश्चाहं द्विजोत्तम ॥ ॥ १५ ॥ अग्निरास्यं क्षितिः पादौ चन्द्रादित्यौ च लोचने ॥ द्यौर्मूर्धा खं दिशः श्रोत्रे तथाऽऽपः स्वेदसंभवाः ॥ १६ ॥ सदिशं च नभः कायो वायुर्मनसि मे स्थितः ॥ मया क्रतुशतैरिष्टं बहुभिश्चाऽऽप्तदक्षिणैः ॥ १७ ॥ यजन्ते वेदविदुषो मां देवयजने स्थितम् ॥ पृथिव्यां क्षत्रियेन्द्राश्च पार्थिवाः स्वर्गकाङ्क्षिणः ॥ १८ ॥ यजन्ते मां तथा वैश्याः स्वर्गलोकजिगीषवः ॥ चतुःसमुद्रपर्यन्तां मेरुमन्दरभूषणाम् ॥ ॥ १९ ॥ शेषो भूत्वाऽहमेको हि धारयामि वसुंधराम् ॥ वाराहं रूपमास्थाय ममेयं जगती पुरा ॥ २० ॥ मज्जमाना जले विप्र वीर्येणासीत्समुद्धृता ॥ अग्निश्च वाडवो विप्र भूत्वाऽहं द्विजसत्तम ॥ २१ ॥ पिबाम्यपः समाविष्टस्ताश्चैव विसृजाम्यहम् ॥ ब्रह्म वक्त्रं भुजौ क्षत्रमूरू मे संश्रिता विशः ॥ २२ ॥ पादौ शूद्रा भवन्तीमे विक्रमेण क्रमेण च ॥ ऋग्वेदः सामवेदश्च यजुर्वेदस्त्वथर्वणः ॥ २३ ॥ मत्तः प्रादुर्भवन्त्येते मामेव प्रविशन्ति

---

—मुखं च केदारं काशीं च विरजं द्विजः ॥ कालंजरं च गोकर्णं श्रीशैलं गन्धमादनम् ॥ एतान्यन्यानि तीर्थानि क्षेत्राण्यायतनानि च ॥ अपश्यमुदरे देव बालस्य मुनिसत्तमः ॥ गंगां शतद्रूं च तथा यमुनामथ कौशिकीम् ॥ चर्मण्वतीं वेत्रवतीं चन्द्रभागां सरस्वतीम् ॥ विपाशां च वितस्तां च सिन्धुं गोदावरीं नदीम् ॥ वस्वोकसारां नलिनीं पयोष्णीं नर्मदां द्विजः ॥ अपर्णान्तुङ्गभद्रां च करतोयां महानदीम् ॥ सुवर्णां कृष्णवेणां च शिबिरां च महानदीम् ॥ वैतरणीं चैव कावेरीं शोणश्चैव महानदीम् ॥ भीमरथीं विशालाक्ष शिप्रां वेत्रवतीं नदीम् ॥ एताश्चान्याश्च नद्यश्च पृथिव्यां नै द्विजोत्तमाः ॥ परिभ्रान्तश्च सम्पूर्णं तव कुक्षौ महात्मनः ॥ अपश्यं गगनश्चैव चन्द्रसूर्यविराजितम् ॥ जाज्वल्यमानं तेजोभिः पावकार्कसमप्रभम् ॥ अपश्यं च महीं बाल काननैरुपशोभिताम् ॥ यजन्ते विविधैस्तत्र ब्राह्मणा बहुभिर्मखैः ॥ क्षत्रियाश्च प्रवर्तन्ते सर्ववर्णानुरञ्जनैः ॥ वैश्याः कृषिं यथान्यायं कारयन्ति च नित्यशः ॥ एवमादीनि सर्वाणि दृष्टानि पुरुषोत्तम ॥

च ॥ यतयः शान्तिपरमा यवात्मानो बुभुत्सवः ॥ २४ ॥ कामक्रोधद्वेषमुक्ता निःसङ्गा वीतकल्मषाः ॥ सत्त्वस्था निरहंकारा नित्यमध्यात्मको विदाः ॥ २५ ॥ मामेव सततं विप्राश्चिन्तयन्त उपासते ॥ अहं संवर्तको ज्योतिरहं संवर्तकोऽनलः ॥ २६ ॥ अहं संवर्तकः सूर्यस्त्वहं संवर्तकोऽनिलः ॥ तारारूपाणि दृश्यन्ते यान्येतानि नभस्तले ॥ २७ ॥ मम वै रोमकूपाणि विद्धि त्वं द्विजसत्तम ॥ रत्नाकराः समुद्राश्च सर्व एव चतुर्दिशः ॥ २८ ॥ वसनं शयनं चैव निलयं चैव विद्धि मे ॥ कामः क्रोधश्च हर्षश्च भयं मोहस्तथैव च ॥ २९ ॥ ममैव विद्धि रूपाणि सर्वाण्येतानि सत्तम ॥ प्राप्नुवन्ति नरा विप्र यत्कृत्वा कर्म शोभनम् ॥ ३० ॥ सत्यं दानं तपश्चोग्रमहिंसां सर्वजन्तुषु ॥ मद्विधानेन विहिता मम देहविचारिणः ॥ ३१ ॥ मयाऽभिभूतविज्ञानाश्चेष्टयन्ति न कामतः[1] ॥ सम्यग्वेदमधीयाना यजन्तो विविधैर्मखैः ॥ ३२ ॥ यतात्मानो जितक्रोधाः प्राप्नुवन्ति द्विजातयः ॥ प्राप्तुं शक्यो न चैवाहं नरैर्दुष्कृतकर्मभिः ॥ ३३ ॥ लोभाभिभूतैः कृपणैरनार्यैरकृतात्मभिः ॥ एतन्महाफलं विद्धि नराणां भावितात्मनाम् ॥ ॥ ३४ ॥ सुदुष्प्रापं विमूढानां मायायोगनिषेविणाम् ॥ यदा यदा हि धर्मस्य ग्लानिर्भवति सत्तम ॥ ३५ ॥ अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम् ॥ दैत्या हिंसानुरक्ताश्च अवध्याः सुरसत्तमैः ॥ ३६ ॥ राक्षसाश्चापि लोकेऽस्मिन्यदोत्पत्स्यन्ति दारुणाः ॥ तदाऽहं संप्रसूयामि गृहेषु पुण्यकर्मणाम् ॥ ३७ ॥ प्रविष्टो मानुषं देहं सर्वं प्रशमयाम्यहम् ॥ सृष्ट्वा देवमनुष्यांश्च गन्धर्वोरगराक्षसान् ॥ ३८ ॥ स्थावराणि च भूतानि संहराम्यात्ममायया ॥ कर्मकाले पुनर्देहमनुचिन्त्य सृजाम्यहम् ॥ ३९ ॥ एवं प्रणिहितः सम्यङ्ममाऽऽत्मा मुनिसत्तम ॥ सर्वभूतेषु विप्रेन्द्र न च मां वेत्ति कश्चन ॥ ४० ॥ सर्वलोके च मां भक्ताः पूजयन्ति च सर्वशः ॥ यच्च किंचित्त्वया प्राप्तं मयि क्लेशात्मकं द्विज ॥ ४१ ॥ सुखोदयाय तत्सर्वं श्रेयसे च तवानघ ॥ यच्च किंचित्त्वया लोके दृष्टं स्थावरजङ्गमम् ॥ ४२ ॥ विहितः सर्व मेवासौ ममाऽऽत्मा भूतभावनः ॥ अहं नारायणो नाम शंखचक्रगदाधरः ॥ ४३ ॥ यावद्युगानां विप्रर्षे सहस्रं परिवर्तते ॥ तावत्स्व

---

१ इदमत्राधिकम्—आविश्य मानुषं देहं मर्यादाबन्धकारणात् ॥ श्वेतः कृतयुगे धर्मः श्यामस्त्रेतायुगे मम ॥ रक्तो द्वापरमासाद्य कृष्णः कलियुगे तथा ॥ त्रयो भागा ह्यधर्मस्य तस्मिन्काले भवन्ति च ॥ अन्तकाले च संप्राप्ते कालो भूत्वाऽतिदारुणः ॥ त्रैलोक्यं नाशयाम्येकः सर्वं स्थावरजङ्गमम् ॥ अहं त्रिधर्मा विश्वात्मा सर्वलोकसुखावहः ॥ आभिन्नः सर्वगोऽनन्त हृषीकेश उरुक्रमः ॥ कालचक्रं नयाम्येको ब्रह्मरूपं ममैव तत् ॥ शमनं सर्वभूतानां सर्वभूतकृतोद्यमम् ॥





पिमि विश्वात्मा सर्वविश्वानि मोहयन् ॥ ४४ ॥ एवं सर्वमहं कालमिहाऽऽसे मुनिसत्तम ॥ अशिशुः शिशुरूपेण यावद्ब्रह्मा न बुध्यते ॥ ४५ ॥ मया च दत्तो विप्रेन्द्र वरस्ते ब्रह्मरूपिणा ॥ असकृत्परितुष्टेन विप्रर्षिगणपूजित ॥ ४६ ॥ सर्वमेकार्णवं कृत्वा नष्टे स्थावरजङ्गमे ॥ निर्गतोऽसि मयाऽऽज्ञातस्ततस्ते दर्शितं जगत् ॥ ४७ ॥ अभ्यन्तरं शरीरस्य प्रविष्टोऽसि यदा मम ॥ दृष्ट्वा लोकं समस्तं हि विस्मितो नावबुध्यसे ॥ ४८ ॥ ततोऽसि वक्त्राद्विप्रर्षे द्रुतं निःसारितो मया ॥ आख्यातस्ते मया चाऽऽत्मा दुर्ज्ञेयो हि सुरासुरैः ॥४९॥ यावत्स भगवान्ब्रह्मा न बुध्येत महातपाः ॥ तावत्त्वमिह विप्रर्षे विश्रब्धश्चर वै सुखम् ॥ ५० ॥ ततो विबुद्धे तस्मिंस्तु सर्वलोकपितामहे ॥ एको भूतानि स्रक्ष्यामि शरीराणि द्विजोत्तम ॥ ५१ ॥ आकाशं पृथिवीं ज्योतिर्वायुः सलिलमेव च ॥ लोके यच्च भवेत्किंचिदिह स्थावरजङ्गमम् ॥ ५२ ॥ ॥ ब्रह्मोवाच ॥ एवमुक्त्वा तदा विप्राः पुनस्तं प्राह माधवः ॥ पूर्णे युगसहस्रे तु मेघगम्भीरनिःस्वनः ॥ ५३ ॥ ॥ श्रीभगवानुवाच ॥ मुने ब्रूहि यदर्थं मां स्तुतवान्परमार्थतः ॥ वरं वृणीष्व यच्छ्रेष्ठं ददामि न चिरादहम् ॥ ५४ ॥ आयुष्मानसि देवानां मद्भक्तोऽसि दृढव्रतः ॥ तेन त्वमसि विप्रेन्द्र पुनर्दीर्घायुरामुहि ॥ ॥ ५५ ॥ ब्रह्मोवाच ॥ श्रुत्वा वाणीं शुभां तस्य विलोक्य स तदा पुनः ॥ मूर्ध्ना निपत्य सहसा प्रणम्य पुनरब्रवीत् ॥ ५६ ॥ ॥ मार्कण्डेय उवाच ॥ दृष्टं यदद्य देवेश तव रूपं द्विजोत्तम ॥ मोहोऽयं विगतः सत्यं त्वयि दृष्टे तु मे हरे ॥ ५७ ॥ एवमेव जगन्नाथ इच्छेयं त्वत्प्रसादतः ॥ लोकानां च हितार्थाय नानाभावप्रशान्तये ॥ ५८ ॥ शैवभागवतानां च वादार्थप्रतिषेधकम् ॥ अस्मिन्क्षेत्रवरे पुण्ये निर्मले पुरुषोत्तमे ॥ ५९ ॥ शिवस्याऽयतनं देव करोमि परमं महत् ॥ प्रतिष्ठेय तथा तत्र तव स्थाने च शङ्करम् ॥ ६० ॥ ततो ज्ञास्यन्ति लोकेऽस्मिन्नेकमूर्ती हरीश्वरौ ॥ प्रत्युवाच जगन्नाथः स पुनस्तं महामुनिम् ॥ ६१ ॥ ॥ श्रीभगवानुवाच ॥ यदेतत्परमं देवं कारणं भुवनेश्वरम् ॥ लिङ्गमाराधनार्थाय नानाभावप्रशान्तये ॥ ॥ ६२ ॥ ममाऽऽदेशेन विप्रेन्द्र कुरु शीघ्रं शिवालयम् ॥ तत्प्रभावाच्छिवे लोके तिष्ठ त्वं च तथाऽक्षयम् ॥ ६३ ॥ शिवे संस्थापिते विप्र मम संस्थापनं भवेत् ॥ नाऽऽवयोरन्तरं किंचिदेकभावौ द्विधाकृतौ ॥ ६४ ॥ यो रुद्रः स स्वयं विष्णुर्यो विष्णुः स महेश्वरः ॥ उभयोरन्तरं नास्ति पवनाकाशयोरिव ॥ ६५ ॥ बालास्तु नाभिजानंति य एव गरुडध्वजः ॥ वृषध्वजः स एवेति त्रिपुरघ्नं त्रिलोचनम् ॥ ६६ ॥ तव नामाङ्कितं तस्मात्कुरु विप्र शिवालयम् ॥ उत्तरे देवदेवस्य कुरु तीर्थं सुशोभनम् ॥ ६७ ॥ मार्कण्डेयह्रदो नाम नरलोकेषु विश्रुतः ॥ भविष्यति द्विजश्रेष्ठ सर्वपापप्रणाशनः ॥ ६८ ॥ ॥ ब्रह्मोवाच ॥ इत्युक्त्वा स तदा देवस्तत्रैवान्तरधीयत ॥ मार्कण्डेयं मुनिश्रेष्ठाः सर्वव्यापी जनार्दनः ॥ ६९ ॥ इति श्रीब्रह्मपु

राणे स्वयंभ्वृषिसंवादे मार्कण्डेयस्य श्रीभगवद्दर्शनं नाम त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥ ॥ ब्रह्मोवाच ॥ अतः परं प्रवक्ष्यामि पञ्चतीर्थविधिं
द्विजाः ॥ यत्फलं स्नानदानेन देवताप्रेक्षणेन च ॥ १ ॥ मार्कण्डेयह्रदं गत्वा नरश्चोदङ्मुखः शुचिः ॥ निमज्जेत्तत्र वारांस्त्रीनिमं मन्त्रमुदीरयेत् ॥ २ ॥
संसारसागरे मग्नं पापग्रस्तमचेतनम् ॥ त्राहि मां भगनेत्रघ्न त्रिपुरारे नमोऽस्तु ते ॥ ३ ॥ नमः शिवाय शान्ताय सर्वपापहराय च ॥ स्नानं करोमि
देवेश मम नश्यतु पातकम् ॥ ४ ॥ नाभिमात्रे जले स्नात्वा विधिवद्देवता ऋषीन् ॥ तिलोदकेन मतिमान्पितॄंश्चान्यांश्च तर्पयेत् ॥ ५ ॥ स्नात्वा
तथैव चाऽऽचम्य ततो गच्छेच्छिवालयम् ॥ प्रविश्य देवतागारं कृत्वा तं त्रिः प्रदक्षिणम् ॥ ६ ॥ मूलमन्त्रेण संपूज्य मार्कण्डेयस्य चेश्वरम् ॥ अघो
रेण च भो विप्राः प्रणिपत्य प्रसादयेत् ॥ ७ ॥ त्रिलोचन नमस्तेऽस्तु नमस्ते शशिभूषण ॥ त्राहि मां त्वं विरूपाक्ष महादेव नमोऽस्तु ते ॥ ८ ॥
मार्कण्डेयह्रदे त्वेवं स्नात्वा दृष्ट्वा च शंकरम् ॥ दशानामश्वमेधानां फलं प्राप्नोति मानवः ॥ ९ ॥ पापैः सर्वैर्विनिर्मुक्तः शिवलोकं स गच्छति ॥ तत्र
भुक्त्वा वरान्भोगान्यावदाभूतसंप्लवम् ॥ १० ॥ इहलोकं समासाद्य भवेद्विप्रो बहुश्रुतः ॥ शांकरं योगमासाद्य ततो मोक्षमवाप्नुयात् ॥ ११ ॥
कल्पवृक्षं ततो गत्वा कृत्वा तं त्रिः प्रदक्षिणम् ॥ पूजयेत्परया भक्त्या मन्त्रेणानेन तं वटम् ॥१२॥ ॐ नमोऽव्यक्तरूपाय महाप्रलयकारिणे ॥ महद्र
सोपविष्टाय न्यग्रोधाय नमोऽस्तु ते ॥ १३ ॥ अमरस्त्वं सदा कल्पे हरेश्चाऽऽयतनं वट ॥ न्यग्रोध हर मे पापं कल्पवृक्ष नमोऽस्तु ते ॥
॥ १४ ॥ भक्त्या प्रदक्षिणं कृत्वा नत्वा कल्पवटं नरः ॥ सहसा मुच्यते पापाज्जीर्णत्वच इवोरगः ॥ १५ ॥ छायां तस्य समाक्रम्य कल्पवृक्षस्य
भो द्विजाः ॥ ब्रह्महत्यां नरो जह्यात्पापेष्वन्येषु का कथा ॥ १६ ॥ दृष्ट्वा कृष्णाङ्गसंभूतं ब्रह्मतेजोमयं परम् ॥ न्यग्रोधाकृतिकं विष्णुं प्रणिपत्य च
भो द्विजाः ॥ १७ ॥ राजसूयाश्वमेधाभ्यां फलं प्राप्नोति चाधिकम् ॥ तथा स्ववंशमुद्धृत्य विष्णुलोकं स गच्छति ॥ १८ ॥ वैनतेयं नमस्कृत्य
कृष्णस्य पुरतः स्थितम् ॥ सर्वपापविनिर्मुक्तस्ततो विष्णुपुरं व्रजेत् ॥ १९ ॥ दृष्ट्वा वटं वैनतेयं यः पश्येत्पुरुषोत्तमम् ॥ संकर्षणं सुभद्रां च स
याति परमां गतिम् ॥ २० ॥ प्रविश्याऽऽयतनं विष्णोः कृत्वा तं त्रिः प्रदक्षिणम् ॥ संकर्षणं स्वमन्त्रेण भद्रां पूज्य प्रसादयेत् ॥ २१ ॥ नमस्ते हल
धृग्राम नमस्ते मुशलायुध ॥ नमस्ते रेवतीकान्त नमस्ते भक्तवत्सल ॥ २२ ॥ नमस्ते बलिनां श्रेष्ठ नमस्ते धरणीधर ॥ प्रलम्बारे नमस्तेऽस्तु
त्राहि मां कृष्णपूर्वज ॥ २३ ॥ एवं प्रसाद्य तं देवमजेयं त्रिदशार्चितम् ॥ कैलासशिखराकारं चन्द्रात्कान्ततराननम् ॥ २४ ॥ नीलवस्त्रधरं देवं
फणाविकटमस्तकम् ॥ महाबलं हलधरं कुण्डलैकविभूषितम् ॥ २५ ॥ रौहिणेयं नरो भक्त्या लभेदभिमतं फलम् ॥ सर्वपापैर्विनिर्मुक्तो विष्णुलो





कं स गच्छति ॥ २६ ॥ आभूतसंप्लवं यावद्भुक्त्वा तत्र सुखं नरः ॥ पुण्यक्षयादिहाऽऽयातः प्रवरे योगिनां कुले ॥ २७ ॥ ब्राह्मणप्रवरो भूत्वा सर्वशास्त्रार्थपारगः ॥ ज्ञानं तत्र समासाद्य मुक्तिं प्राप्नोति दुर्लभाम् ॥ २८ ॥ एवमभ्यर्च्य हलिनं ततः कृष्णं विचक्षणः ॥ द्वादशाक्षरमन्त्रेण पूजयेत्सुसमाहितः ॥ २९ ॥ द्विषट्कवर्णमन्त्रेण भक्त्या ये पुरुषोत्तमम् ॥ पूजयन्ति सदा धीरास्ते मोक्षं प्राप्नुवन्ति वै ॥ ३० ॥ न तां गतिं सुरा यान्ति योगिनो नैव सामगाः ॥ यां गतिं यान्ति भो विप्रा द्वादशाक्षरतत्पराः ॥ ३१ ॥ तस्मात्तेनैव मन्त्रेण भक्त्या कृष्णं जगद्गुरुम् ॥ संपूज्य गन्धपुष्पाद्यैः प्रणिपत्य प्रसादयेत् ॥ ३२ ॥ जय कृष्ण जगन्नाथ जय सर्वाघनाशन ॥ जय चाणूरकेशिघ्न जय कंसनिषूदन ॥ ३३ ॥ जय पद्मपलाशाक्ष जय चक्रगदाधर ॥ जय नीलाम्बुदश्याम जय सर्वसुखप्रद ॥ ३४ ॥ जय देव जगत्पूज्य जय संसारनाशन ॥ जय विष्णो लोकपूज्य जय वाञ्छाफलप्रद ॥ ३५ ॥ संसारसागरे घोरे निःसारे दुःखफेनिले ॥ क्रोधग्राहाकुले रौद्रे विषयोदकसंप्लवे ॥ ३६ ॥ नानारोगोर्मिकलिले मोहावर्तसुदुस्तरे ॥ निमग्नोऽहं सुरश्रेष्ठ त्राहि मां पुरुषोत्तम ॥ ३७ ॥ एवं प्रसाद्य देवेशं वरदं भक्तवत्सलम् ॥ सर्वपापहरं देवं सर्वकामफलप्रदम् ॥ ३८ ॥ पीनांसं द्विभुजं कृष्णं पद्मपत्रायतेक्षणम् ॥ महोरस्कं महाबाहुं पीतवस्त्रं शुभाननम् ॥ ३९ ॥ शङ्खचक्रगदापाणिं मुकुटाङ्गदभूषणम् ॥ सर्वलक्षणसंयुक्तं वनमालाविभूषितम् ॥ ४० ॥ दृष्ट्वा नरोऽञ्जलिं कृत्वा दण्डवत्प्रणिपत्य च ॥ अश्वमेधसहस्राणां फलं प्राप्नोति वै द्विजाः ॥ ४१ ॥ यत्फलं सर्वतीर्थेषु स्नाने दाने प्रकीर्तितम् ॥ नरस्तत्फलमाप्नोति दृष्ट्वा कृष्णं प्रणम्य च ॥ ४२ ॥ यत्फलं सर्वरत्नाद्यैरिष्टे बहुसुवर्णके ॥ नरस्तत्फलमाप्नोति दृष्ट्वा कृष्णं प्रणम्य च ॥ ४३ ॥ यत्फलं सर्ववेदेषु सर्वयज्ञेषु कीर्तितम् ॥ तत्फलं समवाप्नोति नरः कृष्णं प्रणम्य च ॥ ४४ ॥ यत्फलं सर्वदानेन व्रतेन नियमेन च ॥ नरस्तत्फलमाप्नोति दृष्ट्वा कृष्णं प्रणम्य च ॥ ४५ ॥ तपोभिर्विविधैरुग्रैर्यत्फलं समुदाहृतम् ॥ नरस्तत्फलमाप्नोति दृष्ट्वा कृष्णं प्रणम्य च ॥ ४६ ॥ यत्फलं ब्रह्मचर्येण सम्यक्चीर्णेन कीर्तितम् ॥ नरस्तत्फलमाप्नोति दृष्ट्वा कृष्णं प्रणम्य च ॥ ४७ ॥ यत्फलं च गृहस्थस्य यथोक्ताचारवर्तिनः ॥ नरस्तत्फलमाप्नोति दृष्ट्वा कृष्णं प्रणम्य च ॥ ४८ ॥ यत्फलं वनवासेन वानप्रस्थस्य कीर्तितम् ॥ नरस्तत्फलमाप्नोति दृष्ट्वा कृष्णं प्रणम्य च ॥ ४९ ॥ संन्यासेन यथोक्तेन यत्फलं समुदाहृतम् ॥ नरस्तत्फलमाप्नोति दृष्ट्वा कृष्णं प्रणम्य च ॥५०॥ किं चात्र बहुनोक्तेन माहात्म्ये तस्य भो द्विजाः ॥ दृष्ट्वा कृष्णं नरो भक्त्या मोक्षं प्राप्नोति दुर्लभम्॥५१॥सर्वपापैर्विनिर्मुक्तः कल्पकोटिसमुद्भवैः ॥ श्रिया परमया युक्तः सर्वैः समुदितो गुणैः ॥ ५२ ॥ सर्वकामसमृद्धेन विमानेन सुवर्चसा ॥ त्रिसप्तकुलमुद्धृत्य नरो विष्णु

पुरं वजेत् ॥ ५३ ॥ तत्र कल्पशतं यावद्भुक्त्वा भोगान्मनोरमान् ॥ गन्धर्वाप्सरसैः सार्धं यथा विष्णुश्चतुर्भुजः ॥ ५४ ॥ च्युतस्तस्मादिहाऽऽयातो विप्राणां प्रवरे कुले ॥ धर्मज्ञः सर्ववेदी च जायते गतमत्सरः ॥ ५५ ॥ स्वधर्मनिरतः शान्तो दांतो भूतहिते रतः ॥ आसाद्य वैष्णवं ज्ञानं ततो मोक्षमवाप्नुयात् ॥ ५६ ॥ ततः संपूज्य मंत्रेण सुभद्रां भक्तवत्सलाम् ॥ प्रसादयेत्ततो विप्राः प्रणिपत्य कृताञ्जलिः ॥ ५७ ॥ नमस्ते सर्वगे देवि नमस्ते शुभसौख्यदे ॥ त्राहि मां पद्मपत्राक्षि कात्यायनि नमोऽस्तु ते ॥ ५८ ॥ एवं प्रसाद्य तां देवीं जगद्धात्रीं जगद्धिताम् ॥ बलदेवस्य भगिनीं सुभद्रां वरदां शिवाम् ॥ ५९ ॥ कामगेन विमानेन नरो विष्णुपुरं व्रजेत् ॥ आभूतसंप्लवं यावत्क्रीडित्वा तत्र देववत् ॥ ६० ॥ इह मानुषतां प्राप्तो ब्राह्मणो वेदविद्भवेत् ॥ प्राप्य योगं हरेस्तत्र मोक्षं च लभते ध्रुवम् ॥ ६१ ॥ इति श्रीब्रह्मपुराणे स्वयंभुऋषिसंवादे कृष्णदर्शनमाहात्म्यं नाम चतुःपञ्चाशत्तमोऽध्यायः ॥ ५४ ॥ ब्रह्मोवाच ॥ एवं दृष्ट्वा बलं कृष्णं सुभद्रां प्रणिपत्य च ॥ धर्मं चार्थं च कामं च मोक्षं च लभते ध्रुवम् ॥ १ ॥ निष्क्रम्य देवतागारात्कृतकृत्यो भवेन्नरः ॥ प्रणम्याऽऽयतनं पश्चाद्व्रजेत्तत्र समाहितः ॥ २ ॥ इन्द्रनीलमयो विष्णुर्यत्राऽऽस्ते वालुकावृतः ॥ अन्तर्धानगतं नत्वा ततो विष्णुपुरं व्रजेत ॥ ३ ॥ सर्वदेवमयो योऽसौ हतवानसुरोत्तमम् ॥ स आस्ते तत्र भो विप्राः सिंहार्धकृतविग्रहः ॥ ४ ॥ भक्त्या दृष्ट्वा तु तं देवं प्रणम्य नरकेसरिम् ॥ मुच्यते पातकैर्मर्त्यैः समस्तैर्नात्र संशयः ॥ ५ ॥ नरसिंहस्य ये भक्ता भवन्ति भुवि मानवाः ॥ न तेषां दुष्कृतं किंचित्फलं स्याद्यद्यदीप्सितम् ॥ ६ ॥ तस्मात्सर्वप्रयत्नेन नरसिंहं समाश्रयेत् ॥ धर्मार्थकाममोक्षाणां फलं यस्मात्प्रयच्छति ॥ ७ ॥ मुनय ऊचुः ॥ माहात्म्यं नरसिंहस्य सुखदं भुवि दुर्लभम् ॥ यथा कथयसे देव ततो नो विस्मयो महान् ॥ ८ ॥ प्रभावं तस्य देवस्य विस्तरेण जगत्पते ॥ श्रोतुमिच्छामहे ब्रूहि परं कौतूहलं हि नः ॥ ९ ॥ यथा प्रसीदेद्देवोऽसौ नरसिंहो महाबलः ॥ भक्तानामुपकाराय ब्रूहि देव नमोऽस्तु ते ॥ १० ॥ प्रसादान्नरसिंहस्य या भवन्त्यत्र सिद्धयः ॥ ब्रूहि ताः कुरु चास्माकं प्रसादं प्रपितामह ॥ ११ ॥ ब्रह्मोवाच ॥ शृणुध्वं तस्य भो विप्राः प्रभावं वदतो मम ॥ अजितस्याप्रमेयस्य भुक्तिमुक्तिप्रदस्य च ॥ १२ ॥ कः शक्नोति गुणान्वक्तुं समस्तांस्तस्य भो द्विजाः ॥ सिंहार्धकृतदेहस्य प्रवक्ष्यामि समासतः ॥ १३ ॥ याः काश्चित्सिद्धयश्चात्र श्रूयन्ते दैवमानुषाः ॥ प्रसादात्तस्य ताः सर्वाः सिध्यन्त्यत्र न संशयः ॥ १४ ॥ स्वर्गे मर्त्ये च पाताले दिक्षु तोये पुरे नगे ॥ प्रसादात्तस्य देवस्य भवत्यव्याहता गतिः ॥ १५ ॥ असाध्यं तस्य देवस्य नास्त्यत्र सचराचरे ॥ नरसिंहस्य भो विप्राः सदा भक्तानुकम्पिनः ॥ १६ ॥ विधानं तस्य वक्ष्यामि भक्तानामुपकारकम् ॥ येन प्रसीदेद्वैवासौ सिंहार्धकृतविग्रहः ॥ १७ ॥

शृणुध्वं मुनिशार्दूलाः कल्पराजं सनातनम् ॥ नरसिंहस्य तत्त्वं च यत्र ज्ञातं सुरासुरैः ॥ १८ ॥ शाकयावकमूलैस्तु फलपिण्याकसक्तुकैः ॥ पयसो भक्षणे विप्राः वर्तयेत्साधकेश्वरः ॥१९॥ शुद्धकौपीनवासाश्च ध्यानयुक्तो जितेन्द्रियः ॥ अरण्ये विजने देशे पर्वते सिन्धुसंगमे ॥२०॥ ऊषरे सिद्धक्षेत्रे च नरसिंहाश्रमे तथा ॥ प्रतिष्ठाप्य स्वयं चाऽपि पूजां कृत्वा विधानतः ॥ २१ ॥ द्वादश्यां शुक्लपक्षस्य उपोष्य मुनिपुंगवाः ॥ जपेल्लक्षाणि वै विंशन्मनसा संयतेन्द्रियः ॥ २२ ॥ उपपातकयुक्तश्च महापातकसंयुतः ॥ मुक्तो भवेत्ततो विप्राः साधको नात्र संशयः ॥ २३ ॥ कृत्वा प्रदक्षिणं तत्र नरसिंहं प्रपूजयेत् ॥ पुष्पगन्धादिभिर्धूपैः प्रणम्य शिरसा प्रभुम् ॥ २४ ॥ कर्पूरचन्दनाक्तानि जातीपुष्पाणि मस्तके ॥ प्रदद्यान्नरसिंहस्य ततः सिद्धिः प्रजायते ॥ २५ ॥ भगवान्सर्वकार्येषु न कचित्प्रतिहन्यते ॥ तेजः सोढुं न शक्ताः स्युर्ब्रह्मरुद्रादयः सुराः ॥ २६ ॥ किं पुनर्दानवा लोके सिद्धगन्धर्वमानुषाः ॥ विद्याधरा यक्षगणाः सकिंनरमहोरगाः ॥ २७ ॥ मन्त्रग्रामं समीहन्ते जपन्त्येकेऽन्यसाधकाः ॥ ते सर्वे प्रलयं यान्ति दृष्ट्वाऽऽदित्यामिववर्चसः ॥२८॥ सकृज्जप्तं तु कवचं सर्वसौख्याचलप्रदम् ॥ द्विर्जप्तं कवचं दिव्यं रक्षते देवदानवात् ॥ २९ ॥ गन्धर्वाः किंनरा यक्षा विद्याधरमहोरगाः ॥ भूताः पिशाचा रक्षांसि ये चान्ये परिपन्थिनः ॥३०॥ त्रिर्जप्तं कवचं दिव्यमभेद्यं च सुरासुरैः ॥ द्वादशाभ्यन्तरे चैव योजनानां द्विजोत्तमाः ॥ ३१ ॥ रक्षते भगवान्देवो नरसिंहो महाबलः ॥ ततो गत्वा बिलद्वारमुपोष्य रजनीत्रयम् ॥ ३२ ॥ पलाशकाष्ठैः प्रज्वाल्य भगवन्तं हुताशनम् ॥ पलाशसमिधस्तत्र जुहुयात्त्रिमधुप्लुताः ॥ ३३ ॥ द्वे शते द्विजशार्दूला वषट्कारेण साधकः ॥ ततो विवरद्वारं तु प्रकटं जायते क्षणात् ॥ ३४ ॥ ततो विशेत्तु निःशङ्कं कवची विवरं बुधः ॥ गच्छतः संकटं तस्य तमोमोहश्च नश्यति ॥ ३५ ॥ राजमार्गः सुविस्तीर्णो दृश्यते भ्रमरान्वितः ॥ नरसिंहं स्मरंस्तत्र पातालं विशते द्विजाः ॥ ३६ ॥ गत्वा तत्र जपेत्तत्त्वं नरसिंहाख्यमव्ययम् ॥ ततः स्त्रीणां सहस्राणि वीणावादनकर्मणाम् ॥ ३७ ॥ निर्गच्छन्ति पुरो विप्राः स्वागतं ता वदन्ति च ॥ प्रवेशयन्ति ता हस्ते गृहीत्वा साधकेश्वरम् ॥ ३८ ॥ ततो रसायनं दिव्यं पाययन्ति द्विजोत्तमाः ॥ पीतमात्रे दिव्यदेहो जायते सुमहाबलः ॥ ३९ ॥ क्रीडते सह कन्याभिर्यावदाभूतसंप्लवम् ॥ भिन्नदेहो वासुदेवे लीयते नात्र संशयः ॥ ४० ॥ यदा न रोचते वासस्तस्मान्निर्गच्छते पुनः ॥ पट्टं शूलं च खड्गं च रोचनां च मणिं तथा ॥ ४१ ॥ रसं रसायनं चैव पादुकाञ्जनमेव च ॥ कृष्णाजिनं मुनिश्रेष्ठा गुटिकां च मनोहराम् ॥ ४२ ॥ कमण्डलुं चाक्षसूत्रं यष्टिं संजीवनीं तथा ॥ सिद्धविद्यां च शास्त्राणि गृहीत्वा साधकेश्वरः ॥ ४३ ॥ ज्वलद्वह्निस्फुलिङ्गोर्मिवेष्टितं त्रिशिखं हृदि ॥ सकृन्न्यस्तं दहेत्सर्वं वृजिनं जन्मकोटिजम् ॥ ४४ ॥ विषे न्यस्तं विषं हन्यात्कुष्ठं हन्यात्तनौ स्थितम् ॥ स्वदेहे

भ्रूणहत्यादि कृत्वा दिव्येन शुध्यति ॥ ४५ ॥ महाग्रहगृहीतेषु ज्वलमानं विचिन्तयेत् ॥ हृदन्ते वै ततः शीघ्रं नश्येयुर्दारुणा ग्रहाः ॥ ४६ ॥ बालानां कण्ठके बद्धं रक्षा भवति नित्यशः ॥ गण्डपिण्डकलूतानां नाशनं कुरुते ध्रुवम् ॥ ४७ ॥ व्याधिजातैः समिद्भिश्च घृतक्षीरेण होमयेत् ॥ त्रिसंध्यं मासमेकं तु सर्वरोगान्विनाशयेत् ॥ ४८ ॥ असाध्यं तु न पश्यामि त्रैलोक्ये सचराचरे ॥ यां यां कामयते सिद्धिं तां तां प्राप्नोति सं ध्रुवम् ॥ ४९ ॥ अष्टोत्तरशतं त्वेके पूजयित्वा मृगाधिपम ॥ मृत्तिकाः सप्त वल्मीके श्मशाने च चतुष्पथे ॥ ५० ॥ रक्तचन्दनसंमिश्रा गवां क्षीरेण लोडयेत् ॥ सिंहस्य प्रतिमां कृत्वा प्रमाणेन षडङ्गुलाम् ॥ ५१ ॥ लिम्पेत्तथा भूर्जपत्रे रोचनया समालिखेत् ॥ नरसिंहस्य कण्ठे तु बद्ध्वा चैव हि मन्त्रवित् ॥ ५२ ॥ जपेत्संख्याविहीनं तु पूजयित्वा जलाशये ॥ यावत्सप्ताहमात्रं तु जपेत्संयमितेन्द्रियः ॥ ५३ ॥ जलाकीर्णा मुहूर्तेन जायते सर्वमेदिनी ॥ अथवा शुष्कवृक्षाग्रे नरसिंहं तु पूजयेत् ॥ ५४ ॥ जप्त्वा चाष्टशतं तत्त्वं वर्षणं विनिवारयेत् ॥ तमेवं पिञ्जके बद्ध्वा भ्रामये त्साधकोत्तमः ॥ ५५ ॥ महावातो मुहूर्तेन आगच्छेन्नात्र संशयः ॥ पुनश्च धारयेत्क्षिप्रं सप्तजप्तेन वारिणा ॥ ५६ ॥ अथ तां प्रतिमां द्वारि निखने द्यस्य साधकः ॥ गोत्रोत्सादो भवेत्तस्य उद्धृते चैव शान्तिदः ॥ ५७ ॥ तस्मात्तं मुनिशार्दूला भक्त्या संपूजयेत्सदा ॥ मृगराजं महावीर्यं सर्वकामफ लप्रदम् ॥ ५८ ॥ विमुक्तः सर्वपापेभ्यो विष्णुलोकं च गच्छति ॥ ब्राह्मणाः क्षत्रिया वैश्याः स्त्रियः शूद्रान्त्यजातयः ॥५९॥ संपूज्य तं सुरश्रेष्ठं भक्त्या सिंहवपुर्धरम् ॥ मुच्यन्ते चाशुभैर्दुःखैर्जन्मकोटिसमुद्भवैः ॥ ६० ॥ संपूज्य तं सुरश्रेष्ठं प्राप्नुवन्त्यभिवाञ्छितम् ॥ देवत्वममरेशत्वं गन्धर्वत्वं च भो द्विजाः ॥ ६१ ॥ यक्षविद्याधरत्वं च तथाऽन्यच्चाभिवाञ्छितम् ॥ दृष्ट्वा स्तुत्वा नमस्कृत्वा संपूज्य नरकेसरिम् ॥ ६२ ॥ प्राप्नुवन्ति नरा राज्यं स्वर्गं मोक्षं च दुर्लभम् ॥ नरसिंहं नरो दृष्ट्वा लभेदभिमतं फलम् ॥ ६३ ॥ निर्मुक्तः सर्वपापेभ्यो विष्णुलोकं च गच्छति ॥ सकृद्दृष्ट्वा तु तं देवं भक्त्या सिंहवपुर्धरम् ॥ ६४ ॥ मुच्यते चाशुभैर्दुःखैर्जन्मकोटिसमुद्भवैः ॥ संग्रामे संकटे दुर्गे चोरव्याघ्रादिपीडिते ॥ ६५ ॥ कान्तारे प्राणसंदेहे विषवह्निजलेषु च ॥ राजादिभ्यः समुद्रेभ्यो ग्रहरोगादिपीडिते ॥६६॥ स्मृत्वा तं पुरुषः सर्वैरापद्भिर्विमुच्यते ॥ सूर्योदये यथा नाशं तमोऽभ्येति महत्तरम् ॥६७॥ तथा संदर्शने तस्य विनाशं यान्त्युपद्रवाः ॥ गुटिकाञ्जनपातालपादुके च रसायनम् ॥ ६८ ॥ नरसिंहे प्रसन्ने तु प्राप्नोत्यन्यांश्च वाञ्छितान् ॥ यान्यान्कामानभिध्यायन्भजते नरकेसरिम् ॥ ६९ ॥ तांस्तान्कामानवाप्नोति नरो नास्त्यत्र संशयः ॥ दृष्ट्वा तं देवदेवेशं भक्त्याऽऽपूज्य प्रणम्य च ॥ ७० ॥ दशानामश्वमेधानां फलं दशगुणं लभेत् ॥ पापैः सर्वैर्विनिर्मुक्तो गुणैः सर्वैरलंकृतः ॥ ७१ ॥ सर्वकामसमृद्धात्मा जरामरणवर्जितः ॥





सौवर्णेन विमानेन किंकिणीजालमालिना ॥ ७२ ॥ सर्वकामसमृद्धेन कामगेन सुवर्चसा ॥ तरुणादित्यवर्णेन मुक्ताहारावलम्बिना ॥ ७३ ॥ दिव्य स्त्रीशतयुक्तेन दिव्यगन्धर्वनादिना ॥ कुलैकविंशमुद्धृत्य देववन्मुदितः सुखी ॥ ७४ ॥ स्तूयमानोऽप्सरोभिश्च विष्णुलोकं व्रजेन्नरः ॥ भुक्त्वा तत्र वरान्भोगान्विष्णुलोके द्विजोत्तमाः ॥ ७५ ॥ गन्धर्वैरप्सरैर्युक्तः कृत्वा रूपं चतुर्भुजम् ॥ मनोह्लादकरं सौख्यं यावदाभूतसंप्लवम् ॥ ७६ ॥ पुण्यक्षयादिहाऽऽयातः प्रवरे योगिनां कुले ॥ चतुर्वेदी भवेद्विप्रो वेदवेदाङ्गपारगः ॥ वैष्णवं योगमास्थाय ततो मोक्षमवाप्नुयात् ॥ ७७ ॥ इति श्रीब्रह्मपुराणे स्वयंभ्वृषिसंवादे नरसिंहमाहात्म्यवर्णनं नाम पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥ ॥ ब्रह्मोवाच ॥ अनन्ताख्यं वासुदेवं दृष्ट्वा भक्त्या प्रणम्य च ॥ सर्व पापविनिर्मुक्तोनरो याति परं पदम् ॥ १ ॥ मया चाऽऽराधितश्चासौ शक्रेण तदनन्तरम् ॥ विभीषणेन रामेण कस्तं नाऽऽराधयेत्पुमान् ॥ २ ॥ श्वेतगङ्गां नरः स्नात्वा यः पश्येच्छ्वेतमाधवम् ॥ मत्स्याख्यं माधवं चैव श्वेतद्वीपं स गच्छति ॥ ३ ॥ मुनय ऊचुः ॥ श्वेतमाधवमाहात्म्यं वक्तुमर्हस्यशेषतः ॥ विस्तरेण जगन्नाथ प्रतिष्ठां तस्य वै हरेः ॥ ४ ॥ तस्मिन्क्षेत्रवरे पुण्ये विख्यातो जगतीतले ॥ श्वेताख्यं माधवं देवं कस्तं स्थापितवान्पुरा ॥ ५ ॥ ॥ ब्रह्मोवाच ॥ अभूत्कृतयुगे विप्राः श्वेतो नाम नृपो बली ॥ मतिमान्धर्मविच्छूरः सत्यसंधो दृढव्रतः ॥ ६ ॥ यस्य राज्ये तु वर्षाणां सहस्रं दश मानवाः ॥ जीवन्ति रोगरहिता बालस्तस्मिन्न सीदति ॥ ७ ॥ वर्तमाने तदा राज्ये किंचित्काले गते द्विजाः ॥ कपालगोतमो नाम ऋषिः परमधार्मिकः ॥ ८ ॥ सुतोऽस्याजातदन्तश्च मृतः कालवशाद्द्विजाः ॥ तमादाय ऋषिर्धीमान्नृपस्यान्तिकमानयत् ॥ ९ ॥ दृष्ट्वैवं नृपतिः सुप्तं कुमारं गतचेतसम् ॥ प्रतिज्ञामकरोद्विप्रा जीवनार्थं शिशोस्तदा ॥ १० ॥ ॥ राजोवाच ॥ यावद्बालमहं त्वेनं यमस्य सदने गतम् ॥ नाऽऽनये सप्तरात्रेण चितां दीप्तां समारुहे ॥ ११ ॥ ॥ ब्रह्मोवाच ॥ एवमुक्त्वाऽसितैः पद्मैः शतैर्दशशतादिकैः ॥ संपूज्य तं महादेवं राजा विद्यां पुनर्जपेत् ॥ १२ ॥ अतिभक्तिं तु संवीक्ष्य नृपस्य जगदीश्वरः ॥ सांनिध्यमगमत्तुष्टोऽस्मीत्युवाच सहोमया ॥ १३ ॥ श्रुत्वैवं गिरमीशस्य विलोक्य सहसा हरम् ॥ भस्मदिग्धं विरूपाक्षं शरत्कुन्देन्दुवर्चसम् ॥ १४ ॥ शार्दूलचर्मवसनं शशाङ्काङ्कितमूर्धजम् ॥ महीं निपत्य सहसा प्रणम्य च तमब्रवीत् ॥ १५ ॥ ॥ श्वेत उवाच ॥ कारुण्यं यदि मे दृष्ट्वा प्रसन्नोऽसि प्रभो यदि ॥ कालस्य वशमापन्नो बालको द्विजपुत्रकः ॥ १६ ॥ जीवत्वेष पुनर्बाल इत्येवं व्रतमाहितम् ॥ अकस्माच्च मृतं बालं नियम्य भगवन्स्वयम् ॥ यथोक्तायुष्यसंयुक्तं क्षेमं कुरु महेश्वर ॥ १७ ॥ ॥ ब्रह्मोवाच ॥ श्वेतस्यैतद्वचः श्रुत्वा मुदं प्राप हरस्तदा ॥ कालं समाह्वयामास सर्वभूतभयंकरम् ॥ १८ ॥ नियम्य कालं दुर्धर्षं यमस्याऽऽज्ञाकरं द्विजाः ॥ बालं संजीवयामास मृत्यो

सुखगतं पुनः ॥ १९ ॥ कृत्वा क्षेमं जगत्सर्वं मुनेः पुत्रं च भो द्विजाः ॥ देव्या सहोमया देवस्तत्रैवान्तरधीयत ॥ २० ॥ एवं संजीवयामास मुनेः पुत्रं नृपोत्तमः ॥ २१ ॥ मुनय ऊचुः ॥ देवदेव जगन्नाथ त्रैलोक्यप्रभवाव्यय ॥ ब्रूहि नः परमं तथ्यं श्वेताख्यस्य च सांप्रतम् ॥ २२ ॥ ब्रह्मोवाच ॥ शृणुध्वं मुनिशार्दूलाः सर्वसत्त्वहिताय वै ॥ प्रवक्ष्यामि यथातथ्यं यत्पृच्छथ ममानघाः ॥ २३ ॥ माधवस्य तु माहात्म्यं सर्वपापप्रणाशनम् ॥ यच्छ्रुत्वाऽभिमतान्कामान्ध्रुवं प्राप्नोति मानवः ॥ २४ ॥ श्रुतवानृषिभिः पूर्वं माधवाख्यस्य भो द्विजाः ॥ शृणुध्वं तां कथां दिव्यां भयशोकार्तिनाशिनीम् ॥ २५ ॥ स कृत्वा राज्यमेकाग्र्यं वर्षाणां च सहस्रशः ॥ विचार्य लौकिकान्धर्मान्वैदिकान्नियमांस्तथा ॥ २६ ॥ केशवाराधने विप्रा निश्चितं व्रतमास्थितः ॥ स गत्वा परमं क्षेत्रं सागरं दक्षिणाश्रयम् ॥ २७ ॥ तटे तस्मिञ्शुभे रम्ये देशे कृष्णस्य चान्तिके ॥ श्वेतोऽथ कारयामास प्रासादं शुभलक्षणम् ॥ २८ ॥ धन्वन्तरशतं चैकं देवदेवस्य दक्षिणे ॥ ततः श्वेतेन विप्रेन्द्राः श्वेतशैलमयेन च ॥ २९ ॥ कृतः स भगवाञ्श्वेतो माधवश्चन्द्रसंनिभः ॥ प्रतिष्ठां विधिवच्चक्रे यथोद्दिष्टां स्वयं तु सः ॥ ३० ॥ दत्त्वा दानं द्विजातिभ्यो दीनानाथतपस्विनाम् ॥ अथानन्तरतो राजा माधवस्य च संनिधौ ॥ ३१ ॥ महीं निपत्य सहसा सौंकारं द्वादशाक्षरम् ॥ जपन्स मौनमास्थाय मासमेकं समाधिना ॥ ३२ ॥ निराहारो महाभागः सम्यग्विष्णुपदे स्थितः ॥ जपान्ते स तु देवेशं संस्तोतुमुपचक्रमे ॥ ३३ ॥ श्वेत उवाच ॥ ॐ नमो वासुदेवाय नमः संकर्षणाय च ॥ प्रद्युम्नायानिरुद्धाय नमो नारायणाय च ॥ ३४ ॥ नमोऽस्तु बहुरूपाय विश्वरूपाय वेधसे ॥ निर्गुणायाप्रतर्क्याय शुचये शुक्लकर्मणे ॥ ३५ ॥ ॐ नमः पद्मनाभाय पद्मगर्भोद्भवाय च ॥ नमोऽस्तु पद्मवर्णाय पद्महस्ताय ते नमः ॥ ३६ ॥ ॐ नमः पुष्कराक्षाय सहस्राक्षाय मीढुषे ॥ नमः सहस्रपादाय सहस्रभुजमन्यवे ॥ ३७ ॥ ॐ नमोस्तु वराहाय वरदाय सुमेधसे ॥ वरिष्ठाय वरेण्याय हिरण्यायाच्युताय च ॥ ३८ ॥ ॐ नमो बालरूपाय बालपद्मप्रभाय च ॥ बालार्कसोमनेत्राय मुञ्जकेशाय धीमते ॥ ३९ ॥ केशवाय नमो नित्यं नमो नारायणाय च ॥ माधवाय वरिष्ठाय गोविन्दाय नमो नमः ॥४०॥ ॐ नमो विष्णवे नित्यं देवाय वसुरेतसे ॥ मधुसूदनाय नमः शुद्धायांशुधराय च ॥४१॥ नमोऽनन्ताय सूक्ष्माय नमः श्रीवत्सधारिणे ॥ त्रिविक्रमाय च नमो दिव्यपीताम्बराय च ॥ ४२ ॥ सृष्टिकर्त्रे नमस्तुभ्यं गोप्त्रे धात्रे नमो नमः ॥ नमोऽस्तु गुणभूताय निर्गुणाय नमो नमः ॥ ४३ ॥ नमो वामनरूपाय नमो वामनकर्मणे ॥ नमो वामननेत्राय नमो वामनवाहिने ॥ ४४ ॥ नमोऽतन्ताय पूज्याय नमोऽस्त्वव्यक्तरूपिणे ॥ अप्रतर्क्याय शुद्धाय नमो भयहराय च ॥ ४५ ॥ संसारार्णवपोताय प्रशान्ताय स्वरूपिणे ॥ शिवाय सौम्यरूपाय घोररूपधराय च ॥ ४६ ॥ भवभङ्गकृते चैव भवभो









गप्रदाय च ॥ भवसंघातरूपाय भवसृष्टिकृते नमः ॥ ४७ ॥ ॐ नमो दिव्यरूपाय सोमाग्निश्वसिताय च ॥ सोमसूर्यांशुकेशाय गोब्राह्मणहिताय च ॥ ४८ ॐ नम ऋक्स्वरूपाय पदक्रमस्वरूपिणे ॥ ऋक्स्तुताय नमस्तुभ्यं नमो ऋक्साधनाय च ॥ ४९ ॥ ॐ नमो यजूषां धात्रे यजूरूपधराय च ॥ यजुर्याज्याय जुष्टाय यजुषां पतये नमः ॥ ५० ॥ ॐ नमः श्रीपते देव श्रीधराय वराय च ॥ श्रियः कान्ताय दान्ताय योगिचिन्त्याय योगिने ॥ ५१ ॥ ॐ नमः सामरूपाय सामध्वनिवराय च ॥ ॐ नमः सामसौम्याय सामयोगविदे नमः ॥ ५२ ॥ साम्ने च सामगीताय ॐ नमः सामधारिणे ॥ सामयज्ञविदे चैव नमः सामकराय च ॥ ५३ ॥ नमस्त्वथर्वशिरसे नमोऽथर्वस्वरूपिणे ॥ नमोऽस्त्वथर्वपादाय नमोऽथर्वकराय च ॥ ५४ ॥ ॐ नमो वज्रशीर्षाय मधुकैटभघातिने ॥ महोदधिजलस्थाय वेदाहरणकारिणे ॥ ५५ ॥ नमो दीप्तस्वरूपाय हृषीकेशाय वै नमः ॥ नमो भगवते तुभ्यं वासुदेवाय ते नमः ॥ ५६ ॥ नारायण नमस्तुभ्यं नमो लोकहिताय च ॥ ॐ नमो मोहनाशाय भवभङ्गकराय च ॥ ५७ ॥ गतिप्रदाय च नमो नमो बन्धहराय च ॥ त्रैलोक्यतेजसां कर्त्रे नमस्तेजःस्वरूपिणे ॥ ५८ ॥ योगीश्वराय शुद्धाय रामायोत्तरणाय च ॥ सुखाय सुखनेत्राय नमः सुकृतधारिणे ॥ ५९ ॥ वासुदेवाय वन्द्याय वामदेवाय वै नमः ॥ देहिनां देहकर्त्रे च भेदभङ्गकराय च ॥ ६० ॥ देवैर्वन्दितदेहाय नमस्ते दिव्यमौलिने ॥ नमो वासनिवासाय वासव्यवहराय च ॥ ६१ ॥ ॐ नमो वसुकर्त्रे च वसुवासप्रदाय च ॥ नमो यज्ञस्वरूपाय यज्ञेशाय च योगिने ॥ ६२ ॥ यतियोगकरेशाय नमो यज्ञाङ्गधारिणे ॥ संकर्षणाय च नमः प्रलम्बमथनाय च ॥ ६३ ॥ मेघघोषस्वनोत्तीर्णवेगलाङ्गलधारिणे ॥ नमोऽस्तु ज्ञानिनां ज्ञान नारायणपरायण ॥ ६४ ॥ न मेऽस्ति त्वामृते बन्धुर्नरकोत्तारणे प्रभो ॥ अतस्त्वां सर्वभावेन प्रणतो नतवत्सल ॥ ६५ ॥ मलं यत्कायजं वाऽपि मानसं चैव केशव ॥ न तस्यान्योऽस्ति देवेश क्षालकस्त्वामृतेऽच्युत ॥ ६६ ॥ संसर्गाणि समस्तानि विहाय त्वामुपस्थितः ॥ संगो मेऽस्तु त्वया सार्धमात्मलाभाय केशव ॥ ६७ ॥ कष्टमापत्सुदुष्पारं संसारं वेद्मि केशव ॥ तापत्रयपरिक्लिष्टस्तेन त्वां शरणं गतः ॥ ६८ ॥ एषणाभिर्जगत्सर्वं मोहितं मायया तव ॥ आकर्षितं च लोभाद्यैरतस्त्वामहमाश्रितः ॥ ६९ ॥ नास्ति किंचित्सुखं विष्णो संसारस्थस्य देहिनः ॥ यथा यथा हि यज्ञेश त्वयि चेतः प्रवर्तते ॥ ७० ॥ तथा फलविहीनं तु सुखमात्यन्तिकं लभेत् ॥ नष्टो विवेकशून्योऽस्मि दृश्यते जगदातुरम् ॥ ७१ ॥ गोविन्द त्राहि संसारान्मामुद्धर्तुं त्वमर्हसि ॥ मग्नस्य मोहसलिले निरुत्तारे भवार्णवे ॥ उद्धर्ता पुण्डरीकाक्ष त्वामृतेऽन्यो न विद्यते ॥ ७२ ॥ ॥ ब्रह्मोवाच ॥ इत्थं स्तुतस्ततस्तेन राज्ञा श्वेतेन भो द्विजाः ॥ तस्मिन्क्षेत्रवरे

दिव्ये विख्याते पुरुषोत्तमे ॥ ७३ ॥ भक्तिं तस्य तु संचिन्त्य देवदेवो जगद्गुरुः ॥ आजगाम नृपस्याग्रे सर्वैर्देवैर्वृतो हरिः ॥ ७४ ॥ नीलजीमूतसंकाशः पद्मपत्रायतेक्षणः ॥ दधत्सुदर्शनं श्रीमान्कराग्रे दीप्तमण्डलम् ॥ ७५ ॥ क्षीरोदजलसंकाशो विमलश्चन्द्रसंनिभः ॥ रराज वामहस्तेऽस्य पाञ्चजन्यो महाद्युतिः ॥ ७६ ॥ पक्षिराजध्वजः श्रीमान्गदाशार्ङ्गासिचक्रधृक् ॥ उवाच साधु भो राजन्यस्य ते मतिरुत्तमा ॥ यदिष्टं वरं भद्रं ते प्रसन्नोऽस्मि तवानघ ॥ ७७ ॥ ॥ ब्रह्मोवाच ॥ श्रुत्वैवं देवदेवस्य वाक्यं तत्परमामृतम् ॥ प्रणम्य शिरसा भक्त्या मुदा तद्गतमानसः ॥ ७८ ॥ ॥ श्वेत उवाच ॥ यद्यहं भगवन्भक्तः प्रयच्छ वरमुत्तमम् ॥ आब्रह्मभवनादूर्ध्वं वैष्णवं पदमव्ययम् ॥ ७९ ॥ विमलं विरजं शुद्धं संसारासंगवर्जितम् ॥ तत्पदं गन्तुमिच्छामि त्वत्प्रसादाज्जगत्पते ॥ ८० ॥ ॥ श्रीभगवानुवाच ॥ यत्पदं विबुधाः सर्वे मुनयः सिद्धयोगिनः ॥ नाभिगच्छन्ति यद्रम्यं परं पदमनामयम् ॥ ८१ ॥ यास्यसि त्वं परं स्थानं राज्यामृतमुपास्य च ॥ सर्वाँल्लोकानतिक्रम्य मम लोकं गमिष्यसि ॥ ८२ ॥ कीर्तिस्तवात्र राजेन्द्र त्रीँल्लोकांश्च गमिष्यति ॥ सांनिध्यं मम चैवात्र सर्वदैव भविष्यति ॥ ८३ ॥ श्वेतगंगेति गास्यन्ति सर्वे ते देवदानवाः ॥ कुशाग्रेणापि राजेन्द्र श्वेतगांगेयमम्बु च ॥ ८४ ॥ स्पृष्ट्वा स्वर्गं गमिष्यन्ति मद्भक्ता ये समाहिताः ॥ यस्त्विमां प्रतिमां गच्छेन्माधवाख्यां शशिप्रभाम् ॥ ८५ ॥ शंखगोक्षीरसंकाशामशेषाघविनाशिनीम् ॥ तां प्रणम्य सकृद्भक्त्या पुण्डरीकनिभेक्षणाम् ॥ ८६ ॥ विहाय सर्वलोकान्वै मम लोके महीयते ॥ मन्वन्तराणि तत्रैव देवकन्याभिरावृतः ॥ ८७ ॥ गीयमानश्च मधुरं सिद्धगन्धर्वसेवितः ॥ भुनक्ति विपुलान्भोगान्यथेष्टं मामकैः सह ॥ ८८ ॥ च्युतस्तस्मादिहाऽऽगत्य मनुष्यो ब्राह्मणो भवेत् ॥ वेदवेदाङ्गविच्छ्रीमान्भोगवांश्चिरजीवितः ॥ ८९ ॥ गजाश्वरथयानाढ्यो धनधान्यावृतः शुचिः ॥ रूपवान्बहुभाग्यश्च पुत्रपौत्रसमन्वितः ॥ ९० ॥ पुरुषोत्तमं पुनः प्राप्य वटमूलेऽथ सागरे ॥ त्यक्त्वा देहं हरिं स्मृत्वा ततः शान्तपदं व्रजेत् ॥ ९१ ॥ इति श्रीब्रह्मपुराणे स्वयंभुऋषिसंवादे श्वेतमाधवमाहात्म्यवर्णनं नाम षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥ ॥ ब्रह्मोवाच ॥ श्वेतमाधवमालोक्य समीपे मत्स्यमाधवम् ॥ एकार्णवजले पूर्वं रोहितं रूपमास्थितम् ॥ १ ॥ वेदानां हरणार्थाय रसातलतले स्थिताम् ॥ चिन्तयित्वा क्षितिं सम्यक्तस्मिन्स्थाने प्रतिष्ठितम् ॥ २ ॥ आद्यावतरणं रूपं माधवं मत्स्यरूपिणम् ॥ प्रणम्य प्रणतो भूत्वा सर्वदुःखाद्विमुच्यते ॥ ३ ॥ प्रयाति परमं स्थानं यत्र देवो हरिः स्वयम् ॥ काले पुनरिहाऽऽयातो राजा स्यात्पृथिवीतले ॥ ४ ॥ मत्स्यमाधवमासाद्य दुराधर्षो भवेन्नरः ॥ दाता भोक्ता भवेद्यज्वा वैष्णवः सत्यसंगरः ॥ ५ ॥ योगं प्राप्य हरेः पश्चात्ततो मोक्षमवाप्नुयात् ॥ मत्स्यमाधवमाहात्म्यं मया संपरिकीर्तितम् ॥ यं दृष्ट्वा मुने



 

शार्दूलाः सर्वान्कामानवाप्नुयात् ॥ ६ ॥ मुनय ऊचुः ॥ भगवञ्श्रोतुमिच्छामो मार्जनं वरुणालये ॥ क्रियते स्नानदानादि तस्याशेषफलं वद ॥ ७ ॥ ॥ ब्रह्मोवाच ॥ शृणुध्वं मुनिशार्दूला मार्जनस्य यथाविधि ॥ भक्त्या तु तन्मना भूत्वा संप्राप्य पुण्यमुत्तमम् ॥ ८ ॥ मार्कण्डेयह्रदे स्नानं पूर्वकाले प्रशस्यते ॥ चतुर्दश्यां विशेषेण सर्वपापप्रणाशनम् ॥ ९ ॥ तद्वत्स्नानं समुद्रस्य सर्वकालं प्रशस्यते ॥ पौर्णमास्यां विशेषेण हयमेधफलं लभेत् ॥ १० ॥ मार्कण्डेयं वटं कृष्णं रौहिणेयं महोदधिम् ॥ इन्द्रद्युम्नसरश्चैव पञ्चतीर्थीविधिः स्मृतः ॥ ११ ॥ पूर्णिमा ज्येष्ठमासस्य ज्येष्ठा ऋक्षं यदा भवेत् ॥ तदा गच्छेद्विशेषेण तीर्थराजं परं शुभम् ॥ १२ ॥ कायवाङ्मानसैः शुद्धस्तद्भावो नान्यमानसः ॥ सर्वद्वंद्वविनिर्मुक्तो वीतरागो विमत्सरः ॥ १३ ॥ कल्पवृक्षवटं रम्यं तत्र स्नात्वा जनार्दनम् ॥ प्रदक्षिणं प्रकुर्वीत त्रिवारं सुसमाहितः ॥ १४ ॥ यं दृष्ट्वा मुच्यते पापात्सप्तजन्मसमुद्भवात् ॥ पुण्यं चाऽऽप्नोति विपुलं गतिमिष्टां च भो द्विजाः ॥ १५ ॥ तस्य नामानि वक्ष्यामि प्रमाणं च युगे युगे ॥ यथासंख्यं च भो विप्राः कृतादिषु यथाक्रमम् ॥ १६ ॥ वटं वटेश्वरं पूर्वं पुराणपुरुषं द्विजाः ॥ वटस्यैतानि नामानि कीर्तितानि कृतादिषु ॥ १७ ॥ योजनं पादहीनं च योजनार्धं तदर्धकम् ॥ प्रमाणं कल्पवृक्षस्य कृतादौ परिकीर्तितम् ॥ १८ ॥ पूर्वोक्तेन तु मन्त्रेण नमस्कृत्वा तु तं वटम् ॥ दक्षिणाभिमुखो गच्छेद्धन्वन्तरशतत्रयम् ॥ १९ ॥ यत्रासौ दृश्यते विष्णुः स्वर्गद्वारं मनोरमम् ॥ सागराम्भःसमाकृष्टं काष्ठं सर्वगुणान्वितम् ॥ २० ॥ प्रणिपत्य ततस्तं भोः परिपूज्य ततः पुनः ॥ मुच्यते सर्वरोगाद्यैस्तथा पापैर्ग्रहादिभिः ॥ २१ ॥ उग्रसेनं पुरा दृष्ट्वा स्वर्गद्वारेण सागरम् ॥ गत्वाऽऽचम्य शुचिस्तत्र ध्यात्वा नारायणं परम् ॥ २२ ॥ न्यसेदष्टाक्षरं मन्त्रं पश्चाद्धस्तशरीरयोः ॥ ॐ नमो नारायणायेति यं वदन्ति मनीषिणः ॥ २३ ॥ किं कार्यं बहुभिर्मन्त्रैर्मनोविभ्रमकारकैः ॥ ॐ नमो नारायणायेति मन्त्रः सर्वार्थसाधकः ॥ २४ ॥ आपो नरस्य सूनुत्वान्नारा इति ह कीर्तिताः ॥ विष्णोस्तास्त्वयनं पूर्वं तेन नारायणः स्मृतः ॥ २५ ॥ नारायणपरा लोका नारायणपराः सुराः ॥ नारायण परं सत्यं नारायणपरं पदम् ॥ २६ ॥ नारायणपरा पृथ्वी नारायणपरं जलम् ॥ नारायणपरो वह्निर्नारायणपरं नमः ॥ २७ ॥ नारायणपरो वायुर्नारायणपरं मनः ॥ अहंकारश्च बुद्धिश्च उभे नारायणात्मके ॥ २८ ॥ भूतं भव्यं भविष्यं च यत्किंचिज्जीवसंज्ञकम् ॥ स्थूलं सूक्ष्मं परं चैव सर्वं नारायणात्मकम् ॥ २९ ॥ शब्दाद्या विषयाः सर्वे श्रोत्रादीनीन्द्रियाणि च ॥ प्रकृतिः पुरुषश्चैव सर्वे नारायणात्मकाः ॥ ३० ॥ जले स्थले च पाताले स्वर्गलोकेऽम्बरे नगे ॥ अवष्टभ्य इदं सर्वमास्ते नारायणः प्रभुः ॥ ३१ ॥ किं चात्र बहुनोक्तेन जगदेतच्चराचरम् ॥ ब्रह्मादिस्तम्बपर्यं

न्तं सर्वं नारायणात्मकम् ॥ ३२ ॥ नारायणात्परं किंचिन्नेह पश्यामि भो द्विजाः ॥ तेन व्याप्तमिदं सर्वं दृश्यादृश्यं चराचरम् ॥ ३३ ॥
आपो ह्यायतनं विष्णोः स च एवाम्भसां पतिः ॥ तस्मादप्सु स्मरेन्नित्यं नारायणमघापहम् ॥ ३४ ॥ स्नानकाले विशेषेण चोपस्थाय
जले शुचिः ॥ स्मरेन्नारायणं ध्यायेद्धस्ते काये च विन्यसेत् ॥ ३५ ॥ ओंकारं च नकारं च अंगुष्ठे हस्तयोर्न्यसेत् ॥ शेषैर्हस्ततलं
यावत्तर्जन्यादिषु विन्यसेत् ॥ ३६ ॥ ओंकारं वामपादे तु नकारं दक्षिणे न्यसेत् ॥ मोकारं वामकट्यां तु नाकारं दक्षिणे न्यसेत् ॥
॥ ३७ ॥ राकारं नाभिदेशे तु यकारं वामबाहुके ॥ णाकारं दक्षिणे न्यस्य यकारं मूर्ध्नि विन्यसेत् ॥ ३८ ॥ अधश्चोर्ध्वं च हृदये
पार्श्वतः पृष्ठतोऽग्रतः ॥ ध्यात्वा नारायणं पश्चादारभेत्कवचं बुधः ॥ ३९ ॥ पूर्वे मां पातु गोविन्दो दक्षिणे मधुसूदनः ॥ पश्चिमे
श्रीधरो देवः केशवस्तु तथोत्तरे ॥ ४० ॥ पातु विष्णुस्तथाऽऽग्नेये नैर्ऋते माधवोऽव्ययः ॥ वायव्ये तु हृषीकेशस्तथेशाने च वामनः
॥ ४१ ॥ भूतले पातु वाराहस्तथोर्ध्वे च त्रिविक्रमः ॥ कृत्वैवं कवचं पश्चादात्मानं चिन्तयेत्ततः ॥ ४२ ॥ अहं नारायणो देवः शंखचक्र
गदाधरः ॥ एवं ध्यात्वा तदाऽऽत्मानमिमं मन्त्रमुदीरयेत् ॥ ४३ ॥ त्वमग्निर्द्विपदां नाथ रेतोधाः कामदीपनः ॥ प्रधानः सर्वभूतानां जीवानां
प्रभुरव्ययः ॥ ४४ ॥ अमृतस्यारणिस्त्वं हि देवयोनिरपां पते ॥ वृजिनं हर मे सर्वं तीर्थराज नमोऽस्तु ते ॥ ४५ ॥ एवमुच्चार्य विधिवत्ततः स्नानं
समाचरेत् ॥ अन्यथा भो द्विजश्रेष्ठाः स्नानं तत्र न शस्यते ॥ ४६ ॥ कृत्वा चाब्दैवतैर्मन्त्रैरभिषेकं च मार्जनम् ॥ अन्तर्जले जपेत्पश्चात्त्रिरावृत्त्या
ऽघमर्षणम् ॥ ४७ ॥ हयमेधो यथा विप्राः सर्वपापहरः क्रतुः ॥ तथाऽघमर्षणं चात्र सूक्तं सर्वाघनाशनम् ॥ ४८ ॥ उत्तीर्य वाससी धौते निर्मले
परिधाय वै ॥ प्राणानायम्य चाऽऽचम्य संध्यां चोपास्य भास्करम् ॥ ४९ ॥ उपतिष्ठेत्ततश्चोर्ध्वं क्षिप्त्वा पुष्पजलाञ्जलिम् ॥ उपस्थायोर्ध्वबाहुश्च
तल्लिङ्गैर्भास्करं ततः ॥ ५० ॥ गायत्रीं पावनीं देवीं जपेदष्टोत्तरं शतम् ॥ अन्यांश्च सौरमन्त्रांश्च जप्त्वा तिष्ठेत्समाहितः ॥ ५१ ॥ कृत्वा प्रदक्षिणं
सूर्यं नमस्कृत्योपविश्य च ॥ स्वाध्यायं प्राङ्मुखः कृत्वा तर्पयेद्देवतान्यृषीन् ॥ ५२ ॥ मनुष्यांश्च पितॄंश्चान्यान्नामगोत्रेण मन्त्रवित् ॥ तोयेन
तिलमिश्रेण विधिवत्सुसमाहितः ॥ ५३ ॥ तर्पणं देवतानां च पूर्वं कृत्वा समाहितः ॥ अधिकारी भवेत्पश्चात्पितॄणां तर्पणे द्विजः ॥ ५४ ॥ श्रा
द्धकालेऽन्नकाले च पाणिनैकेन निर्वपेत् ॥ तर्पणे तूभयं कुर्यादेष एव विधिः सदा ॥ ५५ ॥ अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु ॥ तृप्यतामिति
वक्तव्यं नामगोत्रेण वाग्यतः ॥५६॥ कायस्थैर्यस्तिलैर्मोहात्करोति पितृतर्पणम् ॥ तर्पितास्तेन पितरस्त्वङ्मांसरुधिरास्थिभिः ॥ ५७ ॥ अंगस्थैर्न

तिलैः कुर्याद्देवतापितृतर्पणम् ॥ रुधिरं तद्भवेत्तोयं प्रदाता किल्बिषी भवेत् ॥ ५८ ॥ भूम्यां यद्दीयते तोयं दाता चैव जले स्थितः ॥ वृथा तन्मुनिशार्दूला नोपतिष्ठति कस्यचित् ॥ ५९ ॥ स्थले स्थित्वा जले यस्तु प्रयच्छेदुदकं नरः ॥ पितॄणां नोपतिष्ठेत सलिलं तन्निरर्थकम् ॥ ६० ॥ उदके नोदकं कुर्यात्पितृभ्यश्च कदाचन ॥ उत्तीर्य तु शुचौ देशे कुर्यादुदकतर्पणम् ॥ ६१ ॥ नोदकेषु न पात्रेषु न क्रुद्धो नैकपाणिना ॥ नोपतिष्ठति तत्तोयं यद्भूम्यां न प्रदीयते ॥ ६२ ॥ पितॄणामक्षयं स्थानं मही दत्ता मया द्विजाः ॥ तस्मात्तत्रैव दातव्यं पितॄणां प्रीतिमिच्छता ॥ ६३ ॥ भूमिपृष्ठे समुत्पन्ना भूम्यां चैव च संस्थिताः ॥ भूम्यां चैव लयं याता भूमौ दद्यात्ततो जलम् ॥ ६४ ॥ आस्तीर्य च कुशान्साग्रांस्तानावाह्य स्वमन्त्रतः ॥ प्राचीनाग्रेषु वै देवान्याम्याग्रेषु तथा पितॄन् ॥ ६५ ॥ इति श्रीब्रह्मपुराणे स्वयंभुऋषिसंवादे समुद्रस्नानविधिनिरूपणं नाम सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥ ॥ ब्रह्मोवाच ॥ देवान्पितॄंस्तथा चान्यान्संतर्प्याऽऽचम्य वाग्यतः ॥ हस्तमात्रं चतुष्कोणं चतुर्द्वारं सुशोभनम् ॥ १ ॥ पुरं विलिख्य भो विप्रास्तीरे तस्य महोदधेः ॥ पुरमध्ये लिखेत्पद्ममष्टपत्रं सकर्णिकम् ॥ २ ॥ एवं मण्डलमालेख्य पूजयेत्तत्र भो द्विजाः ॥ अष्टाक्षरविधानेन नारायणमजं विभुम् ॥ ३ ॥ अतः परं प्रवक्ष्यामि कायशोधनमुत्तमम् ॥ अकारं हृदये चिंत्य चक्ररेखासमन्वितम् ॥ ४ ॥ ज्वलन्तं त्रिशिखं चैव दहन्तं पापनाशनम् ॥ चन्द्रमण्डलमध्यस्थं राकारं मूर्ध्नि चिन्तयेत् ॥ ५ ॥ शुक्लवर्णं प्रवर्षन्तममृतं प्लावयन्महीम् ॥ एवं निर्धूतपापस्तु दिव्यदेहस्ततो भवेत् ॥ ६ ॥ अष्टाक्षरं ततो मन्त्रं न्यसेदेवाऽऽत्मनो बुधः ॥ वामपादं समारभ्य क्रमशश्चैव विन्यसेत् ॥ ७ ॥ पञ्चाङ्गं वैष्णवं चैव चतुर्व्यूहं तथैव च ॥ करशुद्धिं प्रकुर्वीत मूलमन्त्रेण साधकः ॥ ८ ॥ एकैकं चैव वर्णं तु अङ्गुलीषु पृथक्पृथक् ॥ ओंकारं पृथिवीं शुक्लां वामपादे तु विन्यसेत् ॥ ९ ॥ नकारः शांभवः श्यामो दक्षिणे तु व्यवस्थितः ॥ मोकारं कालमेवाऽऽहुर्वामकट्यां निधापयेत् ॥ १० ॥ नाकारः सर्वबीजं तु दक्षिणस्यां व्यवस्थितः ॥ राकारस्तेज इत्याहुर्नाभिदेशे व्यवस्थितः ॥ ११ ॥ वायव्योऽयं यकारस्तु वामस्कन्धे समाश्रितः ॥ णाकारः सर्वगो ज्ञेयो दक्षिणांसे व्यवस्थितः ॥ यकारोऽयं शिरस्थश्च यत्र लोकाः प्रतिष्ठिताः ॥ १२ ॥ ॐ विष्णवे नमइति शिरः । ॐ ज्वलनाय नमइति शिखा । ॐ विष्णवे नमइति कवचम् । ॐ विष्णवे नमइति स्फुरणं दिशोबन्धाय । ॐ हुंफडित्यस्त्रम् । ॐ शिरसि शुक्लो वासुदेव इति । ॐ आं ललाटे रक्तः संकर्षणो गरुत्मान्वह्निस्तेज आदित्य इति । आं ग्रीवायां पीतः प्रद्युम्नो वायुमेघ इति ॥ ॐ आं हृदये कृष्णोऽनिरुद्धः सर्वशक्तिसमन्वित इति ॥ एवं चतुर्व्यूहमात्मानं कृत्वा ततः कवचमारभेत् ॥ १३ ॥ मामग्रेऽवस्थितो विष्णुः पृष्ठतश्चापि केशवः ॥ गोविन्दो दक्षिणे

पार्श्वे वामे तु मधुसूदनः ॥ १४ ॥ उपरिष्टात्तु वैकुण्ठो वाराहः पृथिवीतले ॥ अवान्तरदिशो यास्तु तासु सर्वासु माधवः ॥ १५ ॥ गच्छतस्तिष्ठतो वाऽपि जाग्रतः स्वपतोऽपि वा ॥ नरसिंहकृता गुप्तिर्वासुदेवमयो ह्यहम् ॥ १६ ॥ एवं विष्णुमयो भूत्वा ततः कर्म समारभेत् ॥ यथा देहे तथा देवे सर्वतत्त्वानि योजयेत् ॥ १७ ॥ ततश्चैव प्रकुर्वीत प्रोक्षणं प्रणवेन तु ॥ फट्कारान्तं समुद्दिष्टं सर्वारिष्टहरं शुभम् ॥ १८ ॥ तत्रार्कचन्द्रवह्नीनां मण्डलानि विचिन्तयेत् ॥ पद्ममध्ये न्यसेद्विष्णुं पवनस्याम्बरस्य च ॥ १९ ॥ ततो विचिन्त्य हृदय ओंकारं ज्योतीरूपिणम् ॥ कर्णिकायां समासीनं ज्योतीरूपं सनातनम् ॥ २० ॥ अष्टाक्षरं ततो मन्त्रं विन्यसेच्च यथाक्रमम् ॥ तेन व्यस्तसमस्तेन पूजनं परमं स्मृतम् ॥ २१ ॥ द्वादशाक्षरमन्त्रेण यजेद्देवं सनातनम् ॥ ततोऽवधार्य हृदये कर्णिकायां वहिर्न्यसेत् ॥ २२ ॥ चतुर्भुजं महासत्त्वं सूर्यकोटिसमप्रभम् ॥ चिन्तयित्वा महायोगं ज्योतीरूपं सनातनम् ॥ ततश्चाऽऽवाहयेन्मन्त्रं क्रमेणाऽऽचिन्त्य मानसे ॥ २३ ॥ मीनरूपो वराहश्च नरसिंहोऽथ वामनः ॥ आयातु देवो वरदो मम नारायणोऽग्रतः ॥ ॐ नमो नारायणायेत्यावाहनम् ॥ २४ ॥ सुमेरुपादपीठांते पद्मकल्पितमासनम् ॥ सर्वसत्त्वहितार्थाय तिष्ठ त्वं मधुसूदन ॥ ओं नमो नारायणायेत्यासनस्थापनम् ॥ २५ ॥ ॐ त्रैलोक्यपतीनां पतये देवदेवाय हृषीकेशाय विष्णवे नमः ॥ ओं नमो नारायणाये त्यर्घः ॥ २६ ॥ ॐ पाद्यं पादयोर्देव पद्मनाभ सनातन ॥ विष्णो कमलपत्राक्ष गृहाण मधुसूदन ॥ ॐ नमो नारायणायेति पाद्यम् ॥ २७ ॥ मधुपर्कं महादेव ब्रह्माद्यैः कल्पितं तव ॥ मया निवेदितं भक्त्या गृहाण पुरुषोत्तम ॥ ओं नमो नारायणायेति मधुपर्कम् ॥ २८ ॥ मन्दाकिन्याः सितं वारि सर्वपापहरं शिवम् ॥ गृहाणाऽऽचमनीयं त्वं मया भक्त्या निवेदितम् ॥ ओं नमो नारायणायेत्याचमनीयम् ॥ २९ ॥ त्वमापः पृथिवी चैव ज्योतिस्त्वं वायुरेव च ॥ लोकेश वृत्तिमात्रेण वारिणा स्नापयाम्यहम् ॥ ओं नमो नारायणायेति स्नानम् ॥ ३० ॥ देवतत्त्वसमायुक्त यज्ञवर्णसमन्वित ॥ स्वर्णवर्णप्रभे देव वाससी तव केशव ॥ ओं नमो नारायणायेति वस्त्रे ॥ ३१ ॥ शरीरं ते न जानामि चेष्टां चैव च केशव ॥ मया निवेदितो गन्धः प्रतिगृह्य विलिप्यताम् ॥ ओं नमो नारायणायेति विलेपनम् ॥ ३२ ॥ ऋग्यजुः साममन्त्रेण त्रिवृतं पद्मयोनिना ॥ सावित्रीग्रंथिसंयुक्तमुपवीतं तवार्पये ॥ ओं नमो नारायणायेति यज्ञोपवीतम् ॥ ३३ ॥ दिव्यरत्नसमायुक्त वह्निभानुसमप्रभ ॥ गात्राणि तव शोभन्तु सालंकाराणि माधव ॥ ओं नमो नारायणायेत्यलंकाराः ॥ ३४ ॥ ओं नम इति प्रत्यक्षरं समस्तेन मूलमन्त्रेण वा पूजयेत् ॥ ३५ ॥ वनस्पतिरसो दिव्यो गन्धाढ्यः सुरभिश्च ते ॥ मया निवेदितो भक्त्या धूपोयं प्रतिगृह्यताम् ॥ ओं नमो नारायणायेति धूपः ॥ ३६ ॥ सूर्यचन्द्रसमे





ज्योतिर्विद्युदस्योस्तथैव च ॥ त्वमेव ज्योतिषां देव दीपोऽयं प्रतिगृह्यताम् ॥ ओं नमो नारायणायेति दीपः ॥ ३७ ॥ अन्नं चतुर्विधं चैव रसैः षड्भिः समन्वितम् ॥ मया निवेदितं भक्त्या नैवेद्यं तव केशव ॥ ओं नमो नारायणायेति नैवेद्यम् ॥ ३८ ॥ पूर्वे दले वासुदेवं याम्ये संकर्षणं न्यसेत् ॥ प्रद्युम्नं पश्चिमे कुर्यादनिरुद्धं तथोत्तरे ॥ ३९ ॥ वाराहं च तथाऽऽग्नेये नरसिंहं च नैर्ऋते ॥ वायव्ये माधवं चैव तथैशाने त्रिविक्रमम् ॥ ४० ॥ तथाऽष्टाक्षरदेवस्य गरुडं पुरतो न्यसेत् ॥ वामपार्श्वे तथा चक्रं शङ्खं दक्षिणतो न्यसेत् ॥ ४१ ॥ तथा महागदां चैव न्यसेद्देवस्य दक्षिणे ॥ ततः शार्ङ्गं धनुर्विद्वान्न्यसेद्देवस्य वामतः ॥ ४२ ॥ दक्षिणेनेषुधी दिव्ये खड्गं वामे च विन्यसेत् ॥ श्रियं दक्षिणतः स्थाप्य पुष्टिमुत्तरतो न्यसेत् ॥ ४३ ॥ वनमालां च पुरतस्ततः श्रीवत्सकौस्तुभौ ॥ विन्यसेद्धृदयादीनि पूर्वादिषु चतुर्दिशम् ॥ ४४ ॥ ततोऽस्त्रं देवदेवस्य कोणे चैव तु विन्यसेत् ॥ इन्द्रमग्निं यमं चैव नैर्ऋतं वरुणं तथा ॥ ४५ ॥ वायुं धनदमीशानमनन्तं ब्रह्मणा सह ॥ पूजयेत्तान्त्रिकैर्मन्त्रैरधश्चोर्ध्वं तथैव च ॥ ४६ ॥ एवं संपूज्य देवेशं मण्डलस्थं जनार्दनम् ॥ लभेदभिमतान्कामान्नरो नास्त्यत्र संशयः ॥ ४७ ॥ अनेनैव विधानेन मण्डलस्थं जनार्दनम् ॥ पूजितं यः प्रपश्येद्वै स विशेद्विष्णुमव्ययम् ॥ ४८ ॥ सकृदप्यर्चितो येन विधिनाऽनेन केशवः ॥ जन्ममृत्युजरां तीर्त्वा स विष्णोः पदमाप्नुयात् ॥ ४९ ॥ यः स्मरेत्सततं भक्त्या नारायणमतन्द्रितः ॥ अन्वहं तस्य वासाय श्वेतद्वीपः प्रकल्पितः ॥ ५० ॥ ओंकारादिसमायुक्तं नमःकारान्तदीपितम् ॥ तन्नाम सर्वतत्त्वानां मन्त्र इत्यभिधीयते ॥ ५१ ॥ अनेनैव विधानेन गन्धपुष्पं निवेदयेत् ॥ एकैकस्य प्रकुर्वीत यथोद्दिष्टं क्रमेण तु ॥ ५२ ॥ मुद्रास्ततो निबध्नीयाद्यथोक्तक्रमचोदिताः ॥ जपं चैव प्रकुर्वीत मूलमन्त्रेण मन्त्रवित् ॥ ५३ ॥ अष्टाविंशतिमष्टौ वा शतमष्टोत्तरं तथा ॥ कामेषु च यथाप्रोक्तं यथाशक्ति समाहितः ॥ ५४ ॥ पद्मं शङ्खश्च श्रीवत्सो गदा गरुड एव च ॥ चक्रं खड्गश्च शार्ङ्गं च अष्टौ मुद्राः प्रकीर्तिताः ॥ ५५ ॥ गच्छ गच्छ परं स्थानं पुराणपुरुषोत्तम ॥ यत्र ब्रह्मादयो देवा विन्दन्ति परमं पदम् ॥ ॐ नमो नारायणायेति विसर्जनम् ॥ ५६ ॥ अर्चनं ये न जानन्ति हरेर्मन्त्रैर्यथोदितम् ॥ ते तत्र मूलमन्त्रेण पूजयन्त्वच्युतं सदा ॥ ५७ ॥ इति श्रीब्रह्मपुराणे स्वयंभ्वृषिसंवादे पूजाविधिमंत्रकथनं नामाष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥ ॥ ब्रह्मोवाच ॥ एवं संपूज्य विधिवद्भक्त्या तं पुरुषोत्तमम् ॥ प्रणम्य शिरसा पश्चात्सागरं च प्रसादयेत् ॥ १ ॥ प्राणस्त्वं सर्वभूतानां योनिश्च सरितां पते ॥ तीर्थराज नमस्तेऽस्तु त्राहि मामच्युतप्रिय ॥ २ ॥ स्नात्वैवं सागरे सम्यक्तस्मिन्क्षेत्रवरे द्विजाः ॥ तीरे चाभ्यर्च्य विधिवन्नारायणमनामयम् ॥ ३ ॥ रामं कृष्णं सुभद्रां च प्रणिप

त्य च सागरम् ॥ शतानामश्वमेधानां फलं प्राप्नोति मानवः ॥ ४ ॥ सर्वपापविनिर्मुक्तः सर्वदुःखविवर्जितः ॥ वृन्दारक इव श्रीमान्रूपयौवयगर्वितः ॥ ॥ ५ ॥ विमानेनार्कवर्णेन दिव्यगन्धर्वनादिना ॥ कुलैकविंशमुद्धृत्य विष्णुलोकं स गच्छति ॥ ६ ॥ भुक्त्वा तत्र वरान्भोगान्क्रीडित्वा चाप्सरैः सह ॥ मन्वन्तरशतं साग्रं जरामृत्युविवर्जितः ॥ ७ ॥ पुण्यक्षयादिहाऽऽयातः कुले सर्वगुणान्विते ॥ रूपवान्सुभगः श्रीमान्सत्यवादी जितेन्द्रियः ॥ ॥ ८ ॥ वेदशास्त्रार्थविद्विप्रो भवेद्यज्वा तु वैष्णवः ॥ योगं च वैष्णवं प्राप्य ततो मोक्षमवाप्नुयात् ॥ ९ ॥ ग्रहोपरागे संक्रान्त्यामयने विषुवे तथा ॥ युगादिषु षडशीत्यां व्यतीपाते दिनक्षये ॥ १० ॥ आषाढ्यां चैव कार्तिक्यां माघ्यां वाऽन्ये शुभे तिथौ ॥ ये तत्र दानं विप्रेभ्यः प्रयच्छन्ति सुमेधसः ॥ ११ ॥ फलं सहस्रगुणितमन्यतीर्थाल्लभन्ति ते ॥ पितॄणां ये प्रयच्छन्ति पिण्डं तत्र विधानतः ॥ १२ ॥ अक्षयां पितरस्तेषां तृप्तिं च प्राप्नुवन्ति वै ॥ एवं स्नानफलं सम्यक्सागरस्य मयोदितम् ॥ १३ ॥ दानस्य च फलं विप्राः पिण्डदानस्य चैव हि ॥ धर्मार्थमोक्षफलदमायुष्कीर्तियशस्करम् ॥ १४॥ भुक्तिमुक्तिफलं नृणां धन्यं दुःस्वप्ननाशनम् ॥ सर्वपापहरं पुण्यं सर्वकामफलप्रदम् ॥ १५ ॥ नास्तिकाय न वक्तव्यं पुराणं च द्विजोत्तमाः ॥ तावद्गर्जन्ति तीर्थानि माहात्म्यैः स्वैः पृथक्पृथक् ॥ १६ ॥ यावन्न तीर्थराजस्य माहात्म्यं वर्ण्यते द्विजाः ॥ पुष्करादीनि तीर्थानि प्रयच्छन्ति स्वकं फलम् ॥ १७ ॥ तीर्थराजस्तु स पुनः सर्वतीर्थफलप्रदः ॥ भूतले यानि तीर्थानि सरितश्च सरांसि च ॥ १८ ॥ विशन्ति सर्वतीर्थानि तेनासौ श्रेष्ठतां गतः ॥ राजा समस्ततीर्थानां सागरः सरितां पतिः ॥ १९ ॥ तस्मात्समस्ततीर्थेभ्यः श्रेष्ठोऽसौ सर्वकामदः ॥ तमो नाशं यथाऽभ्येति भास्करेऽभ्युदिते द्विजाः ॥ २० ॥ स्नानेन तीर्थराजस्य तथा सर्वाघसंक्षयः ॥ तीर्थराजसमं तीर्थं न भूतं न भविष्यति ॥ २१ ॥ अधिष्ठानं यदा यत्र प्रभोर्नारायणस्य वै ॥ कः शक्नोति गुणान्वक्तुं तीर्थराजस्य भो द्विजाः ॥ २२ ॥ कोट्यो नवनवत्यस्तु यत्र तीर्थानि सन्ति वै ॥ तस्मात्स्नानं च दानं च होमं जप्यं सुरार्चनम् ॥ यत्किंचित्क्रियते तत्र चाक्षयं क्रियते द्विजाः ॥ २३ ॥ इति श्रीब्रह्मपुराणे स्वयंभुऋषिसंवादे समुद्रस्नानमाहात्म्यवर्णनं नामैकोनषष्टितमोऽध्यायः ॥ ५९ ॥ ॥ ब्रह्मोवाच ॥ ततो गच्छेद्द्विजश्रेष्ठास्तीर्थं यज्ञाङ्गसंभवम् ॥ इन्द्रद्युम्नसरो नाम यत्राऽऽस्ते पावनं शुभम् ॥ १ ॥ गत्वा तत्र शुचिर्धीमानाचम्य मनसा हरिम् ॥ ध्यात्वोपस्थाय च जलमिमं मन्त्रमुदीरयेत् ॥ २ ॥ अश्वमेधाङ्गसंभूत तीर्थ सर्वाघनाशन ॥ स्नानं त्वयि करोम्यद्य पापं हर नमोऽस्तु ते ॥ ३ ॥ एवमुच्चार्य विधिवत्स्नात्वा देवानृषीन्पितॄन् ॥ तिलोदकेन चान्यांश्च संतर्प्याऽऽचम्य वाग्यतः ॥ ४ ॥ दत्त्वा पितॄणां पिण्डांश्च संपूज्य पुरुषोत्तमम् ॥ दशाश्वमेधिकं पुण्यं फलं





प्राप्नोति मानवः ॥ ५ ॥ सप्तावरान्स्स परान्वंशानुद्धृत्य देववत् ॥ कामगेन विमानेन विष्णुलोकं स गच्छति ॥ ६ ॥ भुक्त्वा तत्र सुखान्भोगान्याचन्द्रार्कतारकम् ॥ च्युतस्तस्मादिहाऽऽयातो मोक्षं च लभते ध्रुवम् ॥ ७ ॥ एवं कृत्वा पञ्चतीर्थीमेकादश्यामुपोषितः ॥ ज्येष्ठशुक्लपञ्चदश्यां यः पश्येत्पुरुषोत्तमम् ॥ ८ ॥ स पूर्वोक्तं फलं प्राप्य क्रीडित्वा त्वच्युतालये ॥ प्रयाति परमं स्थानं यस्मान्नाऽऽवर्तते पुनः ॥ ९ ॥ ॥ मुनय ऊचुः ॥ मासानन्यान्परित्यज्य माघादीन्प्रपितामह ॥ प्रशंससि कथं ज्येष्ठं ब्रूहि तत्कारणं प्रभो॥१०॥ ॥ ब्रह्मोवाच ॥ शृणुध्वं मुनिशार्दूलाः प्रवक्ष्यामि समासतः ॥ ज्येष्ठं मासं यथा तेभ्यः प्रशंसामि पुनः पुनः॥११॥पृथिव्यां यानि तीर्थानि सरितश्च सरांसि च॥पुष्करिण्यस्तडागानि वाप्यः कूपास्तथा ह्रदाः॥१२॥ नानानद्यः समुद्राश्च सप्ताहं पुरुषोत्तमे ॥ ज्येष्ठशुक्लदशम्यादि प्रत्यक्षं यान्ति सर्वदा ॥ १३ ॥ स्नानदानादिकं तस्माद्देवताप्रेक्षणं द्विजाः ॥ यत्किंचित्क्रियते तत्र तस्मिन्कालेऽक्षयं भवेत् ॥ १४ ॥ शुक्लपक्षस्य दशमी ज्येष्ठे मासि द्विजोत्तमाः ॥ हरते दश पापानि तस्माद्दशहरा स्मृता ॥ १५ ॥ यस्तस्यां हलिनं कृष्णं पश्येद्भद्रां समाहितः ॥ सर्वपापविनिर्मुक्तो विष्णुलोकं व्रजेन्नरः ॥ १६ ॥ उत्तरे दक्षिणे विप्रास्त्वयने पुरुषोत्तमम् ॥ दृष्ट्वा रामं सुभद्रां च विष्णुलोकं व्रजेन्नरः ॥ १७ ॥ नरो दोलागतं दृष्ट्वा गोविन्दं त्रिदशोत्तमम् ॥ फाल्गुन्यां संयतो भूत्वा गोविन्दस्य पुरं व्रजेत् ॥ १८ ॥ विष्णोस्तु दिवसे प्राप्ते पञ्चतीर्थीविधानतः ॥ कृत्वा संकर्षणं कृष्णं दृष्ट्वा भद्रां च भो द्विजाः ॥ १९ ॥ नरः समस्तयज्ञानां फलं प्राप्नोति दुर्लभम् ॥ विमुक्तः सर्वपापेभ्यो विष्णुलोकं च गच्छति ॥ २० ॥ यः पश्यति तृतीयायां कृष्णं चन्दनरूपितम् ॥ वैशाखस्य सिते पक्षे स यात्यच्युतमन्दिरम् ॥ २१ ॥ ज्यैष्ठ्यां ज्येष्ठर्क्षयुक्तायां यः पश्येत्पुरुषोत्तमम् ॥ कुलैकविंशमुद्धृत्य विष्णुलोकं स गच्छति ॥ २२ ॥ इति श्रीब्रह्मपुराणे स्वयंभूऋषिसंवादे पञ्चतीर्थीमाहात्म्यनिरूपणं नाम षष्टितमोऽध्यायः ॥ ६० ॥ ॥ ब्रह्मोवाच ॥ यदा भवेन्महाज्यैष्ठी राशिनक्षत्रयोगतः ॥ प्रयत्नेन तदा मर्त्यैर्गन्तव्यं पुरुषोत्तमम् ॥ १ ॥ कृष्णं दृष्ट्वा महाज्यैष्ठ्यां रामं भद्रां च भो द्विजाः ॥ नरो द्वादशयात्रायाः फलं प्राप्नोति चाधिकम् ॥ २ ॥ प्रयागे च कुरुक्षेत्रे नैमिषे पुष्करे गये ॥ गङ्गाद्वारे कुशावर्ते गङ्गासागरसंगमे ॥ ३ ॥ कोकामुखे शूकरे च मथुरायां मरुस्थले ॥ शालग्रामे वायुतीर्थे मन्दरे सिन्धुसागरे ॥४॥ पिण्डारके चित्रकूटे प्रभासे कनखले तथा ॥ शंखोद्धारे द्वारकायां तथा बदरिकाश्रमे ॥५॥ लोहकुण्डे चाश्वतीर्थे सर्वपापप्रमोचने ॥ कामालये कोटितीर्थे तथा चामरकण्टके ॥ ६ ॥ लोहार्गले जम्बुमार्गे सोमतीर्थे पृथूदके ॥ उत्पलावर्तके चैव पृथुतुङ्गे सुकुब्जके ॥७॥ एकाम्रके च केदारे काश्यां च विरजे द्विजाः ॥ कालञ्जरे च गोकर्णे श्रीशैले गन्धमादने ॥८॥ महेन्द्रे मलये विन्ध्ये पारियात्रे हिमालये ॥ सह्ये च शुक्तिमन्ते च

गोमन्ते चार्बुदे तथा ॥ ९ ॥ गङ्गायां सर्वतीर्थेषु यामुनेषु च भो द्विजाः ॥ सारस्वतेषु गोमत्यां ब्रह्मपुत्रेषु सप्तसु ॥१०॥ गोदावरी भीमरथी तुङ्गभद्रा च नर्मदा ॥ तापी पयोष्णी कावेरी क्षिप्रा चर्मण्वती द्विजाः ॥ ११ ॥ वितस्ता चन्द्रभागा च शतद्रुर्बाहुदा तथा ॥ ऋषिकुल्या कुमारी च विपाशा च दृषद्वती ॥ १२ ॥ सरयूश्चैव गङ्गा च गण्डकी च महानदी ॥ कौशिकी करतोया च त्रिस्रोता मधुवाहिनी ॥ १३ ॥ महानदी वैतरणी याश्चान्या नानुकीर्तिताः ॥ अथवा किं बहूक्तेन भाषितेन द्विजोत्तमाः ॥ १४ ॥ पृथिव्यां सर्वतीर्थेषु सर्वेष्वायतनेषु च ॥ सागरेषु च शैलेषु नदीषु च सरःसु च ॥ १५ ॥ यत्फलं स्नानदानेन राहुग्रस्ते दिवाकरे ॥ तत्फलं कृष्णमालोक्य महाज्यैष्ठ्यां लभेन्नरः ॥ १६ ॥ तस्मात्सर्वप्रयत्नेन गन्तव्यं पुरुषोत्तमे ॥ महाज्यैष्ठ्यां मुनिश्रेष्ठा सर्वकामफलेप्सुभिः ॥ १७ ॥ दृष्ट्वा रामं महाज्यैष्ठ्यां कृष्णं सुभद्रया सह ॥ विष्णुलोकं नरो याति समुद्धृत्य स्वकं कुलम् ॥ १८ ॥ भुक्त्वा तत्र वरान्भोगान्यावदाभूतसंप्लवम् ॥ पुण्यक्षयादिहाऽऽगत्य चतुर्वेदी द्विजो भवेत् ॥ १९ ॥ स्वधर्मनिरतः शान्तः कृष्णभक्तो जितेन्द्रियः ॥ वैष्णवं योगमास्थाय ततो मोक्षमवाप्नुयात् ॥ २० ॥ इति श्रीब्रह्मपुराणे स्वयंभुऋषिसंवादे महाज्यैष्ठीप्रशंसावर्णनं नामैकषष्टितमोऽध्यायः ॥ ६१ ॥ ॥ मुनय ऊचुः ॥ कस्मिन्काले भवेत्स्नानं कृष्णस्य कमलोद्भव ॥ विधिना केन तद्ब्रूहि ततो विधिविदां वर ॥ १ ॥ ॥ ब्रह्मोवाच ॥ शृणुध्वं मुनयः स्नानं कृष्णस्य वदतो मम ॥ रामस्य च सुभद्रायाः पुण्यं सर्वाघनाशनम् ॥ २ ॥ मासि ज्येष्ठे च संप्राप्ते नक्षत्रे चन्द्रदैवते ॥ पौर्णमास्यां तदा स्नानं सर्वकालं हरेर्द्विजाः ॥ ३ ॥ सर्वतीर्थमयः कूपस्तत्राऽऽस्ते निर्मलः शुचिः ॥ तदा भोगवती तत्र प्रत्यक्षा भवति द्विजाः ॥ ४ ॥ तस्माज्ज्यैष्ठ्यां समुद्धृत्य हेमाढ्यैः कलशैर्जलम् ॥ कृष्णरामाभिषेकार्थं सुभद्रायाश्च भो द्विजाः ॥ ५ ॥ कृत्वा सुशोभनं मञ्चं पताकाभिरलंकृतम् ॥ सुदृढं सुखसंचारं वस्त्रैः पुष्पैः सुशोभितम् ॥ ६ ॥ विस्तीर्णं धूपितं धूपैः स्नानार्थं रामकृष्णयोः ॥ सितवस्त्रैःपरिच्छन्नं मुक्ताहारावलम्बितम् ॥ ७ ॥ तत्र नानाविधैर्वाद्यैः कृष्णं नीलाम्बरं द्विजाः ॥ मध्ये सुभद्रां चाऽऽस्थाप्य जयमङ्गलनिस्वनैः ॥ ८ ॥ ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्चान्यैश्च जातिभिः ॥ अनेकशतसाहस्रैर्वृतं स्त्रीपुरुषैर्द्विजाः ॥ ९ ॥ गृहस्थाः स्नातकाश्चैव यतयो ब्रह्मचारिणः ॥ स्नापयन्ति तदा कृष्णं मञ्चस्थं सहलायुधम् ॥ १० ॥ तथा समस्ततीर्थानि पूर्वोक्तानि द्विजोत्तमाः ॥ स्वोदकैः पुष्पमिश्रैश्च स्नापयन्ति पृथक्पृथक् ॥ ११ ॥ पश्चात्पटहशङ्खाद्यैर्भेरीमुरजनिस्वनैः ॥ काहलैस्तालशब्दैश्च मृदङ्गैर्झर्झरैस्तथा ॥ १२ ॥ अन्यैश्च विविधैर्वाद्यैर्घण्टास्वनविभूषितैः ॥ स्त्रीणां मङ्गलशब्दैश्च मुनिसंघैर्मनोहरैः ॥ १३ ॥ जयशब्दैस्तथा स्तोत्रैर्वीणावेणुनिनादितैः ॥ श्रूयते सुमहाञ्शब्दः सागरस्येव गर्जतः ॥ १४ ॥ मुनीनां वेदशब्देन मन्त्रशब्दैस्त

थाऽपरैः ॥ नानास्तोत्ररवैः पुण्यैः सामशब्दोपबृंहितैः ॥ १५ ॥ यतिभिः स्नातकैश्चैव गृहस्थैर्ब्रह्मचारिभिः ॥ स्नानकाले सुरश्रेष्ठ स्तुवन्ति परया
मुदा ॥ १६ ॥ श्यामैर्वेश्याजनैश्चैव कुचभारावनामिभिः ॥ पीतरक्ताम्बरैश्चैव माल्यदामावनामिभिः ॥ १७ ॥ सरत्नैःकुण्डलैर्दिव्यैः सुवर्णस्तवका
न्वितैः ॥ चामरै रत्नदण्डैश्च वीज्येते रामकेशवौ ॥ १८ ॥ यक्षविद्याधरैः सिद्धैः किंनरैश्चाप्सरोगणैः ॥ परिवार्याम्बरगतैर्देवगन्धर्वचारणैः ॥ १९ ॥
आदित्या वसवो रुद्राः साध्या विश्वे मरुद्गणाः॥ लोकपालास्तथा चान्ये स्तुवन्ति पुरुषोत्तमम् ॥२०॥ नमस्ते देवदेवेश पुराण पुरुषोत्तम ॥ सर्गस्थि
त्यन्तकृद्देव लोकनाथ जगत्पते ॥ २१ ॥ त्रैलोक्यधारिणं देवं ब्रह्मण्यं मोक्षकारणम् ॥ तं नमस्यामहे भक्त्या सर्वकामफलप्रदम् ॥ २२ ॥ स्तुत्वैवं
विबुधाः कृष्णं रामं चैव महाबलम् ॥ सुभद्रां च मुनिश्रेष्ठास्तदाऽऽकाशे व्यवस्थिताः ॥ २३ ॥ गायन्ति देवगन्धर्वा नृत्यन्त्यप्सरसस्तथा ॥ देवतू
र्याण्यवाद्यन्त वाता वान्ति सुशीतलाः ॥ २४ ॥ पुष्पमिश्रं तदा मेघा वर्षन्त्याकाशगोचराः ॥ जयशब्दं च कुर्वन्ति मुनयः सिद्धचारणाः ॥ २५ ॥
शक्राद्या विबुधाः सर्वे ऋषयः पितरस्तथा प्रजानां पतयो नागा ये चान्ये स्वर्गवासिनः ॥ २६ ॥ ततो मङ्गलसंभारैर्विधिमन्त्रपुरस्कृतम् ॥ आ
भिषेचनिकं द्रव्यं गृहीत्वा देवतागणाः ॥ २७ ॥ इन्द्रो विष्णुर्महावीर्यः सूर्याचन्द्रमसौ तथा ॥ धाता चैव विधाता च तथा चैवानिलानलौ ॥
॥ २८ ॥ पूषा भगोऽर्यमा त्वष्टा अंशुनैव विवस्वता ॥ पत्नीभ्यां सहितो धीमान्मित्रेण वरुणेन च ॥२९॥ रुद्रैर्वसुभिरादित्यैरश्विभ्यां च वृतः प्रभुः ॥
विश्वेदेवैर्मरुद्भिश्च साध्यैश्च पितृभिः सह ॥ ३० ॥ गन्धर्वैरप्सरोभिश्च यक्षराक्षसपन्नगैः ॥ देवर्षिभिरसंख्येयैस्तथा ब्रह्मर्षिभिर्वरैः ॥ ३१ ॥
वैखानसैर्वालखिल्यैर्वाय्वाहारैर्मरीचिपैः ॥ भृगुभिश्चाङ्गिरोभिश्च यतिभिश्च महात्मभिः ॥ ३२ ॥ तथा विद्याधरैः पुण्यैर्योगसिद्धिभिरावृतः ॥
पितामहः पुलस्त्यश्च पुलहश्च महातपाः ॥ ३३ ॥ अङ्गिराः काश्यपोऽत्रिश्च मरीचिर्भृगुरेव च ॥ क्रतुर्हरः प्रचेताश्च मनुर्दक्षस्तथैव च ॥ ३४ ॥
ऋतवश्च ग्रहाश्चैव ज्योतींषि च द्विजोत्तमाः ॥ मूर्तिमत्यश्च सरितो देवाश्चैव सनातनाः ॥ ३५ ॥ समुद्राश्च ह्रदाश्चैव तीर्थानि विविधानि च ॥
पृथिवी द्यौर्दिशश्चैव पादपाश्च द्विजोत्तमाः ॥ ३६ ॥ अदितिर्देवमाता च ह्रीः श्रीः स्वाहा सरस्वती ॥ उमा शची सिनीवाली तथा चानुमतिः
कुहूः ॥ ३७ ॥ राका च धिषणा चैव पत्न्यश्चान्या दिवौकसाम् ॥ हिमवांश्चैव विन्ध्यश्च मेरुश्चानेकशृङ्गवान् ॥ ३८ ॥ ऐरावतः सानुचरः कलाः
काष्ठास्तथैव च ॥ मासार्धं मासऋतवस्तथा रात्र्यहनी द्विजाः ॥ ३९ ॥ उच्चैःश्रवा हयश्रेष्ठो नागराजश्च वामनः ॥ अरुणो गरुडश्चैव वृक्षाश्चौ
षधिभिः सह ॥ ४० ॥ धर्मश्च भगवान्देवः समाजग्मुर्हि संगताः॥ कालो यमश्च मृत्युश्च यमस्यानुचराश्च ये ॥ ४१ ॥ बहुलत्वाच्च नोक्ता ये विविधा

देवतागणाः ॥ ते देवस्याभिषेकार्थं समायान्ति ततस्ततः ॥ ४२ ॥ गृहीत्वा ते तदा विप्राः सर्वे देवा दिवौकसः ॥ आभिषेचनिकं भांडं मङ्गलानि च सर्वशः ॥ ४३ ॥ दिव्यसंभारसंयुक्तैः कलशैः काञ्चनैर्द्विजाः ॥ सारस्वतीभिः पुण्याभिर्दिव्यतोयाभिरेव च ॥ ४४ ॥ तोयेनाऽऽकाशगङ्गायाः कृष्णं रामेण संगतम् ॥ सपुष्पैः काञ्चनैः कुम्भैः स्नापयन्त्यम्बरे स्थिताः ॥ ४५ ॥ संचरन्ति विमानानि देवानामम्बरे तथा ॥ उच्चावचानि दिव्यानि कामगानि स्थिराणि च ॥ ४६ ॥ दिव्यरत्नविचित्राणि सेवितान्यप्सरोगणैः ॥ गीतैर्वाद्यैः पताकाभिः शोभितानि समन्ततः ॥ ४७ ॥ एवं तदा मुनिश्रेष्ठाः कृष्णं रामेण संगतम् ॥ स्नापयित्वा सुभद्रां च संस्तुवन्ति मुदाऽन्विताः ॥ ४८ ॥ जय जय लोकपाल भक्तरक्षक जय जय प्रणतवत्सल जय जय भूतशरण जय जयाऽऽदिदेव बहुकारण जय जय वासुदेव जय जयासुरसंहरण जय जय दिव्यमीन जय जय त्रिदशवर जय जय जलधिशयन जय जय योगिवर जय जय सूर्यनेत्र जय जय देवराज जय जय कैटभारे जय जय वेदवर जय जय कूर्मरूप जय जय यज्ञवर जय जय कमलनाभ जय जय शैलचर जय जय योगशायिञ्जय जय वेगधर जय जय विश्वमूर्ते जय जय चक्रधर जय जय भूतनाथ जय जय धरणीधर जय जय शेषशायिञ्जय जय पीतवासो जय जय सोमकान्त जय जय योगवास जय जय दहनवक्त्र जय जय धर्मवास जय जय गुणनिधान जय जय श्रीनिवास जय जय गरुडगमन जय जय सुखनिवास जय जय धर्मकेतो जय जय महीनिवास जय जय गहनचरित्र जय जय योगिगम्य जय जय मखनिवास जय जय वेदवेद्य जय शान्तिकर जय जय योगिचिन्त्य जय जय पुष्टिकर जय जय ज्ञानमूर्ते जय जय कमलाकर जय जय भाववेद्य जय जय मुक्तिकर जय जय विमलदेह जय जय सत्त्वनिलय जय जय गुणसमृद्ध जय जय यज्ञकर जय जय गुणविहीन जय जय मोक्षकर जय जय भूशरण्य जय जय कान्तियुत जय जय लोकशरण जय जय लक्ष्मीयुत जय जय पङ्कजाक्ष जय जय सृष्टिकर जय जय योगयुत जय जयातसीकुसुमश्यामदेह जय जय समुद्राविष्टदेह जय जय लक्ष्मीपङ्कजषट्चरण जय जय भक्तवश जय जय लोककांन्त जय जय परमशान्त जय जय परमसार जय जय चक्रधर जय जय भोगियुत जय जय नीलाम्बर जय जय शान्तिकर जय जय मोक्षकर जय जय कलुषहर जय जय कृष्ण जगन्नाथ जय जय संकर्षणानुज जय जय पद्मपलाशाक्ष जय जय वाञ्छाफलप्रद जय जय मालावृतोरस्क जय जय चक्रगदाधर जय जय पद्मालयाकान्त जय जय विष्णो नमोऽस्तु ते ॥४९॥ ॥ ब्रह्मोवाच ॥ एवं स्तुत्वा तदा देवाः शक्राद्या हृष्टमानसाः ॥ सिद्धचारणसंघाश्च ये चान्ये स्वर्गवासिनः ॥५०॥ मुनयो वालखिल्याश्च कृष्णं रामेण संगतम् ॥ सुभद्रां च मुनिश्रेष्ठाः प्रणिपत्याम्बरे स्थिताः ॥ ५१ ॥ दृष्ट्वा स्तुत्वा नमस्कृत्वा तदा ते त्रिदिवौकसः ॥ कृष्णं





रामं सुभद्रां च यान्ति स्वं स्वं निवेशनम् ॥५२॥ संचरन्ति विमानानि देवानामम्बरे तदा ॥ उच्चावचानि दिव्यानि कामगानि स्थिराणि च ॥५३॥ दिव्य रत्नविचित्राणि सेवितान्यप्सरोगणैः ॥ गीतैर्वाद्यैः पताकाभिः शोभितानि समन्ततः ॥५४॥ तस्मिन्काले तु ये मर्त्याः पश्यन्ति पुरुषोत्तमम् ॥ बलभद्रं सुभद्रां च ते यान्ति पदमव्ययम्॥५५॥सुभद्रारामसहितं मञ्चस्थं पुरुषोत्तमम् ॥ दृष्ट्वा निरामयं स्थानं यान्ति नास्त्यत्र संशयः॥५६॥ कपिलाशतदानेन यत्फलं पुष्करे स्मृतम् ॥ तत्फलं कृष्णमालोक्य मञ्चस्थं सहलायुधम्॥सुभद्रां च मुनिश्रेष्ठाः प्राप्नोति शुभकृन्नरः॥५७॥कन्याशतप्रदानेन यत्फलं समुदाहृतम् ॥ तत्फलं कृष्णमालोक्य मञ्चस्थं लभते नरः॥५८॥ सुवर्णशतनिष्काणां दानेन यत्फलं स्मृतम्॥तत्फलं कृष्णमालोक्य मञ्चस्थं लभते नरः ॥५९॥ गोसहस्रप्रदानेन यत्फलं परिकीर्तितम् ॥ तत्फलं कृष्णमालोक्य मञ्चस्थं लभते नरः ॥ ६० ॥ भूमिदानेन विधिवद्यत्फलं समुदाहृतम् ॥ तत्फलं कृष्णमालोक्य मञ्चस्थं लभते नरः ॥ ६१ ॥ यत्फल चान्नदानेन अर्घातिथ्येन कीर्तितम् ॥ तत्फलं कृष्णमालोक्य मञ्चस्थं लभते नरः ॥ ६२ ॥ वृषोत्सर्गेण विधिवद्यत्फलं समुदाहृतम् ॥ तत्फल कृष्णमालोक्य मञ्चस्थं लभते नरः ॥ ६३ ॥ यत्फलं तोयदानेन ग्रीष्मे वाऽन्यत्र कीर्तितम् ॥ तत्फलं कृष्णमालोक्य मञ्चस्थं लभते नरः ॥ ६४ ॥ तिलधेनुप्रदानेन यत्फलं परिकीर्तितम् ॥ तत्फलं कृष्णमालोक्य मञ्चस्थं लभते नरः ॥ ६५ ॥ गजाश्वरथदानेन यत्फलं समुदाहृतम् ॥ तत्फलं कृष्णमालोक्य मञ्चस्थं लभते नरः ॥ ६६ ॥ सुवर्णशृङ्गीदानेन यत्फलं समुदाहृतम् ॥ तत्फलं कृष्णमालोक्य मञ्चस्थं लभते नरः ॥६७॥ जलधेनुप्रदानेन यत्फलं समुदाहृतम् ॥ तत्फलं कृष्णमालोक्य मञ्चस्थं लभते नरः ॥ ६८ ॥ दानेन घृतधेन्वाश्च फलं यत्समुदाहृतम् ॥ तत्फलं कृष्णमालोक्य मञ्चस्थं लभते नरः ॥ ६९ ॥ चान्द्रायणेन चीर्णेन यत्फलं समुदाहृतम् ॥ तत्फलं कृष्णमालोक्य पञ्चस्थं लभते नरः ॥७०॥ मासोपवासैर्विधिवद्यत्फलं समुदाहृतम् ॥ तत्फलं कृष्णमालोक्य मञ्चस्थं लभते नरः ॥ ७१ ॥ अथ किं बहुनोक्तेन भाषितेन पुनःपुनः ॥ तस्य देवस्य माहात्म्यं मञ्चस्थस्य द्विजोत्तमाः ॥ ७२ ॥ यत्फलं सर्वतीर्थेषु व्रतैर्दानैश्च कीर्तितम् ॥ तत्फलं कृष्णमालोक्य मञ्चस्थं सहलायुधम् ॥ ७३ ॥ सुभद्रां च मुनिश्रेष्ठाः प्राप्नोति शुभकृन्नरः ॥ तस्मान्नरोऽथवा नारी पश्येत्तं पुरुषोत्तमम् ॥ ७४ ॥ ततः समस्ततीर्थानां लभेत्स्नानादिकं फलम् ॥ स्नानशेषेण कृष्णस्य तोयेनाऽऽत्माऽभिषिच्यते ॥ ७५ ॥ वन्ध्या मृतप्रजा या तु दुर्भगा ग्रहपीडिता ॥ राक्षसाद्यैर्गृहीता वा तथा रोगैश्च संहताः ॥ ७६ ॥ सद्यस्ताः स्नानशेषेण उदकेनाभिषेचिताः ॥ प्राप्नुवन्तीप्सितान्कामान्यान्यान्वाञ्छन्ति चेप्सितान् ॥ ७७ ॥ पुत्रार्थिनी लभेत्पुत्रान्सौभाग्यं च सुखार्थिनी ॥ रोगार्ता मुच्यते रोगाद्धनं च धनका

रुक्मिणी ॥ ७८ ॥ पुण्यानि यानि तोयानि तिष्ठन्ति धरणीतले ॥ तानि स्नानावशेषस्य कलां नार्हन्ति षोडशीम् ॥ ७९ ॥ तस्मात्स्नानावशेषं यत्कृष्णस्य सलिलं द्विजाः ॥ तेनाभिषिञ्चेद्गात्राणि सर्वकामप्रदं हि तत् ॥ ८० ॥ स्नातं पश्यन्ति ये कृष्णं व्रजन्तं दक्षिणामुखम् ॥ ब्रह्महत्यादिभिः पापैर्मुच्यन्ते ते न संशयः ॥ ८१ ॥ शास्त्रेषु यत्फलं प्रोक्तं पृथिव्यास्त्रिप्रदक्षिणैः ॥ दृष्ट्वा नरो लभेत्कृष्णं व्रजन्तं दक्षिणामुखम् ॥ ८२ ॥ तीर्थयात्राफलं यत्तु पृथिव्यां समुदाहृतम् ॥ दृष्ट्वा नरो लभेत्कृष्णं तत्फलं दक्षिणामुखम् ॥ ८३ ॥ बदर्यां यत्फलं प्रोक्तं दृष्ट्वा नारायणं नरम् ॥ दृष्ट्वा नरो लभेत्कृष्णं तत्फलं दक्षिणामुखम् ॥ ८४ ॥ गङ्गाद्वारे कुरुक्षेत्रे स्नानदानेन यत्फलम् ॥ दृष्ट्वा नरो लभेत्कृष्णं तत्फलं दक्षिणामुखम् ॥ ८५ ॥ प्रयागे च महामाघ्यां यत्फलं समुदाहृतम् ॥ दृष्ट्वा नरो लभेत्कृष्णं तत्फलं दक्षिणामुखम् ॥ ८६ ॥ शालग्रामे महाचैत्र्यां स्नानदानेन यत्फलम् ॥ दृष्ट्वा नरो लभेत्कृष्णं तत्फलं दक्षिणामुखम् ॥ ८७ ॥ महाभिधानकार्तिक्यां पुष्करे यत्फलं स्मृतम् ॥ दृष्ट्वा नरो लभेत्कृष्णं तत्फलं दक्षिणामुखम् ॥ ॥ ८८ ॥ यत्फलं स्नानदानेन गङ्गासागरसंगमे ॥ दृष्ट्वा नरो लभेत्कृष्णं तत्फलं दक्षिणामुखम् ॥ ८९ ॥ ग्रस्ते सूर्ये कुरुक्षेत्रे स्नानदानेन यत्फलम् ॥ दृष्ट्वा नरो लभेत्कृष्णं तत्फलं दक्षिणामुखम् ॥९० ॥ गंगायां सर्वतीर्थेषु यामुनेषु च भो द्विजाः ॥ सारस्वतेषु तीर्थेषु तथाऽन्येषु सरःसु च ॥९१॥ यत्फलं स्नानदानेन विधिवत्समुदाहृतम् ॥ दृष्ट्वा नरो लभेत्कृष्णं तत्फलं दक्षिणामुखम् ॥ ९२ ॥ पुष्करे चाथ तीर्थेषु गये चामरकण्टके ॥ नामिषादिषु तीर्थेषु क्षेत्रेष्वायतनेषु च ॥ ९३ ॥ यत्फलं स्नानदानेन राहुग्रस्ते दिवाकरे ॥ दृष्ट्वा नरो लभेत्कृष्णं तत्फलं दक्षिणामुखम् ॥ ९४ ॥ अथ किं पुनरुक्तेन भाषितेन पुनः पुनः ॥ यत्किंचित्कथितं चात्र फलं पुण्यस्य कर्मणः ॥ ९५ ॥ वेदे शास्त्रे पुराणे च भारते च द्विजोत्तमाः ॥ धर्मशास्त्रेषु सर्वेषु तथाऽन्यत्र मनीषिभिः ॥ ९६ ॥ दृष्ट्वा नरो लभेत्कृष्णं नारी वा सहलायुधम् ॥ तत्फलं भद्रया सार्धं व्रजन्तं दक्षिणामुखम् ॥९७ ॥ इति श्रीब्रह्मपुराणे स्वयंभ्वृषिसंवादे कृष्णस्नानमाहात्म्यवर्णनं नाम द्विषष्टितमोऽध्यायः ॥६२ ॥ ॥ ब्रह्मोवाच ॥ गुंडिकामण्डपं यान्तं ये पश्यन्ति रथे स्थितम् ॥ कृष्णं बलं सुभद्रां च ते यान्ति भवनं हरेः ॥ १ ॥ ये पश्यन्ति तदा कृष्णं सप्ताहं मण्डपे स्थितम् ॥ हलिनं च सुभद्रां च विष्णुलोकं व्रजन्ति ते ॥ २ ॥ ॥ मुनय ऊचुः ॥ केन सा निर्मिता यात्रा गुंडिकामंडपे शुभे ॥ यात्राफलं च किं तत्र प्राप्यते ब्रूहि मानवैः ॥ ३ ॥ किमर्थं सरसस्तीरे राजंस्तस्य जगत्पतिः ॥ पवित्रे विजने देशे गत्वा तत्र च मण्डपे ॥ ४ ॥ कृष्णः संकर्षणश्चैव सुभद्रा वा रथेन ते ॥ स्वस्थानं संपरित्यज्य सप्तरात्रं वसन्ति च ॥ ५ ॥ ॥ ब्रह्मोवाच ॥ इन्द्रद्युम्नेन भो विप्राः पुरा वै प्रार्थितो हरिः ॥ सप्ताहं सरसस्तीरे मम यात्रा भव

त्विति ॥ ६ ॥ गुंडिका नाम देवेश भुक्तिमुक्तिफलप्रदा ॥ तस्मै किल वरं चासौ देवेशः पुरुषोत्तमः ॥ ७ ॥ ॥ श्रीभगवानुवाच ॥ सप्ताहं सरसस्तीरे तव राजन्भविष्यति ॥ गुंडिका नाम यात्रा मे सर्वकामफलप्रदा ॥ ८ ॥ ये मां तत्रार्चयिष्यन्ति श्रद्धया मण्डपे स्थितम् ॥ संकर्षणं सुभद्रां च विधिवत्सुसमाहिताः ॥ ९ ॥ ब्राह्मणाः क्षत्रिया वैश्याः स्त्रियः शूद्राश्च वै नृप ॥ पुष्पैर्गन्धैस्तथा धूपैर्दीपैर्नैवेद्यकैर्वरैः ॥ १० ॥ उपहारैर्बहुविधैः प्रणिपातैः प्रदक्षिणैः ॥ जयशब्दैस्तथा स्तोत्रैर्गीतैर्वाद्यैर्मनोहरैः ॥ ११ ॥ न तेषां दुर्लभं किंचित्फलं यस्य यदीप्सितम् ॥ भविष्यति नृपश्रेष्ठ मत्प्रसादादसंशयम् ॥ १२ ॥ ॥ ब्रह्मोवाच ॥ एवमुक्त्वा तु तं देवस्तत्रैवान्तरधीयत ॥ स तु राजवरः श्रीमान्कृतकृत्योऽभवत्तदा ॥ १३ ॥ तस्मात्सर्वप्रयत्नेन गुंडिकायां द्विजोत्तमाः ॥ सर्वकामप्रदं देवं पश्येत्तं पुरुषोत्तमम् ॥ १४ ॥ अपुत्रो लभते पुत्रान्निर्धनो लभते धनम् ॥ रोगाच्च मुच्यते रोगी कन्या प्राप्नोति सत्पतिम् ॥ १५ ॥ आयुः कीर्तिं यशो मेधां बलं विद्यां धृतिं पशून् ॥ नरः संततिमाप्नोति रूपयौवनसंपदम् ॥ १६ ॥ यान्यान्समीहते भोगान्दृष्ट्वा तं पुरुषोत्तमम् ॥ नरो वाऽप्यथवा नारी तांस्तान्प्राप्नोत्यसंशयम् ॥ १७ ॥ यात्रां कृत्वा गुंडिकाख्यां विधिवत्सुसमाहितः ॥ आषाढस्य सिते पक्षे नरो योषिदथापि वा ॥ १८ ॥ दृष्ट्वा कृष्णं च रामं च सुभद्रां च द्विजोत्तमाः ॥ दशपञ्चाश्वमेधानां फलं प्राप्नोति चाधिकम् ॥ १९ ॥ सप्तावरान्सप्त परान्वंशानुद्धृत्य चाऽऽत्मनः ॥ कामगेन विमानेन सर्वरत्नैरलंकृतः ॥ २० ॥ गन्धर्वैरप्सरोभिश्च सेव्यमानो यथोत्तरैः ॥ रूपवान्सुभगः शूरो नरो विष्णुपुरं व्रजेत् ॥ २१ ॥ तत्र भुक्त्वा वरान्भोगान्यावदाभूतसंप्लवम् ॥ सर्वकामसमृद्धात्मा जरामरणवर्जितः ॥ २२ ॥ पुण्यक्षयादिहाऽऽगत्य चतुर्वेदी द्विजो भवेत् ॥ वैष्णवं योगमास्थाय ततो मोक्षमवाप्नुयात् ॥ २३ ॥ इति श्रीब्रह्मपुराणे स्वयंभुऋषिसंवादे गुंडिकायात्रामाहात्म्यनिरूपणं नाम त्रिषष्टितमोऽध्यायः ॥ ६३ ॥ ॥ मुनय ऊचुः ॥ एकैकस्यास्तु यात्रायाः फलं ब्रूहि पृथक्पृथक् ॥ यत्प्राप्नोति नरः कृत्वा नारी वा तत्र संयता ॥ १ ॥ ॥ ब्रह्मोवाच ॥ प्रतियात्राफलं विप्राः शृणुध्वं गदतो मम ॥ यत्प्राप्नोति नरः कृत्वा तस्मिन्क्षेत्रे सुसंयतः ॥ २ ॥ गुंडिकायां तथोत्थाने फाल्गुन्यां विषुवे तथा ॥ यात्रां कृत्वा विधानेन दृष्ट्वा कृष्णं प्रणम्य च ॥ ३ ॥ संकर्षणं सुभद्रां च लभेत्सर्वत्र वै फलम् ॥ नरः पृथग्विष्णुलोके यावदिन्द्राश्चतुर्दश ॥ ४ ॥ यावद्यात्रां ज्येष्ठमासे करोति विधिवन्नरः ॥ तावत्कल्पं विष्णुलोके सुखं भुंक्ते न संशयः ॥ ५ ॥ तस्मिन्क्षेत्रवरे पुण्ये रम्ये श्रीपुरुषोत्तमे ॥ भुक्तिमुक्तिप्रदे नृणां सर्वसत्त्वसुखावहे ॥ ६ ॥ ज्येष्ठे यात्रां नरः कृत्वा नारी वा संयतेन्द्रियः ॥ यथोक्तेन विधानेन दश द्वे च समाहितः ॥७॥ प्रतिष्ठां कुरुते यस्तु शाठ्यदम्भविवर्जितः ॥ स भुक्त्वा विविधान्भोगान्मोक्षं चान्ते लभे

न्नरः ॥ ८ ॥ ॥ मुनय ऊचुः ॥ श्रोतुमिच्छामहे देव प्रतिष्ठां वदतस्तव ॥ विधानं चार्चनं दान फलं तत्र जगत्पतेः ॥ ९ ॥ ॥ ब्रह्मोवाच ॥ शृणुध्वं मुनिशार्दूलाः प्रतिष्ठां विधिचोदिताम् ॥ यां कृत्वा तु नरो भक्त्या नारी वा लभते फलम् ॥ १० ॥ यात्रा द्वादश संपूर्णा यदा स्युस्तु द्विजोत्तमाः ॥ तदा कुर्वीत विधिवत्प्रतिष्ठां पापनाशिनीम् ॥११॥ ज्येष्ठे मासि सिते पक्षे त्वेकादश्यां समाहितः ॥ गत्वा जलाशयं पुण्यमाचान्तः प्रयतः शुचिः ॥ ॥ १२ ॥ आवाह्य सर्वतीर्थानि ध्यात्वा नारायणं तथा ॥ ततः स्नानं प्रकुर्वीत विधिवत्सुसमाहितः ॥ १३ ॥ यस्य यो विधिरुद्दिष्ट ऋषिभिः स्नान कर्मणि ॥ तेनैव तु विधानेन स्नानं तस्य विधीयते ॥ १४ ॥ स्नात्वा सम्यग्विधानेन ततो देवानृषीन्पितन् ॥ संतर्पयेत्तथाऽन्यांश्च नामगोत्रविधानवित् ॥ १५ ॥ उत्तीर्य वाससी धौते निर्मले परिधाय वै ॥ उपस्पृश्य विधानेन भास्कराभिमुखे स्थितः ॥ १६ ॥ गायत्रीं पावनीं देवीं मनसा वेदमातरम् ॥ सर्वपापहरां पुण्यां जपेदष्टोत्तरं शतम् ॥ १७ ॥ पुण्यांश्च सौरमन्त्रांश्च श्रद्धया सुसमाहितः ॥ त्रिः प्रदक्षिणमावृत्य भास्करं प्रणमेत्ततः ॥ १८ ॥ वेदोक्तं त्रिषु वर्णेषु स्नानं जाप्यमुदाहृतम् ॥ स्त्रीशूद्रयोः स्नानजाप्यं वेदोक्तविधिवर्जितम् ॥ १९ ॥ ततो गच्छेद्गृहं मौनी पूजयेत्पुरुषोत्तमम् ॥ प्रक्षाल्य हस्तौ पादौ च उपस्पृश्य यथाविधि ॥ २० ॥ घृतेन स्नापयेद्देवं क्षीरेण तदनन्तरम् ॥ मधुगन्धोदकेनैव तीर्थचन्दनवारिणा ॥ २१ ॥ ततो वस्त्रयुगं श्रेष्ठं भक्त्या तं परिधापयेत् ॥ चन्दनागरुकर्पूरैः कुंकुमेन विलेपयेत् ॥ २२ ॥ पूजयेत्परया भक्त्या पद्मैश्च पुरुषोत्तमम् ॥ अन्यैश्च वैष्णवैः पुष्पैरर्चयेन्मल्लिकादिभिः ॥ २३ ॥ संपूज्यैवं जगन्नाथं भुक्तिमुक्तिप्रदं हरिम् ॥ धूपं चागुरुसंयुक्तं दहेद्देवस्य चाग्रतः ॥ २४ ॥ गुग्गुलं वा मुनिश्रेष्ठा दहेद्गन्धसमन्वितम् ॥ दीपं प्रज्वालयेद्भक्त्या यथाशक्ति घृतेन वै ॥ २५ ॥ अन्यांश्च दीपकान्दद्याद्द्वादशैव समाहितः ॥ घृतेन च मुनिश्रेष्ठास्तिलतैलेन वा पुनः ॥ २६ ॥ नैवेद्ये पायसापूपशष्कुलीवटकं तथा ॥ मोदकं फाणितं वाऽल्पं फलानि च निवेदयेत् ॥ २७ ॥ एवं पञ्चोपचारेण संपूज्य पुरुषोत्तमम् ॥ ॐ नमः पुरुषोत्तमायेति जपेदष्टोत्तरं शतम् ॥ २८ ॥ ततः प्रसादयेद्देवं भक्त्या तं पुरुषोत्तमम् ॥ नमस्ते सर्वलोकेश भक्तानामभयप्रद ॥ २९ ॥ संसारसागरे मग्नं त्राहि मां पुरुषोत्तम ॥ यास्ते मया कृता यात्रा द्वादशैव जगत्पते ॥ ३० ॥ प्रसादात्तव गोविन्द संपूर्णास्ता भवन्तु मे ॥ एव प्रसाद्य तं देवं दण्डवत्प्रणिपत्य च ॥ ३१ ॥ ततोऽर्चयेद्गुरुं भक्त्या पुष्पवस्त्रानुलेपनैः ॥ नानयोरन्तरं यस्माद्दृश्यते मुनिसत्तमाः ॥ ३२ ॥ देवस्योपरि कुर्वीत श्रद्धया सुसमाहितः ॥ नानापुष्पैर्मुनिश्रेष्ठा विचित्रं पुष्पमण्डपम् ॥ ३३ ॥ कृत्वावधारणं पश्चाज्जागरं कारयेन्निशि ॥ कथां च वासुदेवस्य गीतिकां चापि कारयेत् ॥ ३४ ॥ ध्यायन्पठन्स्तुवन्देवं प्रणयेद्रजनीं बुधः ॥ ततः प्रभाते विमले द्वाद





श्यां द्वादशैव तु ॥ ३५ ॥ निमन्त्रयेद्व्रतस्नातान्ब्राह्मणान्वेदपारगान् ॥ इतिहासपुराणज्ञाञ्छ्रोत्रियान्संयतेन्द्रियान् ॥ ३६ ॥ स्नात्वा सम्यग्विधाने न धौतवासा जितेन्द्रियः ॥ स्नापयेत्पूर्ववद्भक्त्या ततस्तं पुरुषोत्तमम् ॥ ३७ ॥ गन्धैः पुष्पैरुपाहारैर्नैवेद्यैर्दीपकैस्तथा ॥ उपचारैर्बहुविधैः प्रणिपातैः प्रदक्षिणैः ॥३८॥ जाप्यैः स्तुतिनमस्कारैर्गीतवाद्यैर्मनोहरैः ॥ संपूज्यैवं जगन्नाथं ब्राह्मणान्पूजयेत्ततः ॥ ३९ ॥ द्वादशैव तु गास्तेभ्यो दत्त्वा कनकमेव च छत्रोपानद्युगं चैव श्रद्धाभक्तिपुरःसरः ॥ ४०॥ भक्त्या तु स धनं तेभ्यो दद्याद्वस्त्रादिकं द्विजाः ॥ सद्भावेन तु गोविन्दस्तोष्यते पूजितो यतः ॥४१॥ आचार्याय ततो दद्याद्गोवस्त्रं कनकं तथा ॥ छत्रोपानद्युगं धान्यं कांस्यपात्रं च भक्तितः ॥ ४२ ॥ ततस्तान्भोजयेद्विप्रान्भोज्यं पायसपूर्वकम् ॥ पक्वान्नं भक्ष्यभोज्यं च गुडसर्पिःसमन्वितम् ॥४३॥ ततस्तानन्नतृप्तांश्च ब्राह्मणान्स्वस्थमानसान् ॥ द्वादशैवोदकुम्भांश्च दद्यात्तेभ्यः समोदकान् ॥४४॥ दक्षिणां च यथाशक्ति दद्यात्तेभ्यो विमत्सरः ॥ कुम्भं च दक्षिणां चैव आचार्याय निवेदयेत् ॥ ४५ ॥ एवं संपूज्य तान्विप्रान्गुरुं ज्ञानप्रदायकम् ॥ पूजयेत्परया भक्त्या विष्णुतुल्यं द्विजोत्तमाः ॥ ४६ ॥ सुवर्णवस्त्रगोधान्यैर्द्रव्यैश्चान्यैर्वरैर्बुधः ॥ संपूज्य तं नमस्कृत्य इमं मन्त्रमुदीरयेत् ॥ ४७ ॥ सर्वव्यापी जगन्नाथः शङ्खचक्रगदाधरः ॥ अनादिनिधनो देवः प्रीयतां पुरुषोत्तमः ॥ ४८ ॥ इत्युच्चार्य ततो विप्रांस्त्रिः कृत्वा च प्रदक्षिणाम् ॥ प्रणम्य शिरसा भक्त्या आचार्यं तु विसर्जयेत् ॥ ४९ ॥ ततस्तान्ब्राह्मणान्भक्त्या चाऽऽसीमान्तमनुव्रजेत् ॥ अनुव्रज्य तु तान्सर्वान्नमस्कृत्य विसर्जयेत् ॥ ॥ ५० ॥ बान्धवैः स्वजनैर्युक्तस्ततो भुञ्जीत वाग्यतः ॥ अन्यैश्चोपासकैर्दीनैर्भिक्षुकैश्चान्नकाङ्क्षिभिः ॥ ५१ ॥ एवं कृत्वा नरः सम्यङ्नारी वा लभते फलम् ॥ अश्वमेधसहस्राणां राजसूयशतस्य च ॥ ५२ ॥ अतीतं शतमादाय पुरुषाणां नरोत्तमाः ॥ भविष्यं च शतं विप्राः स्वर्गत्या दिव्यरूपधृक् ॥ ५३ ॥ सर्वलक्षणसंपन्नः सर्वालंकारभूषितः ॥ सर्वकामसमृद्धात्मा देववद्विगतज्वरः ॥ ५४ ॥ रूपयौवनसंपन्नो गुणैः सर्वैरलंकृतः ॥ स्तूयमानोऽप्सरोभिश्च गन्धर्वैः समलंकृतः ॥ ५५ ॥ विमानेनार्कवर्णेन कामगेन स्थिरेण च ॥ पताकाध्वजयुक्तेन सर्वरत्नैरलंकृतः ॥ ५६ ॥ उद्योतयन्दिशः सर्वा आकाशे विगतक्लमः ॥ युवा महाबलो धीमान्विष्णुलोकं स गच्छति ॥ ५७ ॥ तत्र कल्पशतं यावद्भुङ्क्ते भोगान्मनोगतान् ॥ सिद्धाप्सरोभिर्गन्धर्वैः सुरविद्याधरोरगैः ॥ ५८ ॥ स्तूयमानो मुनिवरैस्तिष्ठते विगतज्वरः ॥ यथा देवो जगन्नाथः शङ्खचक्रगदाधरः ॥ ५९ ॥ तथाऽसौ मुदितो विप्राः कृत्वा रूपं चतुर्भुजम् ॥ भुक्त्वा तत्र वरान्भोगान्क्रीडां कृत्वा सुरैः सह ॥ ६० ॥ तदन्ते ब्रह्मभवनमायाति सर्वकामदम् ॥ सिद्धविद्याधरैश्चापि शोभितं सुरकिंनरैः ॥ ६१ ॥ कालं नवतिकल्पं तु तत्र भुक्त्वा सुखं नरः ॥ तस्मादायाति विप्रेन्द्राः सर्वकामफलप्रदम् ॥ ६२ ॥ रुद्रलोकं

सुरगणैः सेवितं सुखमोक्षदम् ॥ अनेकशतसाहस्रैर्विमानैः समलंकृतम् ॥ ६३ ॥ सिद्धविद्याधरैर्यक्षैर्भूषितं दैत्यदानवैः ॥ अशीतिकल्पकालं तु तत्र भुक्त्वा सुखं नरः ॥ ६४ ॥ तदन्ते याति गोलोकं सर्वभोगसमन्वितम् ॥ सुरसिद्धाप्सरोभिश्च भूषितं सुमनोहरम् ॥ ६५ ॥ तत्र सप्ततिकल्पांस्तु भुक्त्वा भोगमनुत्तमम् ॥ दुर्लभं त्रिषु लोकेषु स्वस्थचित्तो यथाऽमरः ॥ ६६ ॥ तस्मादागच्छते लोकं प्राजापत्यमनुत्तमम् ॥ गन्धर्वाप्सरसैः सिद्धै मुनिविद्याधरैर्वृतः ॥ ६७ ॥ षष्टिकल्पान्सुखं तत्र भुक्त्वा नानाविधं मुदा ॥ तदन्ते शक्रभवनं नानाश्चर्यसमन्वितम् ॥ ६८ ॥ गन्धर्वैः किंनरैः सिद्धैः सुरविद्याधरोरगैः ॥ गुह्यकाप्सरसैः साध्यैर्वृतैश्चान्यैः सुरोत्तमैः ॥६९॥ आगत्य तत्र पञ्चाशत्कल्पान्भुक्त्वा सुखं नरः ॥ सुरलोकं ततो गत्वा विमानैः समलंकृतम् ॥ ७० ॥ दुर्लभं पावनं धीमान्देवैः सर्वैरलंकृतम् ॥ चत्वारिंशत्तु कल्पांस्तु भुक्त्वा भोगान्सुदुर्लभान् ॥ आगच्छते ततो लोकं नक्षत्राख्यं सुदुर्लभम् ॥ ७१ ॥ ततो भोगान्वरान्भुङ्क्ते त्रिंशत्कल्पान्यथेप्सितान् ॥ तस्मादागच्छते लोकं शशाङ्कस्य द्विजोत्तमाः ॥ ७२ ॥ यत्रासौ तिष्ठते सोमः सर्वैर्देवैरलंकृतः ॥ तत्र विंशतिकल्पांस्तु भुक्त्वा भोगं सुदुर्लभम् ॥ ७३ ॥ आदित्यस्य ततो लोकमायाति सुरपूजितम् ॥ नानाश्चर्यमयं दिव्यं गन्धर्वाप्सरसैर्वृतम् ॥ ७४ ॥ तत्र भुक्त्वा शुभान्भोगान्दश कल्पान्द्विजोत्तमः ॥ तस्मादायाति भुवनं गन्धर्वाणां सुदुर्लभम् ॥ ७५ ॥ तत्र भोगान्समस्तांश्च कल्पमेकं यथासुखम् ॥ भुक्त्वा चाऽऽयाति मेदिन्यां राजा भवति धार्मिकः ॥ ७६ ॥ चक्रवर्ती महावीर्यो गुणैः सर्वैरलंकृतः ॥ कृत्वा राज्यं स्वधर्मेण यज्ञैरिष्ट्वा सुदक्षिणैः ॥ ७७ ॥ तदन्ते योगिनां लोकं गत्वा मोक्षप्रदं शिवम् ॥ तत्र भुक्त्वा वरान्भोगान्यावदाभूतसंप्लवम् ॥ ॥ ७८ ॥ तस्मादागच्छते चात्र जायते योगिनां कुले ॥ प्रवरे वैष्णवे विप्रा दुर्लभे साधुसंमते ॥ ७९ ॥ चतुर्वेदी विप्रवरो यज्ञैरिष्ट्वाऽऽप्तदक्षिणैः ॥ वैष्णवं योगमास्थाय ततो मोक्षमवाप्नुयात् ॥ ८० ॥ एवं यात्राफलं विप्रा मया सम्यगुदाहृतम् ॥ भुक्तिमुक्तिप्रदं नृणां किमन्यच्छ्रोतुमिच्छथ ॥ ८१ ॥

इति श्रीब्रह्मपुराणे स्वयंभूऋषिसंवादे द्वादशयात्राफलमाहात्म्यनिरूपणं नाम चतुःषष्टितमोऽध्यायः ॥ ६४ ॥ ॥ मुनय ऊचुः ॥ श्रोतुमिच्छामहे देव विष्णुलोकमनामयम् ॥ लोकानन्दकरं कान्तं सर्वाश्चर्यसमन्वितम् ॥ १ ॥ प्रमाणं तस्य लोकस्य भोगं कान्तिं बलं प्रभो ॥ कर्मणा केन गच्छन्ति तत्र धर्मपरा नराः ॥ २ ॥ दर्शनात्स्पर्शनाद्वाऽपि तीर्थस्नानादिनाऽपि वा ॥ विस्तराद्ब्रूहि तत्त्वेन परं कौतूहलं हि नः ॥ ३ ॥ ॥ ब्रह्मोवाच ॥ शृणुध्वं मुनयः सर्वे यत्परं परमं पदम् ॥ भक्तानामीहितं धन्यं पुण्यं संसारनाशनम् ॥ ४ ॥ प्रवरं सर्वलोकानां विष्ण्वाख्यं वदतो मम ॥ सर्वाश्चर्यमयं पुण्यं स्थानं त्रैलोक्यपूजितम् ॥ ५ ॥ अशोकैः पारिजातैश्च मन्दारैश्चम्पकद्रुमैः ॥ मालतीमल्लिकाकुन्दैर्बकुलैर्नागकेसरैः ॥ ६ ॥ पुन्नागैरति





मुक्तैश्च प्रियङ्गुतगरार्जुनैः ॥ पाटलाचूतखदिरैः कर्णिकारवनोज्ज्वलैः ॥ ७ ॥ नारङ्गैः पनसैर्लोध्रैर्निम्बदाडिमसर्जकैः ॥ द्राक्षालकुचखर्जूरैर्मधुकेन्द्रफलद्रुमैः ॥ ८ ॥ कपित्थैर्नारिकेरैश्च तालैः श्रीफलसंभवैः ॥ कल्पवृक्षैरसंख्यैश्च वन्यैरन्यैः सुशोभनैः ॥ ९ ॥ सरलैश्चन्दनैर्नीपैर्देवदारुशुभाञ्जनैः ॥ जातीलवङ्गकङ्कोलैः कर्पूरामोदवासिभिः ॥ १० ॥ ताम्बूलपत्रनिचयैस्तथा पूगीफलद्रुमैः ॥ अन्यैश्च विविधैर्वृक्षैः सर्वर्तुफलशोभितैः ॥ ११ ॥ पुष्पैर्नानाविधैश्चैव लतागुच्छसमुद्भवैः ॥ नानाजलाशयैः पुण्यैर्नानापक्षिरुतैर्वरैः ॥ १२ ॥ दीर्घिकाशतसंघातैस्तोयपूर्णैर्मनोहरैः ॥ कुमुदैः शतपत्रैश्च पुष्पैः कोकनदैर्वरैः ॥ १३ ॥ रक्तनीलोत्पलैः कान्तैः कह्लारैश्च सुगन्धिभिः ॥ अन्यैश्च जलजैः पुष्पैर्नानावर्णैः सुशोभनैः ॥ १४ ॥ हंसकारण्डवाकीर्णैश्चक्रवाकोपशोभितैः ॥ कोयष्टिकैश्च दात्यूहैः कारण्डवरवाकुलैः ॥ १५ ॥ चातकैः प्रियपुत्रैश्च जीवंजीवकजातिभिः ॥ अन्यैर्दिव्यैर्जलचरैःखगैश्चमधुरस्वनैः ॥ १६ ॥ एवं नानाविधैर्दिव्यैर्नानाश्चर्यसमन्वितैः ॥ वृक्षैर्जलाशयैः पुण्यैर्भूषितं सुमनोहरैः ॥ १७ ॥ तत्र दिव्यैर्विमानैश्च नानारत्नविभूषितैः ॥ कामगैः काञ्चनैः शुभ्रैर्दिव्यगन्धर्वनादितैः ॥ १८ ॥ तरुणादित्यसंकाशैरप्सरोभिरलंकृतैः ॥ हेमशय्यासनयुतैर्नानाभोगसमन्वितैः ॥ १९ ॥ खेचरैः सपताकैश्च मुक्ताहारावलम्बिभिः ॥ नानावर्णैऽरसंख्यातैर्जातरूपपरिच्छदैः ॥ २० ॥ नानाकुसुमगन्धाढ्यैश्चन्दनागुरुभूषितैः ॥ सुखप्रचारबहुलैर्नानावादित्रनिःस्वनैः ॥ २१ ॥ मनोमारुततुल्यैश्च किङ्किणीस्तबकाकुलैः ॥ विहरन्ति पुरे तस्मिन्वैष्णवे लोकपूजिते ॥ २२ ॥ नानाङ्गनाभिः सततं गन्धर्वाप्सरसादिभिः ॥ चन्द्राननाभिः कान्ताभिर्योषिद्भिः सुमनोहरैः ॥ २३ ॥ पीनोन्नतकुचाग्राभिः सुमध्याभिः समन्ततः ॥ श्यामावदातवर्णाभिर्मत्तमातङ्गगामिभिः ॥ २४ ॥ परिवार्य नरश्रेष्ठं वीजयन्ति स्म ताः स्त्रियः ॥ चामरै रुक्मदण्डैश्च नानारत्नविभूषितैः ॥ २५ ॥ गीतनृत्यैस्तथा वाद्यैर्मोदमानैर्मदालसैः ॥ यक्षविद्याधरैः सिद्धैर्गन्धर्वैरप्सरोगणैः ॥ २६ ॥ सुरसंघैश्च ऋषिभिः शुशुभे भुवनोत्तमम् ॥ तत्र प्राप्य महाभोगान्प्राप्नुवन्ति मनीषिणः ॥ २७ ॥ वटराजसमीपे तु दक्षिणस्योदधेस्तटे ॥ दृष्टो यैर्भगवान्कृष्णः पुष्कराक्षो जगत्पतिः ॥ २८ ॥ क्रीडन्त्यप्सरसैः सार्धं यावद्द्यौश्चन्द्रतारकम् ॥ प्रतप्तहेमसंकाशा जरामरणवर्जिताः ॥ २९ ॥ सर्वदुःखविहीनाश्च तृष्णाग्लानिविवर्जिताः ॥ चतुर्भुजा महावीर्या वनमालाविभूषिताः ॥ ३० ॥ श्रीवत्सलाञ्छनैर्युक्ताः शङ्खचक्रगदाधराः ॥ केचिन्नीलोत्पलश्यामाः केचित्काञ्चनसंनिभाः ॥ ३१ ॥ केचिन्मरकतप्रख्याः केचिद्वैदूर्यसंनिभाः ॥ श्यामवर्णाः कुण्डलिनस्तथाऽन्ये वज्रसंनिभाः ॥ ३२ ॥ न तादृक्सर्वदेवानां भान्ति लोका द्विजोत्तमाः ॥ यादृग्भाति हरेर्लोकः सर्वाश्चर्यसमन्वितः ॥ ३३ ॥ न तत्र पुनरावृत्तिर्गमनाज्जायते द्विजाः ॥ प्रभावात्तस्य देवस्य यावदाभूतसंप्लवम् ॥ ३४ ॥ विचरन्ति

पुरे दिव्ये रूपयौवनगर्विताः ॥ कृष्णं रामं सुभद्रां च पश्यन्ति पुरुषोत्तमे ॥ ३५ ॥ प्रतप्तहेमसंकाशं तरुणादित्यसंनिभम् ॥ पुरमध्ये हरेर्भाति मन्दिरं रत्नभूषितम ॥ ३६ ॥ अनेकशतसाहस्रैः पताकैः समलंकृतम् ॥ योजनायुतविस्तीण हेमप्राकारवेष्टितम ॥ ३७ ॥ नानावर्णैर्ध्वजैश्चित्रैः कल्पितैः सुमनोहरैः ॥ विभाति शारदीयो हि नक्षत्रैरिव चन्द्रमाः ॥ ३८ ॥ चतुर्द्वारं सुविस्तीर्णं रक्षकैः परिरक्षितम् ॥ पुरसप्तकसंयुक्तं महोत्सेधं मनोहरम् ॥ ३९ ॥ प्रथमं काञ्चनं तत्र द्वितीयं मरकतैर्युतम् ॥ इन्द्रनीलं तृतीयं तु महानीलं ततः परम् ॥ ४० ॥ पुरं तु पञ्चमं दीप्तं पद्मरागमयं पुरम् ॥ षष्ठं वज्रमयं विप्रा वैदूर्यं सप्तमं पुरम् ॥ ४१ ॥ नानारत्नमयैर्हेमप्रवालाङ्कुरशोभितैः ॥ स्तम्भैरद्भुतसंकाशैर्भाति तद्भवनं महत् ॥ ४२ ॥ दृश्यन्ते तत्र सिद्धाश्च भासयन्ति दिशो दश ॥ पौर्णमास्यां सनक्षत्रो यथा भाति निशाकरः ॥ ४३ ॥ आरूढस्तत्र भगवान्सलक्ष्मीको जनार्दनः ॥ पीताम्बरधरः श्यामः श्रीवत्सलक्ष्मसंयुतः ॥ ४४ ॥ ज्वलत्सुदर्शनं चक्रं घोरं सर्वास्त्रनाशनम् ॥ दधार दक्षिणे हस्ते सर्वतेजोमयं हरिः ॥ ॥ ४५ ॥ कुन्देन्दुरजतप्रख्यं हारगोक्षीरसंनिभम् ॥ आदाय तं मुनिश्रेष्ठाः सव्यहस्तेन केशवः ॥ ४६ ॥ यस्य शब्देन सकलं संक्षोभं जायते जगत् ॥ विश्रुतं पाञ्चजन्येति सहस्रावर्तभूषितम्॥४७॥दुष्कृतान्तकरीं रौद्रां दैत्यदानवनाशिनीम् ॥ ज्वलद्वह्निशिखाकारां दुःसहां त्रिदशैरपि ॥४८॥ कौमोदकीं गदां चासौ धृतवान्दक्षिणे करे ॥ वामे विस्फुरति ह्यस्य शार्ङ्गं सूर्यसमप्रभम् ॥ ४९ ॥ शरैरादित्यसंकाशैर्ज्वालामालाकुलैर्वरैः ॥ योऽसौ संहरते देवस्त्रैलोक्यं सचराचरम् ॥ ५० ॥ सर्वानन्दकरः श्रीमान्सर्वशास्त्रविशारदः ॥ सर्वलोकगुरुर्देवः सर्वैर्देवैर्नमस्कृतः ॥ ५१ ॥ सहस्रमूर्धा देवेशः सहस्रचरणेक्षणः ॥ सहस्राख्यः सहस्राङ्गः सहस्रभुजवान्प्रभुः ॥ ५२ ॥ सिंहासनगतो देवः पद्मपत्रायतेक्षणः ॥ विद्युद्विस्पष्टसंकाशो जगन्नाथो जगद्गुरुः ॥ ५३ ॥ परीतः सुरसिद्धैश्च गन्धर्वाप्सरसांगणैः ॥ यक्षविद्याधरैर्नागैर्मुनिसिद्धैः सचारणैः ॥ ५४ ॥ सुपर्णैर्दानवैर्दैत्यै राक्षसैर्गुह्यकिन्नरैः ॥ अन्यैर्देवगणैर्दिव्यैः स्तूयमानो विराजते ॥ ५५ ॥ तत्रस्था सततं कीर्तिः प्रज्ञा मेधा सरस्वती ॥ बुद्धिर्मतिस्तथा क्षान्तिः सिद्धिमूर्तिस्तथा द्युतिः ॥ ५६ ॥ गायत्री चैव सावित्री मङ्गला सर्वमङ्गला ॥ प्रभा मतिस्तथा कान्तिस्तत्र नारायणी स्थिता ॥ ५७ ॥ श्रद्धा च कौशिकी देवी विद्युत्सौदामिनी तथा ॥ निद्रा रात्रिस्तथा माया तथाऽन्याऽमरयोषितः ॥५८॥ वासुदेवस्य सर्वास्ता भवने संप्रतिष्ठिताः ॥ अथ किं बहुनोक्तेन सर्वं तत्र प्रतिष्ठितम् ॥ ५९ ॥ घृताची मेनका रम्भा सहजन्या तिलोत्तमा ॥ उर्वशी चैव निम्लोचा तथाऽन्या वामना परा ॥ ६० ॥ मन्दोदरी च सुभगा विश्वाची विपुलानना ॥ भद्राङ्गी चित्रसेना च प्रम्लोचा सुमनोहरा ॥ ६१ ॥ मुनिसंमोहिनी रामा चन्द्रमध्या शुभानना ॥

सुकेशी नीलकेशा च तथा मन्मथदीपिनी ॥ ६२ ॥ अलम्बुषा मिश्रकेशी तथाऽन्या मुञ्जिकस्थला ॥ क्रतुस्थला वराङ्गी च पूर्वचित्तिस्तथा परा ॥ ६३ ॥ परावती महारूपा शशिलेखा शुभानना ॥ हंसलीलानुगामिन्या मत्तवारणगामिनी ॥ ६४ ॥ बिम्बोष्ठी नवगर्भा च विख्याताः सुरयोषितः ॥ एताश्चान्या अप्सरसो रूपयौवनगर्विताः ॥ ६५ ॥ सुमध्याश्चारुवदनाः सर्वालंकारभूषिताः ॥ गीतमाधुर्यसंयुक्ताः सर्वलक्षणसंयुताः ॥ ॥ ६६ ॥ गीतवाद्ये च कुशलाः सुरगन्धर्वयोषितः ॥ नृत्यन्त्यनुदिनं तत्र यत्रासौ पुरुषोत्तमः ॥ ६७ ॥ न तत्र रोगो नो ग्लानिर्न मृत्युर्न हिमातपौ ॥ न क्षुत्पिपासा न जरा न वैरूप्यं न चासुखम् ॥ ६८ ॥ परमानन्दजननं सर्वकामफलप्रदम् ॥ विष्णुलोकात्परं लोकं नात्र पश्यामि भो द्विजाः ॥ ६९ ॥ ये लोकाः स्वर्गलोके तु श्रूयन्ते पुण्यकर्मणाम् ॥ विष्णुलोकस्य ते विप्राः कलां नार्हन्ति षोडशीम् ॥ ७० ॥ एवं हरेः परं स्थानं सर्वभोगगुणान्वितम् ॥ सर्वसौख्यकरं पुण्यं सर्वाश्चर्यमयं द्विजाः ॥ ७१ ॥ न तत्र नास्तिका यान्ति पुरुषा विषयात्मकाः ॥ न कृतघ्ना न पिशुना नो स्तेना नाजितेन्द्रियाः ॥ ७२ ॥ येऽर्चयन्ति सदा भक्त्या वासुदेवं जगद्गुरुम् ॥ ते तत्र वैष्णवा यान्ति विष्णुलोकं न संशयः ॥ ७३ ॥ दक्षिणस्योदधेस्तीरे क्षेत्रे परमदुर्लभे ॥ दृष्ट्वा कृष्णं च रामं च सुभद्रां च द्विजोत्तमाः ॥ ७४ ॥ कल्पवृक्षसमीपे तु ये त्यजन्ति कलेवरम् ॥ ते तत्र मनुजा यान्ति मृता ये पुरुषोत्तमे ॥ ७५ ॥ वटसागरयोर्मध्ये यः स्मरेत्पुरुषोत्तमम् ॥ तेऽपि तत्र नरा यान्ति ये मृताः पुरुषोत्तमे ॥ ७६ ॥ तेऽपि तत्र परं स्थानं यान्ति नास्त्यत्र संशयः॥एवं मया मुनिश्रेष्ठा विष्णुलोकः सनातनः॥सर्वानन्दकरः प्रोक्तो भुक्तिमुक्तिफलप्रदः॥७७॥ इति श्रीब्रह्मपुराणे स्वयंभ्वृषिसंवादे विष्णुलोकानुकीर्तनं नाम पञ्चषष्टितमोऽध्यायः॥६५॥मुनय ऊचुः॥ बह्वाश्चर्यस्त्वया प्रोक्तो विष्णुलोको जगत्पते ॥ नित्यानन्दकरः श्रीमान्भुक्तिमुक्तिफलप्रदः ॥ १ ॥ क्षेत्रं च दुर्लभं लोके कीर्तितं पुरुषोत्तमम् ॥ त्यक्त्वा यत्र नरो देहं याति सालोक्यतां हरेः ॥ २ ॥ सम्यक्क्षेत्रस्य माहात्म्यं त्वया सम्यक्प्रकीर्तितम् ॥ यत्र स्वदेहसंत्यागाद्विष्णुलोकं व्रजेन्नरः ॥३॥ अहो मोक्षस्य मार्गोऽयं देहत्यागस्त्वयोदितः ॥ नराणामुपकाराय पुरुषाख्ये न संशयः ॥४॥ अनायासेन देवेश देहं त्यक्त्वा नरोत्तमाः॥तस्मिन्क्षेत्रे परं विष्णोः पदं यान्ति निरामयम् ॥५॥ श्रुत्वा क्षेत्रस्य माहात्म्यं विस्मयो नो महानभूत्॥रोमहर्षश्च देवेश सन्तोषश्च पुनः पुनः॥प्रयागपुष्करादीनि क्षेत्राण्यायतनानि च॥६॥पृथिव्यां सर्वतीर्थानि सरितश्च सरांसि च ॥ न तथा तानि सर्वाणि प्रशंससि सुरोत्तम ॥ ७ ॥ यथा प्रशंससि क्षेत्रं पुरुषाख्यं पुनः पुनः ॥ ज्ञातोऽस्माभिरभिप्रायस्तवेदानीं पितामह ॥ ८॥ येन प्रशंससि क्षेत्रं मुक्तिदं पुरुषोत्तमम् ॥ पुरुषाख्यसमं नूनं क्षेत्रं नास्ति महीतले ॥ तेन त्वं विबुधश्रेष्ठ प्रशंससि पुनः पुनः ॥ ९ ॥ ॥ ब्रह्मोवाच॥

सत्यं सत्यं मुनिश्रेष्ठा भवद्भिः समुदाहृतम् ॥ पुरुषाख्यसमं नूनं क्षेत्रं नास्तिमहीतले ॥ १० ॥ सन्ति यानि तु तीर्थानि पुण्यान्यायतनानि च ॥ तानि श्रीपुरुषाख्यस्य कलां नार्हन्ति षोडशीम् ॥ ११ ॥ यथा सर्वेश्वरो विष्णुः सर्वलोकोत्तमोत्तमः ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ १२ ॥ आदित्यानां यथा विष्णुः श्रेष्ठत्वे समुदाहृतः ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ १३ ॥ नक्षत्राणां यथा सोमः सरसां सागरो यथा ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम्॥१४॥वसूनां पावको यद्वद्रुद्राणां शंकरो यथा ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ ॥ १५ ॥ वर्णानां ब्राह्मणो यद्वद्वैनतेयश्च पक्षिणाम् ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ १६ ॥ शिखरिणां यथा मेरुः पर्वतानां हिमालयः ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥१७॥ प्रमदानां यथा लक्ष्मीः सरितां जाह्नवी यथा ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ १८ ॥ ऐरावतो गजेन्द्राणां महर्षीणां भृगुर्यथा ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ १९ ॥ सेनानीनां यथा स्कन्दः सिद्धानां कपिलो यथा ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ २० ॥ उच्चैःश्रवा यथाऽश्वानां कवीनामुशना कविः ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ २१ ॥ मुनीनां च यथा व्यासः कुबेरो यक्षरक्षसाम् ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ २२ ॥ इन्द्रियाणां मनो यद्वद्भूतानामवनी यथा ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ २३ ॥ अश्वत्थः सर्ववृक्षाणां पवनः प्लवतां यथा ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ २४ ॥ भूषणानां तु सर्वेषां यथा चूडामणिर्द्विजाः ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ २५ ॥ गन्धर्वाणां चित्ररथः शस्त्राणां कुलिशो यथा ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ २६ ॥ अकारः सर्ववर्णानां गायत्री छन्दसां यथा ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ २७ ॥ सर्वाङ्गेभ्यो यथा श्रेष्ठमुत्तमाङ्गं द्विजोत्तमाः ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ २८ ॥ अरुन्धती यथा स्त्रीणां सतीनां श्रेष्ठतां गता ॥ तथा समस्ततीर्थानां श्रेष्ठं तत्पुरुषोत्तमम् ॥ २९ ॥ यथा समस्तविद्यानां मोक्षविद्या परा स्मृता ॥ तथा समस्ततीर्थानां श्रेष्ठं तत्पुरुषोत्तमम् ॥ ३० ॥ मनुष्याणां यथा राजा धेनूनामपि कामधुक् ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ ३१ ॥ सुवर्णं सर्वरत्नानां सर्पाणां वासुकिर्यथा ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ ३२ ॥ प्रह्लादः सर्वदैत्यानां रामः शस्त्रभृतां यथा ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ ३३ ॥ झषाणां मकरो यद्वन्मृगाणां मृगराड्यथा ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ ३४ ॥ समुद्राणां यथा श्रेष्ठः क्षीरोदः सरितां पतिः ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ ३५ ॥ वरुणो यादसां यद्वद्यमः संयमिनां यथा ॥ तथा समस्तती







र्थानां वरिष्ठं पुरुषोत्तमम् ॥ ३६ ॥ देवर्षीणां यथा श्रेष्ठो नारदो मुनिसत्तमाः ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ ३७ ॥ धातूनां काञ्चनं यद्वत्पवित्राणां च दक्षिणा ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ ३८ ॥ प्रजापतिर्यथा दक्ष ऋषीणां कश्यपो यथा ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ ३९ ॥ ग्रहाणां भास्करो यद्वन्मन्त्राणां प्रणवो यथा ॥ तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ ४० ॥ अश्वमेधस्तु यज्ञानां यथा श्रेष्ठः प्रकीर्तितः ॥ तथा समस्ततीर्थानां क्षेत्रं तच्च द्विजोत्तमाः ॥ ४१ ॥ ओषधीनां यथा धान्यं तृणेषु तृणराड्यथा ॥ तथा समस्ततीर्थानामुत्तमं पुरुषोत्तमम् ॥ ४२ ॥ यथा समस्ततीर्थानां धर्मः संसारतारकः ॥ तथा समस्ततीर्थानां श्रेष्ठं तत्पुरुषोत्तमम् ॥ ४३ ॥ इति श्रीब्रह्मपुराणे स्वयंभ्वृषिसंवादे पुरुषोत्तममाहात्म्यनिरूपणं नाम षट्षष्टितमोऽध्यायः ॥ ६६ ॥

॥ ब्रह्मोवाच ॥ सर्वेषां चैव तीर्थानां क्षेत्राणां च द्विजोत्तमाः ॥ जपहोमव्रतानां च तपोदानफलानि च ॥ १ ॥ न तत्पश्यामि भो विप्रा यत्तेन सदृशं भुवि ॥ किं चात्र बहुनोक्तेन भाषितेन पुनः पुनः ॥ २ ॥ सत्यं सत्यं पुनः सत्यं क्षेत्रं तत्परमं महत् ॥ पुरुषाख्यं सकृद्दृष्ट्वा सागराम्भः सकृत्स्पृशन् ॥ ३ ॥ ब्रह्मविद्यां सकृज्ज्ञात्वा गर्भवासो न विद्यते ॥ हरेः संनिहिते स्थान उत्तमे पुरुषोत्तमे ॥ ४ ॥ संवत्सरमुपासीत मासमात्रमथापि वा ॥ तेन जप्तं हुतं तेन तेन तप्तं तपो महत् ॥ ५ ॥ स याति परमं स्थानं यत्र योगेश्वरो हरिः ॥ भुक्त्वा भोगान्विचित्रांश्च देवयोषित्समन्वितः ॥६॥ कल्पान्ते पुनरागत्य मर्त्यलोके नरोत्तमः ॥ जायते योगिनां विप्रा ज्ञानज्ञेयोद्यतो गृहे ॥७॥ संप्राप्य वैष्णवं योगं हरेः स्वच्छन्दतां व्रजेत् ॥ कल्पवृक्षस्य रामस्य कृष्णस्य भद्रया सह ॥८॥ मार्कण्डेयेन्द्रद्युम्नस्य माहात्म्यं माधवस्य च ॥ स्वर्गद्वारस्य माहात्म्यं सागरस्य विधिः क्रमात् ॥ ९ ॥ मार्जनस्य यथाकाले भागीरथ्याः समागमम् ॥ सर्वमेतन्मया ख्यातं यत्परं श्रोतुमिच्छथ ॥ १० ॥ इन्द्रद्युम्नस्य माहात्म्यं सर्वं वै कथितं मया ॥ सर्वाश्चर्यं समाख्यातं रहस्यं पुण्यमुत्तमम् ॥ पुराणं परमं गुह्यं धन्यं संसारमोचनम् ॥ ११ ॥ मुनय ऊचुः ॥ न हि नस्तृप्तिरस्तीह शृण्वतां भगवत्कथाम् ॥ पुनरेव परं गुह्यं वक्तुमर्हस्यशेषतः ॥ १२ ॥ अनन्तवासुदेवस्य न सम्यग्वर्णितं त्वया ॥ श्रोतुमिच्छामहे देव विस्तरेण वदस्व नः ॥ १३ ॥

॥ ब्रह्मोवाच ॥ प्रवक्ष्यामि मुनिश्रेष्ठाः सारात्सारतरं परम् ॥ अनन्तवासुदेवस्यमाहात्म्यं त्रिषु दुर्लभम् ॥ १४ ॥ आदिकल्पे पुरा विप्रास्त्वहमव्यक्तजन्मवान् ॥ विश्वकर्माणमाहूय वचनं प्रोक्तवानिदम् ॥ १५ ॥ वरिष्ठं देवशिल्पीन्द्रं विश्वकर्माग्रकर्मिणम् ॥ प्रतिमां वासुदेवस्य कुरु शैलमयीं भुवि ॥ १६ ॥ यां प्रेक्ष्य विधिवद्भक्ताः सेन्द्रा वै मानुषादयः ॥ येन दानवरक्षोभ्यो विज्ञाय सुमहद्भयम् ॥१७॥ त्रिदिवं समनुप्राप्य सुमेरुशिखरं चिरम् ॥ वासुदेवं समाराध्य निरातङ्का वसन्ति ते ॥ १८ ॥ मम तद्वचनं

श्रुत्वा विश्वकर्मा तु तत्क्षणात् ॥ चकार प्रतिमां शुद्धां शंखचक्रगदाधराम् ॥ १९ ॥ सर्वलक्षणसंयुक्तां पुण्डरीकायतेक्षणाम् ॥ श्रीवत्सलक्ष्मसंयुक्ता मत्युग्रां प्रतिमोत्तमाम् ॥ २० ॥ वनमालावृतोरस्कां मुकुटाङ्गदधारिणीम् ॥ पीतवस्त्रां सुपीनांसां कुण्डलाभ्यामलंकृताम् ॥ २१ ॥ एवं सा प्रतिमा दिव्या गुह्यमन्त्रैस्तदा स्वयम् ॥ प्रतिष्ठाकालमासाद्य मयाऽसौ निर्मिता पुरा ॥ २२ ॥ तस्मिन्काले तदा शक्रो देवराट् खेचरैर्वृतः ॥ जगाम ब्रह्म सदनमारुह्य गजमुत्तमम् ॥ २३ ॥ प्रसाद्य प्रतिमां शक्रः स्नानदानैः पुनः पुनः ॥ प्रतिमां तां समादाय स्वपुरं पुनरागमत् ॥ २४ ॥ तां समाराध्य सुचिरं यतवाक्कायमानसः ॥ वृत्राद्यानसुरान्क्रूरान्नमुचिप्रमुखांस्तथा ॥ २५ ॥ निहत्य दानवान्भीमान्भुक्तवान्भूर्भुवादिकम् ॥ द्वितीये च युगे प्राप्ते त्रेतायां राक्षसाधिपः ॥ २६ ॥ बभूव सुमहावीर्यो दशग्रीवः प्रतापवान् ॥ दश वर्षसहस्राणि निराहारो जितेन्द्रियः ॥ २७ ॥ चचार व्रतमत्युग्रं तपः परमदुश्चरम् ॥ तपसा तेन तुष्टोऽहं वरं तस्मै प्रदत्तवान् ॥ २८ ॥ अवध्यः सर्वदेवानां स दैत्योरगराक्षसान् ॥ शापप्रहरणैरुग्रैरवध्यो यमकिंकरैः ॥ ॥ २९ ॥ वरं प्राप्य तदा रक्षो यक्षान्सर्वगणानिमान् ॥ धनाध्यक्षं विनिर्जित्य शक्रं जेतुं समुद्यतः ॥ ३० ॥ संग्रामं सुमहाघोरं कृत्वा देवैः स राक्षसः ॥ देवराजं विनिर्जित्य तदा इन्द्रजितेति वै ॥३१॥ राक्षसस्तत्सुतो नाम मेघनादः प्रलब्धवान् ॥ अमरावतीं ततः प्राप्य देवराजगृहे शुभे ॥ ॥ ३२ ॥ ददर्शाञ्जनसंकाशां रावणस्तु बलान्वितः ॥ प्रतिमां वासुदेवस्य सर्वलक्षणसंयुताम् ॥ ३३ ॥ श्रीवत्सलक्ष्मसंयुक्तां पद्मपत्रायतेक्षणाम् ॥ वनमालावृतोरस्कां मुकुटाङ्गदभूषिताम् ॥ ३४ ॥ शङ्खचक्रगदाहस्तां पीतवस्त्रां चतुर्भुजाम् ॥ सर्वाभरणसंयुक्तां सर्वकामफलप्रदाम् ॥ ३५ ॥ विहाय रत्नसङ्घांश्च प्रतिमां शुभलक्षणाम् ॥ पुष्पकेण विमानेन लङ्कां प्रास्थापयद्द्रुतम् ॥ ३६ ॥ पुराध्यक्षः स्थितः श्रीमान्धर्मात्मा स विभीषणः ॥ रावणस्यानुजो मन्त्री नारायणपरायणः ॥ ३७ ॥ दृष्ट्वा तां प्रतिमां दिव्यां देवेन्द्रभवनच्युताम् ॥ रोमाञ्चिततनुर्भूत्वा विस्मयं समपद्यत ॥ ३८ ॥ प्रणम्य शिरसा देवं प्रहृष्टेनान्तरात्मना ॥ अद्य मे सफलं जन्म अद्य मे सफलं तपः ॥ ३९ ॥ इत्युक्त्वा स तु धर्मात्मा प्रणिपत्य मुहुर्मुहुः ॥ ज्येष्ठं भ्रातरमासाद्य कृताञ्जलिरभाषत ॥ ४० ॥ राजन्प्रतिमया त्वं मे प्रसादं कर्तुमर्हसि ॥ यामाराध्य जगन्नाथ निस्तरेयं भवार्णवम् ॥ ४१ ॥ भ्रातुर्वचनमाकर्ण्य रावणस्तु तदाऽब्रवीत् ॥ गृहाण प्रतिमां वीर त्वनया किं करोम्यहम् ॥ ४२ ॥ स्वयंभुवं समाराध्य त्रैलोक्यं विजये त्वहम् ॥ नानाश्चर्यमहादेवं सर्वभूतभवोद्भवम् ॥ ४३ ॥ विभीषणो महाबुद्धिस्तदा तां प्रतिमां शुभाम् ॥ शतमष्टोत्तरं चाब्दं समाराध्य जनार्दनम् ॥ ४४ ॥ अजरामरण प्राप्तमणिमादिगुणैर्युतम् ॥ राज्यं लङ्काधिपत्यं च भोगान्भुङ्क्ते यथेप्सि

तान् ॥ ४५ ॥ ॥ मुनय ऊचुः ॥ अहो नो विस्मयो जातः श्रुत्वेदं परमामृतम् ॥ अनन्तवासुदेवस्य संभवं भुवि दुर्लभम् ॥ ४६ ॥
श्रोतुमिच्छाम हे देव विस्तरेण यथातथम् ॥ तस्य देवस्य माहात्म्यं वक्तुमर्हस्यशेषतः ॥ ४७ ॥ ॥ ब्रह्मोवाच ॥ तदा स राक्षसः क्रूरो देवगन्धर्व
किंनरान् ॥ लोकपालान्समनुजान्मुनिसिद्धांश्च पापकृत् ॥ ४८ ॥ विजित्य समरे सर्वानाजहार वराङ्गनाः ॥ संस्थाप्य नगरीं लङ्कां पुनः सीतार्थे
मुद्यतः ॥ ४९ ॥ छलित्वा मृगरूपेण सौवर्णेन च राघवम् ॥ ततः क्रुद्धेन रामेण रणे सौमित्रिणा सह ॥ ५० ॥ रावणस्य वधार्थाय हत्वा वालिं
मनोजवम् ॥ अभिषिक्तश्च सुग्रीवो युवराजोऽङ्गदस्तथा ॥ ५१ ॥ हनुमान्नलनीलौ च जाम्बवान्पनसस्तथा ॥ गवयश्च गवाक्षश्च पावनाः परमौजसः
॥ ५२ ॥ एतैश्चान्यैश्च बहुभिर्वानरैः स महाबलैः ॥ समावृतो महाघोरै रामो राजीवलोचनः ॥ ५३ ॥ गिरीणां सर्वसंघातैः सेतुं बध्वा महोदधौ ॥
बलेन महता रामः समुत्तीर्य महोदधिम् ॥ ५४ ॥ संग्राममतुलं चक्रे रक्षोगणसमन्वितान् ॥ यमहस्तं प्रहस्तं च निकुम्भं कुम्भमेव च ॥ ५५ ॥ नरान्तकं महा
वीर्यं तथा चैव यमान्तकम् ॥ मालाढ्यं मालिकाढ्यं च हत्वा रामस्तु वीर्यवान् ॥ ५६ ॥ पुनरिन्द्रजितं हत्वा कुम्भकर्णं सरावणम् ॥ वैदेहीं चाग्नि
नाऽऽशोध्य दत्त्वा राज्यं विभीषणे ॥ ५७ ॥ वासुदेवं समादाय यानं पुष्पकमारुहत् ॥ लीलया समनुप्रापदयोध्यां पूर्वपालिताम् ॥ ५८ ॥ कनिष्ठं
भरतं स्नेहाच्छत्रुघ्नं भक्तवत्सलम् ॥ अभिषिच्य तदा रामः सर्वराज्येऽधिराजवत् ॥ ५९ ॥ पुरातनीं स्वमूर्तिं च समाराध्य ततो हरिः ॥ दश वर्षसह
स्राणि दश वर्षशतानि च ॥ ६० ॥ भुक्त्वा सागरपर्यन्तां मेदिनीं स तु राघवः ॥ राज्यमासाद्य स्वगतिं वैष्णवं पदमाविशत् ॥ ६१ ॥ तां चापि
प्रतिमां रामः समुद्रेशाय दत्तवान् ॥ धन्यो रक्षयितासि त्वं तोये चात्र सुसंहितः ॥ ६२ ॥ द्वापरं युगमासाद्य यदा देवो जगद्गुरुः ॥ धरण्याश्चानुरो
धेन भावशैथिल्यकारणात् ॥ ६३ ॥ अवतीर्णः स भगवान्वसुदेवकुले प्रभुः ॥ कंसादीनां वधार्थाय संकर्षणसहायवान् ॥ ६४ ॥ तदा तां प्रतिमां
विप्राः सर्ववाञ्छाफलप्रदाम् ॥ सर्वलोकहितार्थाय कस्मिंश्चित्कारणान्तरे ॥ ६५ ॥ तस्मिन्क्षेत्रवरे पुण्ये दुर्लभे पुरुषोत्तमे ॥ उज्जहार स्वयं तोया
त्सामुद्रात्सरितां पतेः ॥ ६६ ॥ तदा प्रभृति तत्रैव क्षेत्रे मुक्तिप्रदे द्विजाः ॥ आस्ते स देवो देवानामार्तिहा सर्वकामदः ॥ ६७ ॥ ये संश्रयन्ति
चानन्तं भक्त्या सर्वेश्वरं प्रभुम् ॥ वाङ्मनःकर्मभिर्नित्यं ते यान्ति परमं पदम् ॥ ६८ ॥ दृष्ट्वाऽनन्तं सकृद्भक्त्या संपूज्य प्रणिपत्य च ॥ राजसूया
श्वमेधाभ्यां फलं दशगुणं लभेत् ॥ ६९ ॥ सर्वकामसमृद्धेन कामगेन सुवर्चसा ॥ विमानेनार्कवर्णेन किङ्किणीजालमालिना ॥ ७० ॥ त्रिःसप्तकुल
मुद्धृत्य दिव्यस्त्रीगणसेवितः ॥ उपगीयमानो गन्धर्वैर्नरो विष्णुपुरं व्रजेत् ॥ ७१ ॥ तत्र भुक्त्वा वरान्भोगाञ्जरामरणवर्जितः ॥ दिव्यरूपधरः श्रीमा

न्यावदाभूतसंप्लवम् ॥ ७२ ॥ पुण्यक्षयादिहाऽऽयातश्चतुर्वेदी द्विजो भवेत् ॥ वैष्णवं योगमास्थाय ततो मोक्षमवाप्नुयात् ॥ ७३ ॥ एवं मया त्वनन्तोऽसौ कीर्तितो मुनिसत्तमाः ॥ कः शक्नोति गुणान्वक्तुं सर्वान्वर्षशतैरपि ॥ ७४ ॥ इति श्रीब्रह्मपुराणे स्वयंभ्वृषिसंवादेऽनन्तवासुदेवमाहात्म्यनिरूपणं नाम सप्तषष्टितमोऽध्यायः ॥ ६७ ॥ ॥ ब्रह्मोवाच ॥ एवं वोऽनन्तमाहात्म्यं क्षेत्रं च पुरुषोत्तमम् ॥ भुक्तिमुक्तिप्रदं नृणां मया प्रोक्तं सुदुर्लभम् ॥ १ ॥ यत्राऽऽस्ते पुण्डरीकाक्षः शङ्खचक्रगदाधरः ॥ पीताम्बरधरः श्रीमान् कंसकेशिनिषूदनः ॥ २ ॥ ये तत्र कृष्णं पश्यन्ति सुरासुरनमस्कृतम् ॥ संकर्षणं सुभद्रां च धन्यास्ते नात्र संशयः ॥ ३ ॥ त्रैलोक्याधिपतिं देवं सर्वकामफलप्रदम् ॥ ये ध्यायन्ति सदा कृष्णं मुक्तास्ते नात्र संशयः ॥ ४ ॥ कृष्णे रताः कृष्णमनुस्मरन्ति रात्रौ च कृष्णं पुनरुत्थिता ये ॥ ते भिन्नदेहाः प्रविशन्ति कृष्णं हविर्यथा मन्त्रहुतं हुताशम् ॥ ५ ॥ तस्मात्सदा मुनिश्रेष्ठाः कृष्णः कमललोचनः ॥ तस्मिन्क्षेत्रे प्रयत्नेन द्रष्टव्यो मोक्षकाङ्क्षिभिः ॥ ६ ॥ शयनोत्थापने कृष्णं ये पश्यन्ति मनीषिणः ॥ हलायुधं सुभद्रां च हरेः स्थानं व्रजन्ति ते ॥ ७ ॥ सर्वकालेऽपि ये भक्त्या पश्यन्ति पुरुषोत्तमम् ॥ रौहिणेयं सुभद्रां च विष्णुलोकं व्रजन्ति ते ॥ ८ ॥ आस्ते यश्चतुरो मासान्वार्षिकान्पुरुषोत्तमे ॥ पृथिव्यास्तीर्थयात्रायाः फलं प्राप्नोति चाधिकम् ॥ ॥ ९ ॥ ये सर्वकालं तत्रैव निवसन्ति मनीषिणः ॥ जितेन्द्रिया जितक्रोधा लभन्ते तपसः फलम् ॥ १० ॥ तपस्तप्त्वाऽन्यतीर्थेषु वर्षाणामयुतं नरः ॥ यदाप्नोति तदाप्नोति मासेन पुरुषोत्तमे ॥ ११ ॥ तपसा ब्रह्मचर्येण सङ्गत्यागेन यत्फलम् ॥ तत्फलं सततं तत्र प्राप्नुवन्ति मनीषिणः ॥ ॥ १२ ॥ सर्वतीर्थेषु यत्पुण्यं स्नानदानेन कीर्तितम् ॥ तत्फलं सततं तत्र प्राप्नुवन्ति मनीषिणः ॥ १३ ॥ सम्यक्तीर्थेन यत्प्रोक्तं व्रतेन नियमेन च ॥ तत्फलं लभते तत्र प्रत्यहं पुरुषः शुचिः ॥ १४ ॥ इष्ट्वा नानाविधैर्यज्ञैर्यत्फलं लभते नरः ॥ तत्फलं लभते तत्र प्रत्यहं संयतेन्द्रियः ॥ १५ ॥ देहं त्यजन्ति मनुजास्तत्र ये पुरुषोत्तमे ॥ कल्पवृक्षं समासाद्य मुक्तास्ते नात्र संशयः ॥ १६ ॥ वटसागरयोर्मध्ये ये त्यजन्ति कलेवरम् ॥ ते दुर्लभं परं मोक्षं प्राप्नुवन्ति न संशयः ॥ १७ ॥ अनिच्छन्नपि यस्तत्र प्राणांस्त्यजति मानवः ॥ सोऽपि दुःखविनिर्मुक्तो मुक्तिं प्राप्नोति दुर्लभाम् ॥ १८ ॥ कृमिकीटपतङ्गाद्यास्तिर्यग्योनिगताश्च ये ॥ तत्र देहं परित्यज्य तेपि यान्ति परां गतिम् ॥ १९ ॥ भ्रान्तिं लोकस्य पश्यध्वमन्यतीर्थं प्रति द्विजाः ॥ पुरुषास्त्येन यत्प्राप्तमन्यतीर्थफलादिकम् ॥ २० ॥ सकृत्पश्यति यो मर्त्यः श्रद्धया पुरुषोत्तमम् ॥ पुरुषाणां सहस्रेषु स भवेदुत्तमः पुमान् ॥ ॥ २१ ॥ प्रकृतेः स परो यस्मात्पुरुषादपि चोत्तमः ॥ तस्माद्वेदे पुराणे च लोकेऽस्मिन्पुरुषोत्तमः ॥ २२ ॥ योऽसौ पुराणे वेदान्ते परमात्मे





त्युदाहृतः ॥ आस्ते विश्वोपकाराय तेनासौ पुरुषोत्तमः ॥ २३ ॥ पथि श्मशाने गृहमण्डपे वा रथ्याप्रदेशेष्वपि यत्र कुत्र ॥ इच्छन्ननिच्छन्नपि तत्र देहं संत्यज्य मोक्षं लभते मनुष्यः ॥ २४ ॥ तस्मात्सर्वप्रयत्नेन तस्मिन्क्षेत्रे द्विजोत्तमाः ॥ देहत्यागो नरैः कार्यः सम्यङ्मोक्षाभिकाङ्क्षिभिः ॥ २५ ॥ पुरुषाख्यस्य माहात्म्यं वक्तुं शक्नोति कः पुमान् ॥ नरो यत्र वटं दृष्ट्वा ब्रह्महत्यां व्यपोहति ॥ २६ ॥ गुणानामेकदेशोऽयं मया क्षेत्रस्य कीर्तितः ॥ कः समस्तान्गुणान्वक्तुं शक्तो वर्षशतैरपि ॥ २७ ॥ यदि यूयं मुनिश्रेष्ठा मोक्षमिच्छथ शाश्वतम् ॥ तस्मिन्क्षेत्रवरे पुण्ये निवसध्वमतन्द्रिताः ॥ २८ ॥ ॥ व्यास उवाच ॥ ते तस्य वचनं श्रुत्वा ब्रह्मणोऽव्यक्तजन्मनः ॥ निवासं चक्रिरे तत्र अवापुः परमं पदम् ॥ २९ ॥ तस्माद्यूयं प्रयत्नेन निवसध्वं द्विजोत्तमाः ॥ पुरुषाख्ये वरे क्षेत्रे यदि मुक्तिमभीप्सथ ॥ ३० ॥ इति श्रीब्रह्मपुराणे ब्रह्मऋषिसंवादे पुरुषोत्तमक्षेत्रमाहात्म्यवर्णनं नाम अष्टषष्टितमोऽऽध्यायः ॥ ६८ ॥ ॥ व्यास उवाच ॥ तस्मिन्क्षेत्रे मुनिश्रेष्ठाः सर्वसत्त्वसुखावहे ॥ धर्मार्थकाममोक्षाणां फलदे पुरुषोत्तमे ॥ १ ॥ कण्डुर्नाम महातेजा ऋषिः परमधार्मिकः ॥ सत्यवादी शुचिर्दान्तः सर्वभूतहिते रतः ॥ २ ॥ जितेन्द्रियो जितक्रोधो वेदवेदाङ्गपारगः ॥ अवाप परमां सिद्धिमाराध्य पुरुषोत्तमम् ॥ ३ ॥ अन्येऽपि तत्र संसिद्धा मुनयः संशितव्रताः ॥ सर्वभूतहिता दान्ता जितक्रोधा विमत्सराः ॥४॥ ॥ मुनय ऊचुः ॥ कोऽसौ कण्डुः कथं तत्र जगाम परमां गतिम् ॥ श्रोतुमिच्छामहे तस्य चरितं ब्रूहि सत्तम ॥ ५ ॥ ॥ व्यास उवाच ॥ शृणुध्वं मुनिशार्दूलाः कथां तस्य मनोहराम् ॥ प्रवक्ष्यामि समासेन मुनेस्तस्य विचेष्टितम् ॥ ६ ॥ पवित्रे गौमतीतीरे विजने सुमनोहरे ॥ कन्दमूलफलैः पूर्णे समित्पुष्पकुशान्विते ॥७॥ नानाद्रुमलताकीर्णे नानापुष्पोपशोभिते ॥ नानापक्षिरुते रम्ये नानामृगगणान्विते ॥ ८ ॥ तत्राऽश्रमपदं कण्डोर्बभूव मुनिसत्तमाः ॥ सर्वर्तुफलपुष्पाढ्यं कदलीखण्डमण्डितम् ॥ ९ ॥ तपस्तेपे मुनिस्तत्र सुमहत्परमाद्भुतम् ॥ व्रतोपवासैर्नियमैः स्नानमौनसुसंयमैः ॥ १० ॥ ग्रीष्मे पञ्चतपा भूत्वा वर्षासु स्थण्डिलेशयः ॥ आकंठमग्नो हेमन्ते स तेपे सुमहत्तपः ॥ ११ ॥ दृष्ट्वा तत्तपसो वीर्यं मुनेस्तस्य सुविस्मिताः ॥ बभूवुर्देवगन्धर्वाः सिद्धविद्याधरास्तथा ॥ १२ ॥ भूमिं तथाऽन्तरिक्षं च दिवं च मुनिसत्तमाः ॥ कण्डुः संतापयामास त्रैलोक्यं तपसो बलात् ॥ १३ ॥ अहोऽस्य परमं धैर्यमहोऽस्य परमं तपः ॥ इत्यब्रुवंस्तदा दृष्ट्वा देवास्तं तपसि स्थितम् ॥ १४ ॥ मन्त्रयामासुरव्यग्राः शक्रेण सहितास्तदा ॥ भयात्तस्य समुद्विग्रास्तपोविघ्नमभीप्सवः ॥ १५ ॥ ज्ञात्वा तेषामभिप्रायं शक्रस्त्रिभुवनेश्वरः ॥ प्रम्लोचाख्यां वरारोहां रूपयौवनगर्विताम् ॥ १६ ॥ सुमध्यां चारुदशनां पीनश्रो

णिपयोधराम् ॥ सर्वलक्षणसंपन्नां प्रोवाच बलसूदनः ॥ १७ ॥ शक्र उवाच ॥ प्रम्लोचे गच्छ शीघ्रं त्वं यत्राऽऽसौ तप्यते मुनिः ॥ विघ्नार्थं तस्य तपसः क्षोभयस्व मनः शुभे ॥१८॥ ॥ प्रम्लोचोवाच ॥ तव वाक्यं सुरश्रेष्ठ करोमि सततं प्रभो ॥ किंतु शङ्का ममैवात्र जीवितस्य च संशयः ॥१९॥ बिभेमि तं मुनिवरं ब्रह्मचर्यव्रते स्थितम् ॥ अत्युग्रं दीप्ततपसं ज्वलनार्कसमप्रभम् ॥ २० ॥ ज्ञात्वा मां स मुनिः क्रोधाद्विघ्नार्थं समुपागताम् ॥ कण्डुः परमतेजस्वी शापं दास्यति दुःसहम् ॥ २१ ॥ उर्वशी मेनका रम्भा घृताची पुञ्जिकस्थला ॥ विश्वाची सहजन्या च पूर्वचित्तिस्तिलोत्तमा ॥ २२ ॥ अलम्बुषा मिश्रकेशी शशिलेखा च वामना ॥ अन्याश्चाप्सरसः सन्ति रूपयौवनगर्विताः ॥ २३ ॥ सुमध्याश्चारुवदनाः पीनोन्नतपयोधराः ॥ कामप्रचारकुशलास्तास्तत्र विनियोजय ॥ २४ ॥ ॥ ब्रह्मोवाच ॥ तस्यास्तद्वचनं श्रुत्वा पुनः प्राह शचीपतिः ॥ तिष्ठन्तु नाम चान्यास्तास्त्वं चात्र कुशला शुभे ॥ २५ ॥ कामं वसन्तं वायुं च सहायार्थं ददामि ते ॥ तैः सार्धं गच्छ सुश्रोणि यत्राऽऽस्ते स महामुनिः ॥ २६ ॥ शक्रस्य वचनं श्रुत्वा तदा सा चारुलोचना ॥ जगामाऽऽकाशमार्गेण तैः सार्धं च वराङ्गना ॥ २७ ॥ गत्वा सा तत्र रुचिरं ददर्श वनमुत्तमम् ॥ मुनिं च दीप्ततपसमाश्रमस्थमकल्मषम् ॥ २८ ॥ अपश्यत्सा वनं रम्यं तैः सार्धं नन्दनोपमम् ॥ सर्वर्तुवरपुष्पाढ्यं शाखामृगगणाकुलम् ॥ २९ ॥ पुण्यं पद्मवनोपेतं सपल्लवनगाकुलम् ॥ श्रोत्ररम्यान्सुमधुराञ्शब्दान्खगमुखेरितान् ॥ ३० ॥ सर्वर्तुफलभाराढ्यान्सर्वर्तुकुसुमोज्ज्वलान् ॥ अपश्यत्पादपांश्चैव विहङ्गैरनुनादितान् ॥ ३१ ॥ आम्रानाम्रातकान्भव्यान्नारिकेरान्सतिन्दुकान् ॥ अथ बिल्वांस्तथा जीवान्दाडिमान्बीजपूरकान् ॥ ३२ ॥ पनसाल्लँकुचान्नीपाञ्शिरीषान्सुमनोहरान् ॥ पारावतांस्तथा कोलानरिमेदाम्लवेतसान् ॥ ३३ ॥ भल्लातकानामलकाञ्छतपर्णांश्च किंशुकान् ॥ इङ्गुदान्करवीरांश्च हरीतकीविभीतकान् ॥ ३४ ॥ एतानन्यांश्च सा वृक्षान्ददर्श पृथुलोचना ॥ तथैवाशोकपुन्नागकेतकीबकुलांस्तथा ॥ ३५ ॥ पारिजातान्कोविदारान्मन्दारेन्दीवरांस्तथा ॥ पाटलान्पुष्पितान्रम्यान्देवदारुद्रुमांस्तथा ॥ ३६ ॥ शालांस्तालांस्तमालांश्च निचुलाँल्लोमकांस्तथा ॥ अन्यांश्च पादपश्रेष्ठानपश्यत्फलपुष्पितान् ॥ ३७ ॥ चकोरैः शतपत्रैश्च भृङ्गराजैस्तथा शुकैः ॥ कोकिलैः कलविङ्कैश्च हारीतैर्जीवजीवकैः ॥ ३८ ॥ प्रियपुत्रैश्चातकैश्च तथाऽन्यैर्विविधैः खगैः ॥ श्रोत्ररम्यं सुमधुरं कूजद्भिश्चाप्यधिष्ठितम् ॥ ३९ ॥ सरांसि च मनोज्ञानि प्रसन्नसलिलानि च ॥ कुमुदैः पुण्डरीकैश्च तथा नीलोत्पलैः शुभैः ॥ ४० ॥ कह्लारैः कमलैश्चैव आचितानि समन्ततः ॥ कादम्बैश्चक्रवाकैश्च तथैव जलकुक्कुटैः ॥ ४१ ॥ कारण्डवैर्बकैर्हंसैः कूर्मैर्मद्गुभिरेव च ॥ एतैश्चान्यैश्च कीर्णानि







समन्ताज्जलचारिभिः ॥ ४२ ॥ क्रमेणैव तथा सा तु वनं बभ्राम तैः सह ॥ एवं दृष्ट्वा वनं रम्यं तैः सार्धं परमाद्भुतम् ॥ ४३ ॥ विस्मयोत्फुल्लनयना सा बभूव वराङ्गना ॥ प्रोवाच वायुं कामं च वसन्तं च द्विजोत्तमाः ॥ ४४ ॥ ॥ प्रम्लोचोवाच ॥ कुरुध्वं मम साहाय्यं सज्जाः सर्वे पृथक्पृथक् ॥ ४५ ॥ ब्रह्मोवाच ॥ ॥ एवमुक्त्वा तदा सा तु शक्तिक्षोभेण गर्विता ॥ प्रत्युवाचाद्य यास्यामि यत्रासौ संस्थितो मुनिः ॥ ४६ ॥ अद्य तं देहयन्तारं प्रयुक्तेन्द्रियवाजिनम् ॥ स्मरशस्त्रगलद्रश्मिं करिष्यामि कुसारथिम् ॥ ४७ ॥ ब्रह्मा जनार्दनो वाऽपि यदि वा नीललोहितः ॥ तथाऽप्यद्य करिष्यामि कामबाणक्षतान्तरम् ॥४८॥ इत्युक्त्वाप्रजगामाथ यत्रासौ तिष्ठते मुनिः ॥ मुनेस्तपःप्रभावेण प्रशान्तश्वापदाश्रमम् ॥ ४९ ॥ सा पुंस्कोकिलमाधुर्या नदीतीरे व्यवस्थिता ॥ स्तोकमात्रं स्थिता तस्मा दगायत वराऽप्सराः ॥ ५० ॥ ततो वसन्तः सहसा बलं समकरोत्तदा ॥ कोकिलारावमधुरमकालिकमनोहरम् ॥ ५१ ॥ ववौ गन्धवहश्चैव मलयाद्रिनिकेतनः ॥ पुष्पानुच्चावचान्मेध्यान्पातयंश्च शनैः शनैः ॥ ५२ ॥ पुष्पबाणधरश्चैव गत्वा तस्य समीपतः ॥ मुनेश्च क्षोभयामास कामस्तस्यापि मानसम् ॥ ५३ ॥ ततो-गीतध्वनिं श्रुत्वा मुनिर्विस्मितमानसः ॥ जगाम यत्र सा सुभ्रूः कामबाणप्रपीडितः ॥ ५४ ॥ दृष्ट्वा तामाह संहृष्टो विस्मयोत्फुल्ललोचनः ॥ भ्रष्टोत्तरीयो विकलः पुलकाञ्चितविग्रहः ॥ ५५ ॥ ॥ ऋषिरुवाच ॥ ॥काऽसि कस्यासि सुश्रोणि सुभगे चारुहासिनि ॥ मनो हरसि मे सुभ्रु ब्रूहि सत्यं सुमध्यमे ॥ ५६ ॥ ॥ प्रम्लोचोवाच ॥ तव कर्मकरा चाहं पुष्पार्थमहमागता ॥ आदेशं देहि मे क्षिप्रं किं करोमि तवाऽऽज्ञया ॥ ५७ ॥ ॥ व्यास उवाच ॥ ॥ श्रुत्वैवं वचनं तस्यास्त्यक्त्वा धैर्यं विमोहितः ॥ आदाय हस्ते तां बालां प्रविवेश स्वमाश्रमम् ॥ ५८ ॥ ततः कामश्च वायुश्च वसन्तश्च द्विजोत्तमाः ॥ जग्मुर्यथागतं सर्वे कृतकृत्या स्त्रिविष्टपम् ॥ ५९ ॥ शशंसुश्च हरिं गत्वा तस्यास्तस्य विचेष्टितम् ॥ श्रुत्वा शक्रस्तदा देवाः प्रीताः सुमनसोऽभवन् ॥ ६० ॥ स च कण्डुस्तया सार्धं प्रविशन्नेव चाऽऽश्रमम् ॥ आत्मनः परमं रूपं चकार मदनाकृति ॥ ६१ ॥ रूपयौवनसंपन्नमतीव सुमनोहरम् ॥ दिव्यालंकारसंयुक्तं षोडशवत्सराकृति ॥ ६२ ॥ दिव्यवस्त्रधरं कान्तं दिव्यस्रगन्धभूषितम् ॥ सर्वोपभोगसंपन्नं सहसा तपसो बलात् ॥ ६३ ॥ दृष्ट्वा सा तस्य तद्वीर्यं परं विस्मयमागता ॥ अहोऽस्य तपसो वीर्यमित्युक्त्वा मुदिताऽभवत् ॥ ६४ ॥ स्नानं संध्यां जपं होमं स्वाध्यायं देवतार्चनम् ॥ व्रतोपवासनियमं ध्यानं च मुनिसत्तमाः ॥ ६५ ॥ त्यक्त्वा स रेमे मुदितस्तया सार्धमहर्निशम् ॥ मन्मथाविष्टहृदयो न बुबोध तपःक्षयम् ॥ ६६ ॥ संध्यारात्रिदिवापक्षमासर्त्वयनहायनम् ॥ न बुबोध गतं कालं विषयासक्तमानसः ॥ ६७ ॥ सा च तं कामजैर्भावैर्विदग्धा रहसि द्विजाः ॥ रमयामास सुश्रोणिः

प्रलापकुशला तदा ॥ ६८ ॥ एवं कण्डुस्तया सार्धं वर्षाणामधिकं शतम् ॥ अतिष्ठन्मन्दरद्रोण्यां ग्राम्यधर्मरतो मुनिः ॥ ६९ ॥ सा तं प्राह महाभागं गन्तुमिच्छाम्यहं दिवम् ॥ प्रसादसुमुखो ब्रह्मन्ननुज्ञातुं त्वमर्हसि ॥ ७० ॥ तयैवमुक्तः स मुनिस्तस्यामासक्तमानसः ॥ दिनानि कतिचिद्भद्रे स्थीयतामित्यभाषत ॥ ७१ ॥ एवमुक्ता ततस्तेन साग्रं वर्षशतं पुनः ॥ बुभुजे विषयांस्तन्वी तेन सार्धं महात्मना ॥ ७२ ॥ अनुज्ञां देहि भगवन्व्रजामि त्रिदशालयम् ॥ उक्तस्तयेति स पुनः स्थीयतामित्यभाषत ॥ ७३ ॥ पुनर्गते वर्षशते साधिके सा शुभानना ॥ याम्यहं त्रिदिवं ब्रह्मन्प्रणयस्मितशोभनम् ॥ ७४ ॥ उक्तस्तयैवं स मुनिः पुनराहाऽऽयतेक्षणाम् ॥ इहाऽऽस्यतां मया सुभ्रु चिरं कालं गमिष्यसि ॥ ७५ ॥ तच्छापभीता सुश्रोणी सह तेनर्षिणा पुनः ॥ शतद्वयं किंचिदूनं वर्षाणामन्वतिष्ठत ॥ ७६ ॥ गमनाय महाभागो देवराजनिवेशनम् ॥ प्रोक्तः प्रोक्तस्तया तन्व्या स्थीयतामित्यभाषत ॥ ७७ ॥ तस्य शापभयाद्भीरुर्दाक्षिण्येन च दक्षिणा ॥ प्रोक्ता प्रणयभङ्गार्तिवेदिनी न जहौ मुनिम् ॥ ७८ ॥ तया च रमतस्तस्य परमर्षेरहर्निशम् ॥ नवं नवमभूत्प्रेम मन्मथासक्तचेतसः ॥ ७९ ॥ एकदा तु त्वरायुक्तो निश्चक्रामोटजान्मुनिः ॥ निष्क्रामन्तं च कुत्रेति गम्यते प्राह सा शुभा ॥ ८० ॥ इत्युक्तः स तया प्राह परिवृत्तमहः शुभे ॥ संध्योपास्तिं करिष्यामि क्रियालोपोऽन्यथा भवेत् ॥ ८१ ॥ ततः प्रहस्य मुदिता सा तं प्राह महामुनिम् ॥ किमद्य सर्वधर्मज्ञ परिवृत्तमहस्तव ॥ गतमेतन्न कुरुते विस्मयं कस्य कथ्यते ॥ ८२ ॥ ॥ मुनिरुवाच ॥ प्रातस्त्वमागता भद्रे नदीतीरमिदं शुभम् ॥ मया दृष्टाऽसि सुश्रोणि प्रविष्टा च ममाऽऽश्रमम् ॥ ८३ ॥ इयं च वर्तते संध्या परिणाममहो गतम् ॥ अवहासः किमर्थोऽयं सद्भावः कथ्यतां मम ॥ ८४ ॥ ॥ प्रम्लोचोवाच ॥ प्रत्युषस्यागता ब्रह्मन्सत्यमेतन्न मे मृषा ॥ किं त्वद्य तस्य कालस्य गतान्यब्दशतानि ते ॥ ८५ ॥ ततः ससाध्वसो विप्रस्तां पप्रच्छाऽऽयतेक्षणाम् ॥ कथ्यतां भीरु कः कालस्त्वया मे रमतः सदा ॥ ८६ ॥ ॥ प्रम्लोचोवाच ॥ सप्तोत्तराण्यतीतानि नववर्षशतानि वै ॥ मासाश्च षट् तथैवाद्य समतीतं दिनत्रयम् ॥ ८७ ॥ ॥ ऋषिरुवाच ॥ सत्यं भीरु वदस्येतत्परिहासोऽथवा शुभे ॥ दिनमेकमहं मन्ये त्वया सार्धमिहास्थितः ॥ ८८ ॥ ॥ प्रम्लोचोवाच ॥ वदिष्याम्यनृतं ब्रह्मन्कथमत्र तवान्तिके ॥ विशेषादद्य भवता पृष्टा मार्गानुगामिना ॥ ८९ ॥ ॥ व्यास उवाच ॥ निशम्य तद्वचस्तस्याः स मुनिर्द्विजसत्तमाः ॥ धिग्धिङ्मामित्यनाचारं विनिन्द्याऽऽत्मानमात्मना ॥ ९० ॥ ॥ मुनिरुवाच ॥ तपांसि मम नष्टानि हतं ब्रह्मविदां धनम् ॥ हृतो विवेकः केनापि योषिन्मोहाय निर्मिता ॥ ९१ ॥ ऊर्मिषट्कातिगं ब्रह्म ज्ञेयमात्मजयेन मे ॥ गतिरेषा कृता येन धिक्तं काममहाग्रहम् ॥ ९२ ॥ व्रतानि सर्वे वेदाश्च कारणान्यखिलानि

च ॥ नरकग्राममार्गेण कामेनाद्य हतानि मे ॥ ९३ ॥ विनिन्द्येत्थं स धर्मज्ञः स्वयमात्मानमात्मना ॥ तामप्सरसमासीनामिदं वचनमब्रवीत् ॥ ९४ ॥ ॥ ऋषिरुवाच ॥ गच्छ पापे यथाकामं यत्कार्यं तत्त्वया कृतम् ॥ देवराजस्य मत्क्षोभं कुर्वन्त्या भावचेष्टितैः ॥ ९५ ॥ न त्वां करोम्यहं भस्म क्रोधतीव्रेण वह्निना ॥ सतां साप्तपदं मैत्र्यमुषितोऽहं त्वया सह ॥ ९६ ॥ अथवा तव दोषः कः किंवा कुर्यामहं तव ॥ ममैव दोषो नितरां येनाहमजितेन्द्रियः ॥ ९७ ॥ यथा शक्रप्रियार्थिन्या कृतो मत्तपसो व्ययः ॥ त्वया धिक् त्वां महामोहकारिणीं तु जुगुप्सिताम् ॥ ९८ ॥ ॥ व्यास उवाच ॥ यावदित्थं स विप्रर्षिस्तां ब्रवीति सुमध्यमाम् ॥ तावत्स्खलत्स्वेदजला सा बभूवातिवेपथुः ॥ ९९ ॥ प्रवेपमानां स च तां स्विन्नगात्रलतां सतीम् ॥ गच्छ गच्छेति सक्रोधमुवाच मुनिसत्तमः ॥ १०० ॥ सा तु निर्भर्त्सिता तेन विनिष्क्रम्य तदाश्रमात् ॥ आकाशगामिनी स्वेदं ममार्ज तरुपल्लवैः ॥ १०१ ॥ वृक्षाद्वृक्षं ययौ बाला उदग्रारुणपल्लवैः ॥ निर्ममार्ज च गात्राणि गलत्स्वेदजलानि वै ॥ १०२ ॥ ऋषिणा यस्तदा गर्भस्तस्या देहे समाहितः ॥ निर्जगाम स रोमाञ्चस्वेदरूपी तदङ्गतः ॥ १०३ ॥ तं वृक्षा जगृहुर्गर्भमेकं चक्रे च मारुतः ॥ सोमेनाऽऽप्यायितो गोभिः स तदा ववृधे शनैः ॥ १०४ ॥ मारिषा नाम कन्याऽभूद्वृक्षाणां चारुलोचना ॥ प्राचेतसानां सा भार्या दक्षस्य जननी द्विजाः ॥ १०५ ॥ स चापि भगवान्कण्डुः क्षीणे तपसि सत्तमः ॥ पुरुषोत्तमाख्यं भो विप्रा विष्णोरायतनं ययौ ॥ १०६ ॥ ददर्श परमं क्षेत्रं मुक्तिदं भुवि दुर्लभम् ॥ दक्षिणस्योदधेस्तीरे सर्वकामफलप्रदम् ॥ १०७ ॥ सुरम्यं वालुकाकीर्णं केतकीवनशोभितम् ॥ नानाद्रुमलताकीर्णं नानापक्षिरुतं शिवम् ॥ १०८ ॥ सर्वत्र सुखसंचारं सर्वर्तुकुसुमान्वितम् ॥ सर्वसौख्यप्रदं नृणां धन्यं सर्वगुणाकरम् ॥ १०९ ॥ भृग्वाद्यैः सेवितं पूर्वं मुनिसिद्धवरैस्तथा ॥ गन्धर्वैः किंनरैर्यक्षैस्तथाऽन्यैर्मोक्षकाङ्क्षिभिः ॥ ११० ॥ ददर्श स हरिं तत्र देवैः सर्वैरलंकृतम् ॥ ब्राह्मणाद्यैस्तथा वर्णैराश्रमस्थैर्निषेवितम् ॥ १११ ॥ दृष्ट्वैव स तदा क्षेत्रं देवं च पुरुषोत्तमम् ॥ कृतकृत्यमिवाऽऽत्मानं मेने स मुनिसत्तमः ॥ ११२ ॥ तत्रैकाग्रमना भूत्वा चकाराऽऽराधनं हरेः ॥ ब्रह्मपारमयं कुर्वञ्जपमेकाग्रमानसः ॥ ऊर्ध्वबाहुर्महायोगी स्थित्वाऽसौ मुनिसत्तमः ॥ ११३ ॥ ॥ मुनय ऊचुः ॥ ब्रह्मपारं मुने श्रोतुमिच्छामः परमं शुभम् ॥ जपता कण्डुना देवो येनाऽऽराध्यत केशवः ॥ ११४ ॥ ॥ व्यास उवाच ॥ पारं परं विष्णुरपारपारः परः परेभ्यः परमात्मरूपः ॥ स ब्रह्मपारः परपारभूतः परः पराणामपि पारपारः ॥११५॥ स कारणं कारणसंश्रितोऽपि तस्यापि हेतुः परहेतुहेतुः ॥ कार्येषु चैवं सह कर्मकर्तृरूपैरनेकैरवतीह सर्वम् ॥ ११६ ॥ ब्रह्म प्रभुर्ब्रह्म स सर्वभूतो ब्रह्म प्रजानां पतिरच्युतोऽसौ ॥ ब्रह्माव्ययं नित्यमजं स विष्णुरपक्षयाद्यैरखिलैरसंगः ॥ ११७ ॥ ब्रह्माक्षरमजं नित्यं यथा

ऽसौ पुरुषोत्तमः ॥ तथा रागादयो दोषाः प्रयान्तु प्रशमं मम ॥ ११८ ॥ ॥ व्यास उवाच ॥ श्रुत्वा तस्य मुनेर्जैप्यं ब्रह्मपारं द्विजोत्तमाः ॥ भक्तिं च परमां ज्ञात्वा सुदृढां पुरुषोत्तमः ॥ ११९ ॥ प्रीत्या स परया देवस्तदाऽसौ भक्तवत्सलः ॥ गत्वा तस्य समीपं तु प्रोवाच मधुसूदनः ॥ १२० ॥ मेघगम्भीरया वाचा दिशः संनादयन्निव ॥ आरुह्य गरुडं विप्रा विनताकुलनन्दनम् ॥ १२१ ॥ ॥ श्रीभगवानुवाच ॥ मुने ब्रूहि परं कार्यं यत्ते मनसि वर्तते ॥ वरदोऽहमनुप्राप्तो वरं वरय सुव्रत ॥ १२२ ॥ श्रुत्वैतद्वचनं तस्य देवदेवस्य चक्रिणः ॥ चक्षुरुन्मील्य सहसा ददर्श पुरतो हरिम् ॥ ॥ १२३ ॥ अतसीपुष्पसंकाशं पद्मपत्रायतेक्षणम् ॥ शङ्खचक्रगदापाणिं मुकुटांगदधारिणम् ॥ १२४ ॥ चतुर्बाहुमुदारांगं पीतवस्त्रधरं प्रभुम् ॥ श्रीवत्सलक्ष्मसंयुक्तं वनमालाविभूषितम्[1] ॥ १२५ ॥ ततः स विस्मयाविष्टो रोमाञ्चिततनूरुहः ॥ दण्डवत्प्रणिपत्योर्व्यां प्रणाममकरोत्तदा ॥ १२६ ॥ अद्य मे सफलं जन्म अद्य मे सफलं तपः ॥ इत्युक्त्वा मुनिशार्दूलस्तं स्तोतुमुपचक्रमे ॥ १२७ ॥ ॥ कण्डुरुवाच ॥ नारायण हरे कृष्ण श्रीवत्साङ्क जगत्पते ॥ जगद्बीज जगद्धाम जगत्साक्षिन्नमोऽस्तु ते ॥ १२८ ॥ अव्यक्त जिष्णो प्रभव प्रधानपुरुषोत्तम ॥ पुण्डरीकाक्ष गोविन्द लोकनाथ नमोऽस्तु ते ॥ १२९ ॥ हिरण्यगर्भ श्रीधाम पद्मनाभ सनातन ॥ भूगर्भ ध्रुव ईशान हृषीकेश नमोऽस्तु ते ॥ १३० ॥ अनाद्यन्तामृताजेय जय त्वं जयतां वर ॥ अजिताखण्डल कृष्ण श्रीनिवास नमोऽस्तु ते ॥ १३१ ॥ योगात्मन्नप्रमेयात्मँल्लोकात्मंस्त्वं सनातनः ॥ कूटस्थाचलदुर्ज्ञेय कुशेशाय नमोऽस्तु ते ॥ १३२ ॥ वरेण्य वरदानन्त ब्रह्मयोने गुणाकर ॥ प्रलयोत्पत्तियोगेश वासुदेव नमोऽस्तु ते ॥ १३३ ॥ पर्जन्यधर्मकर्ता च दुष्पार दुरधिष्ठित ॥ दुःखार्तिनाशन हरे जलशायिन्नमोऽस्तु ते ॥ १३४ ॥ भूतपाव्यक्त भूतेश भूततत्त्वैरनाकुल ॥ भूताधिवास भूतात्मन्भूतगर्भ नमोऽस्तु ते ॥ १३५ ॥ यज्ञयज्वन्यज्ञधर यज्ञधाताऽभयप्रद ॥ यज्ञगर्भ हिरण्यांग पृश्निगर्भ नमोऽस्तु ते ॥ १३६ ॥ क्षेत्रज्ञः क्षेत्रभृत्क्षेत्री क्षेत्रहा क्षेत्रकृद्वशी ॥ क्षेत्रात्मन्क्षेत्ररहित क्षेत्रस्रष्टे नमोऽस्तु ते ॥ १३७ ॥ गुणालय गुणावास गुणाश्रय गुणावह ॥ गुणभोक्तृगुणाराम गुणत्यागिन्नमोऽस्तु ते ॥ १३८ ॥ त्वं विष्णुस्त्वं हरिश्चक्री त्वं जिष्णुस्त्वं जनार्दनः ॥ त्वं भूतस्त्वं वषट्कारस्त्वं भव्यस्त्वं भवत्प्रभुः ॥ १३९ ॥ त्वं भूतकृत्त्वमव्यक्तस्त्वं भवो भूतभृद्भवान् ॥ त्वं भूतभावनो देवस्त्वामाहुरजमीश्वरम् ॥ १४० ॥ त्वमनन्तः कृतज्ञस्त्वं प्रकृतिस्त्वं वृषाकपिः ॥ त्वं रुद्रस्त्वं दुराधर्षस्त्वममोघस्त्वमीश्वरः ॥ १४१ ॥ त्वं विश्वकर्मा जिष्णुस्त्वं त्वं शंभुस्त्वं वृषाकृतिः ॥ त्वं शंकरस्त्वमुशना त्वं सत्यं त्वं तपो जनाः १४२ ॥ त्वं विश्वजेता त्वं

---

[1] सर्वलक्षणसंयुक्तं सर्वरत्नविभूषितम् ॥ दिव्यचन्दनलिप्तांगं दिव्यमाल्यविभूषितम् ॥ अयमत्राधिकः श्लोकः ।

शर्म त्वं शरण्यस्त्वमक्षरम् ॥ त्वं शंभुस्त्वं स्वयंभूश्च त्वं ज्येष्ठस्त्वं परायणः ॥ १४३ ॥ त्वमादित्यस्त्वमोंकारस्त्वं प्राणस्त्वं तमिस्रहा ॥ त्वं पर्जन्यस्त्वं प्रथितस्त्वं वेधास्त्वं सुरेश्वरः ॥ १४४ ॥ त्वमृग्यजुः साम चैव त्वमात्मा संमतो भवान् ॥ त्वमग्निस्त्वं च पवनः कुबेरस्त्वं हविस्तथा ॥ १४५ ॥ त्वं स्रष्टा त्वं तथा भोक्ता होता त्वं च हविः क्रतुः ॥ त्वं कविस्त्वं हरिः श्रेष्ठस्त्वं लोकपतिरच्युतः ॥ १४६ ॥ त्वं सर्वदर्शनः श्रीमांस्त्वं सर्वदमनोरिहा ॥ त्वमहस्त्वं तथा रात्रिस्त्वामाहुर्वत्सरं बुधाः ॥ १४७ ॥ त्वं कालस्त्वं कला काष्ठा त्वं मुहूर्तः क्षणा लवाः ॥ त्वं बालस्त्वं तथा वृद्धस्त्वं पुमान्स्त्री नपुंसकः ॥ १४८ ॥ त्वं विश्वयोनिस्त्वं चक्षुस्त्वं स्थाणुस्त्वं शुचिश्रवाः ॥ त्वं शाश्वतस्त्वमजितस्त्वमुपेन्द्रस्त्वमुत्तमः ॥१४९॥ त्वं सर्वविश्वसुखदस्त्वं वेदांगं त्वमव्ययः ॥ त्वं वेदवेदस्त्वं धाता विधाता त्वं समाहितः ॥ १५० ॥ जगद्योनिरमूलस्त्वं धाता त्वं च पुनर्वसुः ॥ त्वं वैद्यस्त्वं धृतात्मा च त्वमतीन्द्रियगोचरः ॥ १५१ ॥ त्वमग्रणीर्ग्रामणीस्त्वं त्वं सुपर्णस्त्वमादिमान् ॥ त्वं संग्रहस्त्वं सुमहत्त्वं धृतात्मा त्वमच्युतः ॥१५२॥ त्वं यमस्त्वं च नियमस्त्वं प्रांशुस्त्वं चतुर्भुजः॥त्वमेवान्नान्तरात्मा त्वं परमात्मा त्वमुच्यसे ॥ १५३ ॥ त्वं गुरुस्त्वं गुरुतमस्त्वं वामस्त्वं प्रदक्षिणः ॥ त्वं पिप्पलस्त्वमगमस्त्वं व्यक्तस्त्वं प्रजापतिः ॥ १५४ ॥ हिरण्यनाभस्त्वं देवस्त्वं शशी त्वं प्रजापतिः ॥ अनिर्देश्यवपुस्त्वं वै त्वं यमस्त्वं सुरारिहा ॥ १५५ ॥ त्वं च संकर्षणो देवस्त्वं कर्ता त्वं सनातनः ॥ त्वं वासुदेवोऽमेयात्मा त्वमेव गुणवर्जितः ॥१५६॥ त्वं ज्येष्ठस्त्वं वरिष्ठस्त्वं त्वं सहिष्णुश्च माधवः ॥ सहस्रशीर्षा त्वं देवस्त्वमव्यक्तः सहस्रदृक् ॥ १५७ ॥ सहस्रपादस्त्वं देवस्त्वं विराट् त्वं सुरप्रभुः ॥ त्वमेव तिष्ठसे भूयो देवदेव दशांगुलः ॥ १५८ ॥ यद्भूतं तत्त्वमेवोक्तः पुरुषः शक्र उत्तमः ॥ यद्भाव्यं तत्त्वमीशानस्त्वमृतस्त्वं तथाऽमृतः ॥ १५९ ॥ त्वत्तो रोहत्ययं लोको महीयांस्त्वमनुत्तमः ॥ त्वं ज्यायान्पुरुषस्त्वं च त्वं देव दशधा स्थितः ॥ १६० ॥ विश्वभूतश्चतुर्भागो नवभागोऽमृतो दिवि ॥ नवभागोऽन्तरिक्षस्थः पौरुषेयः सनातनः ॥ १६१ ॥ भागद्वयं च भूसंस्थं चतुर्भागोऽप्यभूदिह ॥ त्वत्तो यज्ञाः संभवन्ति जगतो वृष्टिकारणम् ॥ १६२ ॥ त्वत्तो विराट् समुत्पन्नो जगतो हृदि यः पुमान् ॥ सोऽतिरिच्यत भूतेभ्यस्तेजसा यशसा श्रिया ॥ १६३ ॥ त्वत्तः सुराणामाहारः पृषदाज्यमजायत ॥ ग्राम्यारण्याश्चौषधयस्त्वत्तः पशुमृगादयः ॥ १६४ ॥ ध्येयध्यानपरस्त्वं च कृतवानपि चौषधीः ॥ त्वं देवदेव सप्तास्य कालाख्यो दीप्तविग्रहः ॥ ॥ १६५ ॥ जङ्गमाजङ्गमं सर्वं जगदेतच्चराचरम् ॥ त्वत्तः सर्वमिदं जातं त्वयि सर्वं प्रतिष्ठितम् ॥ १६६ ॥ अनिरुद्धस्त्वं माधवस्त्वं त्वं प्रद्युम्नः सुरारिहा ॥ देव सर्वसुरश्रेष्ठ सर्वलोकपरायण ॥ १६७ ॥ त्राहि मामरविन्दाक्ष नारायण नमोऽस्तु ते ॥ नमस्ते भगवन्विष्णो नमस्ते पुरुषोत्त

म ॥ १६८ ॥ नमस्ते सर्वलोकेश नमस्ते कमलालय ॥ गुणालय नमस्तेऽस्तु नमस्तेऽस्तु गुणाकर ॥ १६९ ॥ वासुदेव नमस्तेऽस्तु नमस्तेऽस्तु सुरोत्तम ॥ जनार्दन नमस्तेऽस्तु नमस्तेऽस्तु सनातन ॥ १७० ॥ नमस्ते योगिनां गम्य योगावास नमोऽस्तु ते ॥ मापते श्रीपते नित्यं नमस्तेऽस्तु जगत्पते ॥ १७१ ॥ जगत्पते जगन्मूर्ते नमस्ते ज्ञानिनां पते ॥ दिवस्पते नमस्तेऽस्तु नमस्तेऽस्तु महीपते ॥ १७२ ॥ नमस्ते मधुहन्त्रे च नमस्ते पुष्करेक्षण ॥ कैटभघ्न नमस्तेऽस्तु सुब्रह्मण्य नमोऽस्तु ते ॥ १७३ ॥ नमोऽस्तु ते महामीन श्रुतिपृष्ठधराच्युत ॥ समुद्रसलिलक्षोभपद्मजाह्लादकारिणे ॥ १७४ ॥ अश्वशीर्ष महाघोण महापुरुषविग्रह ॥ मधुकैटभहन्त्रे च नमस्ते तुरगानन ॥ १७५ ॥ महाकमठभोगाय पृथिव्युद्धरणाय च ॥ विधृताद्रिस्वरूपाय महाकूर्माय ते नमः ॥ १७६ ॥ नमो महावराहाय पृथिव्युद्धारकारिणे ॥ नमश्चाऽऽदिवराहाय विश्वरूपाय वेधसे ॥ १७७ ॥ नमोऽनन्ताय सूक्ष्माय मुख्याय च वराय च ॥ परमाणुस्वरूपाय योगिगम्याय ते नमः ॥ १७८ ॥ तस्मै नमः परमकारणकारणाय योगीन्द्रवृत्तनिलयाय सुदुर्विदाय ॥ क्षीरार्णवाश्रितमहाहिसुतल्पगाय तुभ्यं नमः कनकरत्नसुकुण्डलाय ॥ १७९ ॥ ॥ व्यास उवाच ॥ इत्थं स्तुतस्तदा तेन प्रीतः प्रोवाच माधवः ॥ क्षिप्रं ब्रूहि मुनिश्रेष्ठ मत्तो यदभिवाञ्छसि ॥ १८० ॥ ॥ कण्डुरुवाच ॥ संसारेऽस्मिञ्जगन्नाथ दुस्तरे लोमहर्षणे ॥ अनित्ये दुःखबहुले कदलीदलसंनिभे ॥ १८१ ॥ निराश्रये निरालम्बे जलबुद्बुदचञ्चले ॥ सर्वोपद्रवसंयुक्ते दुस्तरे चातिभैरवे ॥ १८२ ॥ भ्रमामि सुचिरं कालं मायया मोहितस्तव ॥ न चान्तमभिगच्छामि विषयासक्तमानसः ॥ १८३ ॥ त्वामहं चाद्य देवेश संसारभयपीडितः ॥ गतोऽस्मि शरणं कृष्ण मामुद्धर भवार्णवात् ॥ १८४ ॥ गन्तुमिच्छामि परमं पदं यत्ते सनातनम् ॥ दैत्यदानववदेवेश पुनरावृत्तिदुर्लभम् ॥ १८५ ॥ ॥ श्रीभगवानुवाच ॥ भक्तोऽसि मे मुनिश्रेष्ठ मामाराधय नित्यशः ॥ मत्प्रसादाद्ध्रुवं मोक्षं प्राप्स्यसि त्वं समीहितम् ॥ १८६ ॥ मद्भक्ताः क्षत्रिया वैश्याः स्त्रियः शूद्रास्तथान्त्यजाः ॥ प्राप्नुवन्ति परां सिद्धिं किं पुनस्त्वं द्विजोत्तम ॥ १८७ ॥ श्वपाकोऽपि च मद्भक्तः सम्यक्श्रद्धासमन्वितः ॥ प्राप्नोत्यभिमतां सिद्धिमन्येषामत्र का कथा ॥ १८८ ॥ ॥ व्यास उवाच ॥ एवमुक्त्वा तु तं विप्राः स देवो भक्तवत्सलः ॥ दुर्विज्ञेयगतिर्विष्णुस्तत्रैवान्तरधीयत ॥ १८९ ॥ गते तस्मिन्मुनिश्रेष्ठाः कण्डुः संहृष्टमानसः ॥ सर्वान्कामान्परित्यज्य स्वस्थचित्तो भवत्पुनः ॥ ॥ १९० ॥ सर्वेन्द्रियाणि संयम्य निर्ममो निरहंकृतिः ॥ एकाग्रमानसः सम्यग्ध्यात्वा तं पुरुषोत्तमम् ॥ १९१ ॥ निर्लेपं निर्गुणं शान्तं सत्तामात्रव्यवस्थितम् ॥ अवाप परमं मोक्षं सुराणामपि दुर्लभम् ॥ १९२ ॥ यः पठेच्छृणुयाद्वाऽपि कथां कण्डोर्महात्मनः ॥ विमुक्तः सर्वपापेभ्यः स्वर्ग

लोकं स गच्छति ॥ १९३ ॥ एवं मया मुनिश्रेष्ठाः कर्मभूमिरुदाहृता ॥ मोक्षक्षेत्रं च परमं देवं च पुरुषोत्तमम् ॥ १९४ ॥ ये पश्यन्ति विभुं स्तुवन्ति वरदं ध्यायन्ति मुक्तिप्रदं भक्त्या श्रीपुरुषोत्तमाख्यमजरं संसारदुःखापहम् ॥ ते भुक्त्वा मनुजेन्द्रभोगममलाः स्वर्गे च दिव्यं सुखं पश्चाद्यान्ति समस्तदोषरहिताः स्थानं हरेरव्ययम्॥ १९५॥ इति श्रीब्रह्मपुराणे स्वयंभुऋषिसंवादे कण्डोरुपाख्याननिरूपणं नामैकोनसप्ततितमोऽध्यायः ॥६९॥

लोमहर्षण उवाच ॥ व्यासस्य वचनं श्रुत्वा मुनयः संतयेन्द्रियाः ॥ प्रीता बभूवुः संहृष्टा विस्मिताश्च पुनः पुनः ॥ १ ॥ ॥ मुनय ऊचुः ॥ अहो भारतवर्षस्य त्वया संकीर्तिता गुणाः ॥ तद्वच्छ्रीपुरुषाख्यस्य क्षेत्रस्य पुरुषोत्तम ॥ २ ॥ विस्मयो न भवेत्कस्य श्रुत्वा माहात्म्यमुत्तमम् ॥ पुरुषाख्यस्य क्षेत्रस्य प्रीतिश्च वदतां वर ॥ ३ ॥ चिरात्प्रभृति चास्माकं संशयो हृदि वर्तते ॥ त्वदृते संशयस्यास्य च्छेत्ता नान्योऽस्ति भूतले ॥ ४ ॥ उत्पत्तिं बलदेवस्य कृष्णस्य च महीतले ॥ सुभद्रायाश्च कात्स्न्र्येन पृच्छामस्त्वां महामुने ॥५ ॥ किमर्थं तौ समुत्पन्नौ कृष्णसंकर्षणावुभौ ॥ वसुदेव गृहे वीरौ सा च तत्र गृहे मुने ॥ ६ ॥ निःसारे मृत्युलोकेऽस्मिन्दुःखप्रायेऽतिचञ्चले ॥ जलबुद्बुदसंकाशे भैरवे लोमहर्षणे ॥ ७॥ विण्मूत्रपिच्छलं कष्टं संकटं दुःखदायकम् ॥ कथं घोरतरं तेषां गर्भवासमरोचत ॥ ८ ॥ यानि कर्माणि चक्रुस्ते समुत्पन्ना महीतले ॥ विस्तरेण मुने तानि ब्रूहि नो वदतां वर ॥ ९ ॥ वदस्व चरितं तेषामद्भुतं चातिमानुषम् ॥ कथं स भगवान्देवः सुरेशः सुरसत्तमः ॥ १० ॥ वसुदेवगृहे धीमान्वासुदेवत्वमागतः ॥ अमरैश्चाऽऽवृतं पुण्यं पुण्यकृद्भिरलंकृतम् ॥ ११ ॥ देवलोकं समुत्सृज्य मर्त्यलोक इहाऽऽगतः ॥ देवमानुष योनीनां द्याभुवः प्रभवोऽव्ययः ॥ १२ ॥ किमर्थं दिव्यमात्मानं मानुषेषु न्ययोजयत् ॥ यश्चक्रं वर्तयत्येको मानुषाणामनामयम् ॥ १३॥ मानुष्ये स कथं बुद्धिं चक्रे चक्रगदाधरः ॥ गोपायनं यः कुरुते जगतः सार्वभौतिकम्॥१४॥स कथं गां गतो विष्णुर्गोपत्वमकरोत्प्रभुः ॥ महाभूतानि भूतात्मा यो दधार चकार च ॥१५॥श्रीगर्भः स कथं गर्भे स्त्रिया भूचरया धृतः ॥ येन लोकान्क्रमैर्जित्वा त्रिभिर्वै त्रिदशेप्सया॥१६॥ स्थापिता जवतो मार्गास्त्रिवर्गप्रवरास्त्रयः ॥ योऽन्तकाले जगत्पीत्वा कृत्वा तोयमयं वपुः ॥ १७ ॥ लोकमेकार्णवं चक्रे दृश्यादृश्येन चाऽऽत्मना ॥ यः पुराणः पुराणात्मा वाराहं रूपमास्थितः ॥ १८ ॥ विषाणाग्रेण वसुधामुज्जहारारिसूदनः ॥ यः पुरा पुरुहूतार्थे त्रैलोक्यमिदमव्ययम्॥१९॥ददौ जित्वा वसुमतीं सुराणां सुरसत्तमः॥येन सिंहवपुः कृत्वा द्विधा कृत्वा च तत्पुनः ॥ २० ॥ पूर्वदैत्यो महावीर्यो हिरण्यकशिपुर्हतः ॥ यः पुरा ह्यनलो भूत्वा और्वः संवर्तको विभुः ॥ २१ ॥ पातालस्थोऽर्णवरसं पपौ तोयमयं हरिः ॥ सहस्रचरणं ब्रह्म सहस्रांशुसहस्रदम् ॥२२॥ सहस्रशिरसं देवं यमाहुर्वै युगे युगे ॥ नाभ्यां पद्मं समुद्भूतं यस्य पैतामहं गृहम् ॥२३॥

एकार्णवे नागलोके तप्तकांचनपङ्कजम् ॥ येन ते निहता दैत्याः संग्रामे तारकामये ॥ २४ ॥ सर्वदेवमयं कृत्वा सर्वायुधधरं वपुः ॥ गरुडस्थेन चोत्सिक्तः कालनेमिर्निपातितः ॥ २५ ॥ उत्तरान्ते समुद्रस्य क्षीरोदस्यामृतोदधौ ॥ यः शेते शाश्वतं योगमास्थाय तिमिरं महत् ॥ ॥ २६ ॥ सुरारणी गर्भमधत्त दिव्यं तपःप्रकर्षाददितिः पुराणम् ॥ शक्रं च यो दैत्यगणावरुद्धं गर्भावधानेन कृतं चकार ॥ २७ ॥ पदानि यो योगमयानि कृत्वा चकार दैत्यान्सलिलेशयस्थान् ॥ कृत्वा च देवांस्त्रिदशेश्वरांस्तु चक्रे सुरेशं पुरुहूतमेव ॥ २८॥ गार्हपत्येन विधिना अन्वाहार्येण कर्मणा ॥ अग्निमाहवनीयं च वेदं दीक्षां समिद्ध्रुवम् ॥ २९ ॥ प्रोक्षणीयं स्रुवं चैव आवभृथ्यं तथैव च ॥ अवाक्पाणिस्तु यश्चक्रे हव्य भागभुजस्तथा ॥ ३० ॥ हव्यादांश्च सुरांश्चक्रे कव्यादांश्च पितॄनपि ॥ भागार्थं यज्ञविधिनाऽयोजयद्यज्ञकर्मणि ॥ ३१ ॥ पात्राणि दक्षिणां दीक्षां चरूंश्चोलूखलानि च ॥ यूपं समित्स्रुवं सोमं पवित्रान्परिधीनपि ॥ ३२ ॥ यज्ञियानि च द्रव्याणि चमसांश्च तथाऽपरान् ॥ सदस्यान्यजमानांश्च मेधादींश्च क्रतूत्तमान् ॥ ३३ ॥ विबभाज पुरा यस्तु पारमेष्ठ्येन कर्मणा ॥ युगानुरूपं यः कृत्वा लोकाननुपराक्रमात् ॥ ३४ ॥ क्षणा निमेषाः काष्ठाश्च कलास्त्रैकाल्यमेव च ॥ मुहूर्तास्तिथयो मासा दिनं संवत्सरस्तथा ॥ ३५ ॥ ऋतवः कालयोगाश्च प्रमाणं त्रिविधं त्रिषु ॥ आयुःक्षेत्राण्यु पचयो लक्षणं रूपसौष्ठवम् ॥ ३६ ॥ त्रयो लोकास्त्रयो देवास्त्रैविद्यं पावकास्त्रयः ॥ त्रैकाल्यं त्रीणि कर्माणि त्रयो वर्णास्त्रयो गुणाः ॥ ३७ ॥ सृष्टा लोकाः पुरा सर्वे येनानन्तेन कर्मणा ॥ सर्वभूतगतः स्रष्टा सर्वभूतगुणात्मना ॥ ३८ ॥ नृणामिन्द्रियपूर्वेण योगेन रमते च यः ॥ गताग ताभ्यां यो नेता य एव विधिरीश्वरः ॥ ३९ ॥ यो गतिर्धर्मयुक्तानामगतिः पापकर्मणाम् ॥ चातुर्वर्ण्यस्य प्रभवश्चातुर्वर्ण्यस्य रक्षिता ॥ ४० ॥ चातुर्विद्यस्य यो वेत्ता चातुराश्रम्यसंश्रयः ॥ दिगन्तरं नभो भूमिर्वायुर्वाऽथ विभावसुः ॥ ४१ ॥ चन्द्रसूर्यमयं ज्योतिर्युगेशः क्षणदाचरः ॥ यः परं श्रूयते ज्योतिर्यः परं श्रूयते तपः ॥ ४२ ॥ यं परं प्राहुरपरं यः परः परमात्मवान् ॥ आदित्यानां तु यो देवो यश्च दैत्यान्तको विभुः ॥ ॥ ४३ ॥ युगान्तेष्वन्तको यश्च यश्च लोकान्तकान्तकः ॥ सेतुर्यो लोकसेतूनां मेध्यो यो मेध्यकर्मणाम् ॥ ४४ ॥ वेद्यो यो वेदविदुषां प्रभुर्यः प्रभवात्मनाम् ॥ सोमभूतस्तु सौम्यानामग्निभूतोऽग्निवर्चसाम् ॥ ४५ ॥ यः शक्राणामीशभूतस्तपोभूतस्तपस्विनाम् ॥ विनयो नयवृत्तीनां तेजस्तेज स्विनामपि ॥ ४६ ॥ विग्रहो विग्रहार्हाणां गतिर्गतिमतामपि ॥ आकाशप्रभवो वायुर्वायोः प्राणाद्धुताशनः ॥ ४७ ॥ दिवो हुताशनः प्राणः प्राणोऽग्निर्मधुसूदनः ॥ रसाच्छोणितसंभूतिः शोणितान्मांसमुच्यते ॥४८॥ मांसात्तु मेदसो जन्म मेदसोऽस्थि निरुच्यते ॥ अस्थ्नो मज्जा समभवन्म

परिवर्तनात् ॥ १७ ॥ एवमेव च क्षेत्रज्ञः क्षेत्रज्ञानपरिक्षयात् ॥ प्रकृत्या निर्गुणस्त्वेष इत्येवमनुशुश्रुम ॥ १८ ॥ क्षरो भवत्येष यदा गुणवती गुणे ष्वथ ॥ प्रकृतिं त्वथ जानाति निर्गुणत्वं तथाऽऽत्मनः ॥ १९ ॥ तथा विशुद्धो भवति प्रकृतेः परिवर्जनात् ॥ अन्योऽहमन्येयमिति यदा बुद्धयति बुद्धिमान् ॥ २० ॥ तदैषोऽन्यथतामेति न च मिश्रत्वमाव्रजेत् ॥ प्रकृत्या चैष राजेन्द्र मिश्रोऽन्योऽन्यस्य दृश्यते ॥ २१ ॥ यदा तु गुणजालं तत्प्राकृतं विजुगुप्सते ॥ पश्यते च परं पश्यंस्तदा पश्यन्नु संसृजेत् ॥ २२ ॥ किं मया कृतमेतावद्योऽहं कालनिमज्जनः ॥ यथा मत्स्यो ह्यभिज्ञानादनुवर्तितवाञ्जलम् ॥ २३ ॥ अहमेव हि संमोहादन्यमन्यं जनाज्जनम् ॥ मत्स्यो यथोदकज्ञानादनुवर्त्तितवानिह ॥ २४ ॥ मत्स्योऽन्यत्वमथाज्ञानादुदकान्नाभिमन्यते ॥ आत्मानं तदवज्ञानादन्यं चैव न वेद्म्यहम् ॥ २५ ॥ ममास्तु धिक्कुबुद्धस्य योऽहं मग्न इमं पुनः ॥ अनुवर्तितवान्मोहादन्यमन्यं जनाज्जनम् ॥ २६ ॥ अयमनुभवेद्बन्धुरनेन सह मे क्षयम् ॥ साम्यमेकत्वतां यातो यादृशस्तादृशस्त्विह ॥ २७ ॥ तुल्यतामिह पश्यामि सदृशोऽहमनेन वै ॥ अयं हि विमलो व्यक्तमहमीदृशकस्तदा ॥ २८ ॥ योऽहमज्ञानसंमोहादज्ञया संप्रवृत्तवान् ॥ संसर्गादतिसंसर्गात्स्थितः कालमिमं त्वहम् ॥ २९ ॥ सोऽहमेवं वशीभूतः कालमेतं न बुद्धवान् ॥ उत्तमाधममध्यानां तामहं कथमावसे ॥ ३० ॥ समानमायया चेह सहवासमहं कथम् ॥ गच्छाम्यबुद्धभावत्वादिदेदानीं स्थिरोऽभवम् ॥ ३१ ॥ सहवासं न यास्यामि कालमेतं विवञ्चनात् ॥ वञ्चितो ह्यनया यद्धि निर्विकारो विकारया ॥ ३२ ॥ न तत्तदपराद्धं स्यादपराधो ह्ययं मम ॥ योऽहमत्राभवं सक्तः पराङ्मुखमुपस्थितः ॥ ३३ ॥ ततोऽस्मिन्बहुरूपेऽथ स्थितो मूर्तिरमूर्तिमान् ॥ अमूर्तिश्चाप्यमूर्तात्मा ममत्वेन प्रधर्षितः ॥ ३४ ॥ प्रकृत्या च तया तेन तासु तास्विह योनिषु ॥ निर्ममस्य ममत्वेन विकृतं तासु तासु च ॥ ३५ ॥ योनिषु वर्तमानेन नष्टसंज्ञेन चेतसा ॥ समता न मया काचिदहंकारे कृता मया ॥ ३६ ॥ आत्मानं बहुधा कृत्वा सोऽयं भूयो युनक्ति माम् ॥ इदानीमवबुद्धोऽस्मि निर्ममो निरहंकृतः ॥ ३७ ॥ ममत्वं मनसा नित्यमहंकारकृतात्मकम् ॥ अपलग्नामिमां हित्वा संश्रयिष्ये निरामयम् ॥ ३८ ॥ अनेन साम्यं यास्यामि नानयाऽहमचेतसा ॥ क्षेमं मम सहानेन नैवैकमनया सह ॥ ॥ ३९ ॥ एवं परमसंबोधात्पञ्चविंशोऽनुबुद्धवान् ॥ अक्षरत्वं निगच्छति त्यक्त्वा क्षरमनामयम् ॥ ४० ॥ अव्यक्तं व्यक्तधर्माणं सगुणं निर्गुणं तथा ॥ निर्गुणं प्रथमं दृष्ट्वा तादृग्भवति मैथिल ॥ ४१ ॥ अक्षरक्षरयोरेतदुक्तं तव निदर्शनम् ॥ मयेह ज्ञानसंपन्नं यथा श्रुतिनिदर्शनात् ॥ ४२ ॥ निःसंदिग्धं च सूक्ष्मं च विशुद्धं विमलं तथा ॥ प्रवक्ष्यामि तु ते भूयस्तान्निबोध यथाश्रुतम् ॥ ४३ ॥ सांख्ययोगो

मया प्रोक्तः शास्त्रद्वयनिदर्शनात् ॥ यदेव सांख्यशास्त्रोक्तं योगदर्शनमेव तत् ॥ ४४ ॥ प्रबोधनपरं ज्ञानं सांख्यानामवनीपते ॥
विस्पष्टं प्रोच्यते तत्र शिष्याणां हितकाम्यया ॥ ४५ ॥ बृहच्चैवमिदं शास्त्रमित्याहुर्विदुषो जनाः ॥ अस्मिंश्च शास्त्रे योगानां पुनर्भव
पुरःसरम् ॥ ४६ ॥ पञ्चविंशात्परं तत्त्वं पठ्यते च नराधिप ॥ सांख्यानां तु परं तत्त्वं यथावदनुवर्णितम् ॥ ४७ ॥ बुद्धमप्रतिबुद्धं च
बुध्यमानं च तत्त्वतः ॥ बुध्यमानं च बुद्धत्वं प्राहुर्योगनिदर्शनम् ॥ ४८ ॥ इति श्रीब्रह्मपुराणे वसिष्ठकरालजनकसंवादे षट्त्रिंशाधिकशततमो
ऽध्यायः ॥ १३६ ॥ ॥ वसिष्ठ उवाच ॥ अप्रबुद्धमथाव्यक्तमिमं गुणनिधिं सदा ॥ गुणानां धार्यतां तत्त्वं सृजत्याक्षिपते तथा ॥ १ ॥ अजो हि
क्रीडया भूप विक्रियां प्राप्त इत्युत ॥ आत्मानं बहुधा कृत्वा नानेव प्रतिचक्षते ॥ २ ॥ एतदेवं विकुर्वाणो बुध्यमानो न बुध्यते ॥ गुणाना
चरते ह्येष सृजत्याक्षिपते तथा ॥ ३ ॥ अव्यक्तबोधनाच्चैव बुध्यमानं वदन्त्यपि ॥ न त्वेवं बुध्यतेऽव्यक्तं सगुणं नच निर्गुणम् ॥ ४ ॥ कदाचित्त्वेव
खल्वेतत्तदाहुः प्रतिबुद्धकम् ॥ बुध्यते यदि वाव्यक्तमेतद्वै पञ्चविंशकम् ॥ ५ ॥ बुध्यमानो भवत्येव ममात्मक इति श्रुतिः ॥ अन्योन्यप्रतिबुद्धेन
वदन्त्यव्यक्तमच्युतम् ॥ ६ ॥ अव्यक्तबोधनाच्चैव बुध्यमानं वदन्त्युत ॥ पञ्चविंशं महात्मानं न चासावपि बुद्धचते ॥ ७ ॥ षड्विंशं विमलं बुद्धम
प्रमेयं सनातनम् ॥ सततं पञ्चविंशं च चतुर्विंशं विबुद्धचते ॥ ८ ॥ दृश्यादृश्ये ह्यनुगततत्स्वभावे महाद्युते ॥ अव्यक्तं चैव तद्ब्रह्म बुध्यते तात केव
लम् ॥ ९ ॥ पञ्चविंशं चतुर्विंशमात्मानमनुपश्यति ॥ बुध्यमानो यदाऽऽत्मानमन्योऽहमिति मन्यते॥१०॥तदा प्रकृतिमानेष भवत्यव्यक्तलोचनः ॥
बुध्यते च परां बुद्धिं विशुद्धाममलां यथा ॥ ११ ॥ षड्विंशं राजशार्दूल तदा बुद्धः कृतो व्रजेत् ॥ ततस्त्यजति सोऽव्यक्तं सर्गप्रलयधर्मिणम् ॥
॥ १२ ॥ निर्गुणां प्रकृतिं वेद गुणयुक्तामचेतनाम् ॥ ततः केवलधर्माऽसौ भवत्यव्यक्तदर्शनात् ॥ १३ ॥ केवलेन समागम्य विमुक्तात्मानमाप्नु
यात् ॥ एतत्तु तत्त्वमित्याहुर्निस्तत्त्वमजरामरम् ॥ १४ ॥ तत्वसंश्रवणादेव तत्वज्ञो जायते नृप ॥ पञ्चविंशतितत्वानि प्रवदन्ति मनीषिणः ॥ १५ ॥
न चैव तत्ववांस्तात संसारेषु निमज्जति ॥ एषामुपैति तत्वं हि क्षिप्रं बुध्यस्व लक्षणम् ॥ १६ ॥ षड्विंशोऽयमिति प्राज्ञो गृह्यमाणोऽजरामरः ॥
केवलेन बलेनैव समतां यात्यसंशयम् ॥ १७ ॥ षड्विंशेन प्रबुद्धेन बुध्यमानोऽप्यबुद्धिमान् ॥ एतन्नानात्वमित्युक्तं सांख्यश्रुतिनिदर्शनात् ॥ १८ ॥
चेतनेन समेतस्य पञ्चविंशतिकस्य ह ॥ एकत्वं वै भवेत्तस्य यदा बुद्ध्याऽनुबुध्यते ॥ १९ ॥ बुध्यमानेन बुद्धेन समतां याति मैथिल ॥ सङ्गधर्मा
भवत्येष निःसङ्गात्मा नराधिप ॥ २० ॥ निःसङ्गात्मानमासाद्य षड्विंशं कर्मजं विदुः ॥ विभुस्त्यजति चाव्यक्तं यदा त्वेतद्विबुध्यते ॥ २१ ॥

चतुर्विंशमगाधं च षड्विंशस्य प्रबोधनात् ॥ एवं ह्यप्रतिबुद्धश्च बुध्यमानस्तु तेऽनघ ॥ २२ ॥ प्रोक्तो बुद्धश्च तत्वेन यथाश्रुतिनिदर्शनात् ॥ मशको दुम्बरे यद्वदन्यत्वं तद्वदेतयोः ॥ २३ ॥ मत्स्योदके यथा तद्वदन्यत्वमुपलभ्यते ॥ एवमेव च मन्तव्यं नानात्वैकत्वमेतयोः ॥ २४ ॥ एतावान्मोक्ष इत्युक्तो ज्ञानविज्ञानसंज्ञितः ॥ पञ्चविंशतिकस्याऽऽशु योऽयं देहे प्रवर्तते ॥ २५ ॥ एष मोक्षयितव्येति प्राहुरव्यक्तगोचरात् ॥ सोऽयमेवं विमुच्येत नान्यथेति विनिश्चयः ॥२६॥ परश्च परधर्मा च भवत्येव समेत्य वै ॥ विशुद्धधर्मा शुद्धेन नाशुद्धेन च बुद्धिमान् ॥२७॥ विमुक्तधर्मा बुद्धेन समेत्य पुरुषर्षभ ॥ वियोगधर्मिणा चैव विमुक्तात्मा भवत्यथ ॥ २८ ॥ विमोक्षिणा विमोक्षश्च समेत्येह तथा भवेत् ॥ शुचिकर्मा शुचिश्चैव भवत्यमितबुद्धिमान् ॥ २९ ॥ विमलात्मा च भवति समेत्य विमलात्मना ॥ केवलात्मा तथा चैव केवलेन समेत्य वै ॥ स्वतन्त्रश्च स्वतन्त्रेण स्वतन्त्रत्वमवाप्यते ॥ ३० ॥ एतावदेतत्कथितं मया ते तथ्यं महाराज यथार्थतत्त्वम् ॥ अमत्सरस्त्वं प्रतिगृह्य बुद्ध्या सनातनं ब्रह्म विशुद्धमाद्यम् ॥ ३१ ॥ नावेदनिष्ठस्य जनस्य राजन्प्रदेयमेतत्परमं त्वया भवेत् ॥ विधित्समानाय निबोधकारकं प्रबोधहेतोः प्रणतस्य शासनम् ॥ ३२ ॥ न देयमेतच्च यथाऽनृतात्मने शठाय क्लीबाय न जिह्मबुद्धये ॥ न पण्डितज्ञानपरोपतापिने देयं तथा शिष्यविबोधनाय ॥ ३३ ॥ श्रद्धान्वितायाथ गुणान्विताय परापवादाद्विरताय नित्यम् ॥ विशुद्धयोगाय बुधाय चैव क्षमावतेऽथ कृपया युताय ॥ ३४ ॥ विविक्तशीलाय विधिप्रियाय विवादहीनाय बहुश्रुताय ॥ विनीतवेशाय नहैतुकात्मने सदैव गुह्यं त्विदमेव देयम् ॥ ३५ ॥ एतैर्गुणैर्हीनतमे न देयमेतत्परं ब्रह्म विशुद्धमाहुः ॥ न श्रेयसे योक्ष्यति तादृशे कृतं धर्मप्रवक्तारमपात्रदानात् ॥ ३६ ॥ पृथ्वीमिमां वा यदि रत्नपूर्णां दद्याददेयं त्विदमव्रताय ॥ जितेन्द्रियाय प्रयताय देयं देयं परं तत्त्वविदे नरेन्द्र ॥ ३७ ॥ कराल मा ते भयमस्तु किंचिदेतच्छ्रुतं ब्रह्म परं त्वयाऽद्य ॥ यथावदुक्तं परमं पवित्रं विशोकमत्यन्तमनादिमध्यम् ॥ ३८ ॥ अगाधमेतदजरामरं च निरामयं वीतभयं शिवं च ॥ समीक्ष्य मोहं परवादसंज्ञमेतस्य तत्त्वार्थमिमं विदित्वा ॥ ३९ ॥ अवाप्तमेतद्धि पुरा सनातनाद्धिरण्यगर्भाद्धि ततो नराधिप ॥ प्रसाद्य यत्नेन तमुग्रतेजसं सनातनं ब्रह्म यथा त्वयैतत् ॥ ४० ॥ पृष्टस्त्वया चाऽस्मि यथा नरेन्द्र तथा मयेदं त्वयि नोक्तमन्यत् ॥ यथाऽवाप्तं ब्रह्मणो मे नरेन्द्र महाज्ञानं मोक्षविदां परायणम् ॥ ४१ ॥ ॥ व्यास उवाच ॥ एतदुक्तं परं ब्रह्म यस्मान्नाऽऽवर्तते पुनः ॥ पञ्चविंशं मुनिश्रेष्ठा वसिष्ठेन यथा पुरा ॥ ४२ ॥ पुनरावृत्तिमाप्नोति परमं ज्ञानमव्ययम् ॥ नाति बुध्यति तत्त्वेन बुध्यमानोऽजरामरम् ॥ ४३ ॥ एतन्निःश्रेयसकरं ज्ञानं भोः परमं मया ॥ कथितं तत्त्वतो विप्राः श्रुत्वा देवर्षितो द्विजाः ॥

॥ ४४ ॥ हिरण्यगर्भादृषिणा वसिष्ठेन समाहृतम् ॥ वसिष्ठादृषिशार्दूलो नारदोऽवाप्तवानिदम् ॥ ४५ ॥ नारदाद्विदितं मह्यमेतदुक्तं सनातनम् ॥ मा शुचध्वं मुनिश्रेष्ठाः श्रुत्वैतत्परमं पदम् ॥ ४६ ॥ येन क्षराक्षरे भिन्ने न भयं तस्य विद्यते ॥ विद्यते तु भयं यस्य यो नैनं वेत्ति तत्त्वतः ॥ ४७ ॥ अविज्ञानाच्च मूढात्मा पुनः पुनरुपद्रवान् ॥ प्रेत्य जातिसहस्राणि मरणान्तान्युपाश्नुते ॥ ४८ ॥ देवलोकं तथा तिर्यङ्मानुष्यमपि चाश्नुते ॥ यदि वा मुच्यते वाऽपि तस्मादज्ञानसागरात् ॥ ४९ ॥ अज्ञानसागरे घोरे ह्यव्यक्तागाध उच्यते ॥ अहन्यहनि मज्जन्ति यत्र भूतानि भो द्विजाः ॥ ॥ ५० ॥ तस्मादगाधादव्यक्तादुपक्षीणात्सनातनात् ॥ तस्माद्यूयं विरजस्का वितमस्काश्च भो द्विजाः ॥ ५१ ॥ एवं मया मुनिश्रेष्ठाः सारात्सारतरं परम् ॥ कथितं परमं मोक्षं यं ज्ञात्वा न निवर्तते ॥ ५२ ॥ न नास्तिकाय दातव्यं नाभक्ताय कदाचन ॥ न दुष्टमतये विप्रा न श्रद्धाविमुखाय च ॥ ५३ ॥ इति श्रीब्रह्मपुराणे वसिष्ठकरालजनकसंवादसमाप्तिनिरूपणं नाम सप्तत्रिंशाधिकशततमोऽध्यायः ॥ १३७ ॥

॥ लोमहर्षण उवाच ॥ एवं पुरा मुनीन्व्यासः पुराणं श्लक्ष्णया गिरा ॥ दशाष्टदोषरहितैर्वाक्यैः सारतरैर्द्विजाः ॥ १ ॥ पूर्णमस्तमलैः शुद्धैर्नानाशास्त्रसमुच्चयैः ॥ जातिशुद्धसमायुक्तं सांख्ययोगोपशोभितम्[1] ॥ २ ॥ पूर्वपक्षोक्तिसिद्धान्तपरिनिष्ठासमन्वितम् ॥ श्रावयित्वा यथान्यायं विरराम महामतिः ॥ ३ ॥ तेऽपि श्रुत्वा मुनिश्रेष्ठाः पुराणं वेदसंमितम् ॥ आद्यं ब्राह्माभिधानं च सर्ववाञ्छाफलप्रदम् ॥ ४ ॥ हृष्टा बभूवुः सुप्रीता विस्मिताश्च पुनः पुनः ॥ प्रशशंसुस्तदा व्यासं कृष्णद्वैपायनं मुनिम् ॥ ५ ॥ ॥ मुनय ऊचुः ॥ अहो त्वया मुनिश्रेष्ठ पुराणं श्रुतिसंमितम् ॥ सर्वाभिप्रेतफलदं सर्वपापहरं परम् ॥ ६ ॥ प्रोक्तं श्रुतं तथाऽस्माभिर्विचित्रपदमक्षरम् ॥ न तेऽस्त्यविदितं किंचित्त्रिषु लोकेषु वै प्रभो ॥ ७ ॥ सर्वज्ञस्त्वं महाभाग देवेष्विव बृहस्पतिः ॥ नमस्यामो महाप्राज्ञं ब्रह्मिष्ठं त्वां महामुनिम् ॥ ८ ॥ येन त्वया तु वेदार्था भारते प्रकटीकृताः ॥ कः शक्नोति गुणान्वक्तुं तव सर्वान्महामुने ॥ ९ ॥ अधीत्य चतुरो वेदान्साङ्गान्व्याकरणानि च ॥ कृतवान्भारतं शास्त्रं तस्मै ज्ञानात्मने नमः ॥ १० ॥ नमोऽस्तु ते व्यास विशालबुद्धे फुल्लारविन्दायतपत्रनेत्र ॥ येन त्वया भारततैलपूर्णः प्रज्वालितो ज्ञानमयः प्रदीपः ॥ ११ ॥ अज्ञानतिमिरान्धानां भ्रामितानां कुदृष्टिभिः ॥ ज्ञानाञ्जनशलाकेन त्वया चोन्मीलिता दृशः ॥ १२ ॥ एवमुक्त्वा समभ्यर्च्य व्यासं ते चैव पूजिताः ॥ जग्मुर्यथागतं सर्वे कृतकृत्याः स्वमाश्रमम् ॥ १३ ॥ तथा मया मुनिश्रेष्ठाः कथितं हि सनातनम् ॥ पुराणं सुमहापुण्यं सर्वपापप्रणाशनम् ॥ १४ ॥ यथा भवद्भिः पृष्टोऽहं संप्रश्नं द्विजसत्तमाः ॥ व्यास



[1] साधुशब्दोपशोभितम् ।

प्रसादात्तत्सर्वं मया संपरिकीर्तितम् ॥ १५ ॥ इदं गृहस्थैः श्रोतव्यं यतिभिर्ब्रह्मचारिभिः ॥ धनसौख्यप्रदं नृणां सर्वपातकनाशनम् ॥ १६ ॥ तथा ब्रह्मपरैर्विप्रैर्ब्राह्मणाद्यैः सुसंयतैः ॥ श्रोतव्यं सुप्रयत्नेन सम्यक् श्रेयोभिकांक्षिभिः ॥ १७ ॥ प्राप्नोति ब्राह्मणो विद्यां क्षत्रियो विजयं रणे ॥ वैश्यस्तु धनमक्षय्यं शूद्रः सुखमवाप्नुयात् ॥ १८ ॥ यं यं काममभिध्यायञ्शृणोति पुरुषः शुचिः ॥ तं तं काममवाप्नोति नरो नास्त्यत्र संशयः ॥ १९ ॥ पुराणं वैष्णवं त्वेतत्सर्वकिल्बिषनाशनम् ॥ विशिष्टं सर्वशास्त्रेभ्यः पुरुषार्थोपपादकम् ॥ २० ॥ एतद्वो यन्मयाऽऽख्यातं पुराणं वेदसंमितम् ॥ श्रुतेऽस्मिन्सर्वदोषोत्थः पापराशिः प्रणश्यति ॥ २१ ॥ प्रयागे पुष्करे चैव कुरुक्षेत्रे तथाऽर्बुदे ॥ उपोष्य यदवाप्नोति तदस्य श्रवणान्नरः ॥ २२ ॥ यदग्निहोत्रे सुहुते वर्षेणाऽऽप्नोति वै फलम् ॥ महापुण्यमयं विप्रास्तदस्य श्रवणात्सकृत् ॥ २३ ॥ प्रौष्ठपद्यां च द्वादश्यां स्नात्वा वै यमुनाजले ॥ मथुरायां हरिं दृष्ट्वा प्राप्नोति पुरुषः फलम् ॥ २४ ॥ तदाप्नोति फलं सम्यक्समाधानेन कीर्तनात् ॥ पुराणेऽस्य हि भो विप्राः केशवार्पितमानसः ॥ २५ ॥ मत्फलं श्रियमालोक्य पुरुषोऽथ लभेन्नरः ॥ तत्फलं समवाप्नोति यः पठेच्छृणुयादपि ॥ २६ ॥ इदं यः श्रद्धया नित्यं पुराणं वेदसंमितम् ॥ यः पठेच्छृणुयान्मर्त्यः स याति भवनं हरेः ॥ २७ ॥ श्रावयेद्ब्राह्मणो यस्तु सदा पर्वसु संयतः ॥ एकादश्यां द्वादश्यां च विष्णुलोकं स गच्छति ॥ २८ ॥ इदं यशस्यमायुष्यं सुखदं कीर्तिवर्धनम् ॥ बलपुष्टिप्रदं विप्रा धन्यं दुःस्वप्ननाशनम् ॥ २९ ॥ त्रिसंध्यं यः पठेद्विद्वाञ्श्रद्धया सुसमाहितः ॥ इदं वरिष्ठमाख्यानं स सर्वमीप्सितं लभेत् ॥ ३० ॥ रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ॥ भयाद्विमुच्यते भीत आपदापन्न आपदः ॥ ३१ ॥ जातिस्मरत्वं विद्यां च पुत्रान्मेधां पशून्धृतिम् ॥ धर्मं चार्थं च कामं च मोक्षं तु लभते नरः ॥ ३२ ॥ यान्यान्कामानभिप्रेत्य पठेत्प्रयतमानसः ॥ तांस्तान्सर्वानवाप्नोति पुरुषो नात्र संशयः ॥ ३३ ॥ यश्चेदं सततं शृणोति मनुजः स्वर्गापवर्गप्रदं विष्णुं लोकगुरुं प्रणम्य वरदं भक्त्यैकचित्तः शुचिः ॥ भुक्त्वा चात्र सुखं विमुक्तकलुषः स्वर्गे च दिव्यं सुखं पश्चाद्याति हरेः पदं सुविमलं मुक्तो गुणैः प्राकृतैः ॥ ३४ ॥ तस्माद्विप्रवरैः स्वधर्मनिरतैर्मुक्त्यैकमार्गेप्सुभिस्तद्वत्क्षत्रियपुंगवैस्तु नियतैः श्रेयोर्थिभिः सर्वदा ॥ वैश्यैश्चानुदिनं विशुद्धकुलजः शूद्रैस्तथा धार्मिकैः श्रोतव्यं त्विदमुत्तमं बहुफलं धर्मार्थमोक्षप्रदम् ॥३५॥ धर्मे मतिर्भवतु वः पुरुषोत्तमानां स ह्येक एव परलोकगतस्य बन्धुः ॥ अर्थाः स्त्रियश्च निपुणैरपि सेव्यमाना नैव प्रभावमुपयान्ति न च स्थिरत्वम् ॥ ३६ ॥

धर्मेण राज्यं लभते मनुष्यः स्वर्गं च धर्मेण नरः प्रयाति ॥ आयुश्च कीर्तिं च तपश्च धर्मं धर्मेण मोक्षं लभते मनुष्यः ॥ ३७ ॥ धर्मोऽत्र मातापितरौ नरस्य धर्मः सखा चात्र परे च लोके ॥ त्राता च धर्मस्त्विह मोक्षदश्च धर्मादृते नास्ति तु किंचिदेव ॥ ३८ ॥ इदं रहस्यं श्रेष्ठं च पुराणं वेदसंमितम् ॥ न देयं पापमतये नास्तिकाय विशेषतः ॥ ३९ ॥ इदं मयोक्तं प्रवरं पुराणं पापापहं धर्मविवर्धनं च ॥ श्रुतं भवद्भिः परमं रहस्यमाज्ञापयध्वं मुनयो व्रजामि ॥ ४० ॥ इति श्रीब्रह्मपुराणे रोमहर्षणमुनिसंवादे पुराणप्रशंसनं नामाऽष्टात्रिंशाधिकशततमोऽध्यायः ॥ १३८ ॥



श्रीगणेशाय नमः ॥ अथ गौतमीमाहात्म्यम् ॥ मुनय ऊचुः ॥ नहि नस्तृप्तिरस्तीह शृण्वतां तीर्थविस्तरम् ॥ पुनरेव परं गुह्यं वक्तुमर्हस्यशेषतः ॥
परं तीर्थस्य माहात्म्यं सर्वतीर्थोत्तमोत्तमम् ॥ १ ॥ ब्रह्मोवाच ॥ इममेव पुरा प्रश्नं पृष्टोऽहं द्विजसत्तमाः ॥ नारदेन प्रयत्नेन तदा तं प्रोक्तवानहम् ॥२॥
॥ नारद उवाच ॥ तपसो यज्ञदानानां तीर्थसेवनमुत्तमम् ॥ इति श्रुतं मया त्वत्तो जगद्योने जगत्प्रभो ॥ ३ ॥ दैवानि मुनिशार्दूल आसुराण्यार्षा
णि च ॥ कियद्भेदानि तीर्थानि किंफलानि सुरेश्वर ॥ सर्वेषामेव तीर्थानां सर्वदा किं विशिष्यते ॥ ४ ॥ ॥ ब्रह्मोवाच ॥ चतुर्विधानि तीर्थानि
स्वर्गे मर्त्ये रसातले ॥ दैवानि मुनिशार्दूल आसुराण्यार्षाणि च ॥ ५ ॥ मानुषाणि त्रिलोकेषु विख्यातानि सुरादिभिः ॥ मानुषेभ्यश्च तीर्थेभ्य
आर्षकं सार्वकामिकम् ॥ ६ ॥ आर्षकेभ्यस्तु तीर्थेभ्य आसुरं बहुपुण्यदम् ॥ आसुरेभ्यस्तथा पुत्र दैवं तत्सार्वकामिकम् ॥ ७ ॥ ब्रह्मविष्णुमहे
शार्यैर्निर्मितं दैवमुच्यते ॥ त्रिभ्यो यदेकं जायेत तस्मान्नातः परं विदुः ॥ ८ ॥ त्रयाणामपि लोकानां तीर्थं मर्त्यमुदाहृतम् ॥ तत्रापि जाम्बवं द्वीपं
तीर्थं बहुगुणोत्तमम् ॥ ९ ॥ जाम्बवे भारतं वर्षं तीर्थं श्रुतिषु विश्रुतम् ॥ भारते दण्डकारण्यं सर्वतीर्थमनुत्तमम् ॥ कर्मभूमिर्यतः पुत्र तस्मात्तीर्थं तदु
च्यते ॥ १० ॥ तत्रैव सर्वतीर्थानि यान्युक्तानि मया तव ॥ तेषां नामानि संक्षेपात्कथ्यमानानि मे शृणु ॥ ११ ॥ दैवानि चासुरार्षाणि मानु
षाणीति भेदतः ॥ हिमवद्विन्ध्ययोर्मध्ये षण्नद्यो देवसंभवाः ॥ १२ ॥ तथैव देवजा ब्रह्मन्दक्षिणार्णवविन्ध्ययोः ॥ एता द्वादश नद्यस्तु प्राधान्येन
प्रकीर्तिताः ॥ १३ ॥ अभिसंपूजितं यस्माद्भारतं बहुपुण्यदम् ॥ कर्मभूमिरतो देवैर्वर्षं तस्मात्प्रकीर्तितम् ॥ १४ ॥ पार्वतानि च तीर्थानि देवजानि
क्वचित्क्वचित् ॥ असुरैरावृतं यत्तु तदेवाऽऽसुरमुच्यते ॥ १५ ॥ दैवेष्वेव प्रदेशेषु तपस्तप्त्वा महर्षयः ॥ दैवप्रभावात्तपस आर्षाण्यपि च तान्यपि ॥
॥ १६ ॥ आत्मनः श्रेयसे मुक्त्यै पूजार्थं भूतयेऽथवा ॥ आत्मनः फलभूत्यर्थं यशसोऽवाप्तये पुनः ॥ १७ ॥ मानुषैः कारितान्याहुर्मानुषाणीति
नारद ॥ एवं चतुर्विधो भेदस्तीर्थानां मुनिसत्तम ॥ १८ ॥ भेदं न कश्चिज्जानाति श्रोतुं युक्तोऽसि नारद ॥ बहवः पण्डितंमन्याः शृण्वन्ति कथ
यन्ति च ॥ सुकृती कोऽपि जानाति वक्तुं श्रोतुं निजैर्गुणैः ॥ १९ ॥ ॥ नारद उवाच ॥ तेषां स्वरूपं भेदं च श्रोतुमिच्छामि तत्त्वतः ॥ यच्छ्रुत्वा
सर्वपापेभ्यो मुक्तिर्भवति शाश्वती ॥ २० ॥ ब्रह्मन्कृतयुगस्यादौ ह्युपायोऽन्यो न विद्यते ॥ तीर्थसेवां विना स्वल्पायासेनाभीष्टदायिनीम् ॥ २१ ॥
न त्वया सदृशो धातर्वक्ता ज्ञाताऽथवा क्वचित् ॥ त्वं नाभिकमले विष्णोः संजातोऽखिलपूर्वजः ॥ २२ ॥ ॥ ब्रह्मोवाच ॥ गोदावरी भीमरथी
तुङ्गभद्रा च वेणिका ॥ तापी पयोष्णी विन्ध्यस्य दक्षिणे तु प्रकीर्तिताः ॥ २३ ॥ भागीरथी नर्मदा तु यमुना च सरस्वती ॥ विशोका च वितस्ता

च हिमवत्पर्वताश्रिताः ॥ २४ ॥ एता नद्यः पुण्यतमा देवतीर्थान्युदाहृताः ॥ गयः कोलासुरो वृत्रस्त्रिपुरो ह्यन्धकस्तथा ॥ २५ ॥ हयमूर्धा च
लवणो नमुचिः शृङ्गकस्तथा ॥ यमः पातालकेतुश्च मधुः पुष्कर एव च ॥ २६ ॥ एतैरावृततीर्थानि आसुराणि शुभानि च ॥ प्रभासो भार्गवोऽ
गस्तिर्नरनारायणौ तथा ॥ २७ ॥ वसिष्ठश्च भरद्वाजो गौतमः कश्यपो मनुः ॥ इत्यादिमुनिजुष्टानि ऋषितीर्थानि नारद ॥ २८ ॥ अम्बरीषो हरि
श्चन्द्रो नहुषो राम एव च ॥ कुरुः कनखलश्चैव भरतः सगरस्तथा ॥ २९ ॥ अश्वयूपो नाचिकेता वृषाकपिररिंदमः ॥ इत्यादिमानुषैर्विप्र निर्मितानि
शुभानि च ॥ ३० ॥ यशसः फलभूत्यर्थं निर्मितानीह नारद ॥ स्वतोद्भूतानि दैवानि यत्र क्वापि जगत्त्रये ॥ ३१ ॥ पुण्यतीर्थानि तान्याहुस्तीर्थभेदो
मयोदितः ॥ यत्र खातं तु केनापि देवखातं तदुच्यते ॥ ३२ ॥ संक्षेपेणोदितोऽयं ते तीर्थभेदो मया मुने ॥ मुच्यते सर्वपापेभ्यो नरो यज्ज्ञानमा
त्रतः ॥ ३३ ॥ ॥ इति श्रीब्रह्मपुराणगत गौतमीमाहात्म्ये स्वयंभुनारदसंवादे तीर्थभेदवर्णनं नाम प्रथमोऽध्यायः ॥ १ ॥ ॥ नारद उवाच ॥ त्रिदै
वत्यं तु यत्तीर्थं सर्वेभ्यो ह्युत्तमोत्तमम् ॥ तस्य स्वरूपं भेदं च विस्तरेण ब्रवीतु मे ॥ १ ॥ ब्रह्मोवाच ॥ तावदन्यानि तीर्थानि तावत्ताः पुण्यभूमयः ॥
तावद्यज्ञादयो यावत्त्रिदैवत्यं न दृश्यते ॥ २ ॥ व्रतोपवासकृच्छ्रेभ्यो गङ्गासेवा महाफला ॥ कृच्छ्रकाः सर्वतीर्थेषु दृश्यन्ते तेषु देहिनाम् ॥ ३ ॥
द्रव्यात्ममातृजनकाद्या शुद्धिर्देहिनां मुने ॥ त्रिदैवत्य विहायेह कथं पापक्षयो भवेत् ॥ स्मृता दृष्टाऽथवा स्पृष्टा या सर्वाकाङ्क्षितप्रदा ॥ ४ ॥
गङ्गेयं सरितां श्रेष्ठा सर्वकामप्रदायिनी ॥ त्रिदैवत्या मुनिश्रेष्ठ तदुत्पत्तिमितः शृणु ॥ ५ ॥ वर्षाणामयुतात्पूर्वं देवकार्य उपस्थिते ॥ तारको
बलवानासीन्मद्वरादतिगर्वितः ॥ ६ ॥ देवानां परमैश्वर्यं हृतं तेन बलीयसा ॥ ततस्ते शरणं जग्मुर्देवाः सेन्द्रपुरोगमाः ॥ ७ ॥
क्षीरोदशायिनं देवं जगतां प्रपितामहम् ॥ कृताञ्जलिपुटा देवा विष्णुमूचुरनन्यगाः ॥ ८ ॥ ॥ देवा ऊचुः ॥ त्वं त्राता जगतां नाथ देवानां
कीर्तिवर्धन ॥ सर्वेश्वर जगद्योने त्रयीमूर्ते नमोऽस्तु ते ॥ ९ ॥ लोकस्रष्टाऽसुरान्हन्ता त्वमेव जगतां पतिः ॥ स्थित्युत्पत्तिविनाशानां कारणं त्वं
जगन्मय ॥ १० ॥ त्राता न कोप्यस्ति जगत्त्रयेऽपि शरीरिणां सर्वविपद्गतानाम् ॥ त्वया विना वारिजपत्रनेत्र तापत्रयाणां शमनं न चान्यत् ॥ ११ ॥
पिता च माता जगतोऽखिलस्य त्वमेव सेवासुलभोऽसि देव ॥ प्रसीद पाहीश महाभयेभ्योऽस्मदार्तिहन्ता वद कस्त्वदन्यः ॥ १२ ॥ आदिकर्ता
वराहस्त्वं मत्स्यः कूर्मस्तथैव च ॥ इत्यादिरूपभेदैर्नो रक्षसे भय आगते ॥ १३ ॥ हृतस्वाम्यान्सुरगणान्हृतदारान्हृतस्थलान् ॥ कस्मान्न रक्षसे
देव अनन्यशरणान्हरे ॥ १४ ॥ ॥ ब्रह्मोवाच ॥ ततः प्रोवाच भगवाञ्छेषशायी श्रियः पतिः ॥ कस्माद्वो भयमापन्नं तद्ब्रुवन्तु गतज्वराः ॥ ततः

श्रियः पतिं प्राहुस्तं तारकवधं प्रति ॥ १५ ॥ ॥ देवा ऊचुः ॥ तारकाद्भयमापन्नं भीषणं रोमहर्षणम् ॥ न युद्धैस्तपसा शापैर्हन्तुमेनं क्षमा वयम् ॥ १६ ॥ अर्वाग्दशाहाद्यो बालस्तस्मान्मृत्युमवाप्स्यति ॥ तस्मादेव न चान्येभ्यस्तत्र नीतिर्विधीयताम् ॥ १७ ॥ ॥ ब्रह्मोवाच ॥ पुनर्नारायणः प्राह नाहं बलोत्कटः सुराः ॥ न मत्तो मदपत्याच्च न देवेभ्यो वधो भवेत् ॥ १८ ॥ ईश्वराद्यत्तु जायेत ह्यपत्यं बहुशक्तिमत् ॥ तस्माद्वधमवाप्नोति तारको लोकतापनः ॥ १९ ॥ तद्गच्छामः सुराः सर्वे यतितुमृषिभिः सह ॥ भार्यार्थं प्रथमो यत्नः कर्तव्यः प्रभविष्णुभिः ॥ २० ॥ तथेत्युक्त्वा सुरगणा जग्मुस्सर्वे नगोत्तमम् ॥ हिमवन्तं रत्नमयं मेनां च हिमवत्प्रियाम् ॥ २१ ॥ इदमूचुः सर्व एव सभार्यं तुहिनं गिरिम् ॥ २२ ॥ ॥ देवा ऊचुः ॥ दाक्षायणी लोकमाता या शक्तिः संस्थिता शिवा ॥ बुद्धिः प्रज्ञा धृतिर्मेधा लज्जा पुष्टिः सरस्वती ॥ २३ ॥ एवं त्वनेकधा लोके या स्थिता लोकपावनी ॥ देवानां कार्यसिद्ध्यर्थं युवयोर्गर्भमाविशत् ॥ २४ ॥ सातूत्पन्ना जगन्माता शंभोः पत्नी भविष्यति ॥ अस्माकं भवतां चापि पालनी च भविष्यति ॥ २५ ॥ ॥ ब्रह्मोवाच ॥ हिमवानपि तद्वाक्यं सुराणामभिनन्द्य च ॥ मेना चापि महोत्साहा अस्त्वित्येवं वचोऽब्रवीत् ॥ २६ ॥ तदोत्पन्ना जगद्धात्री गौरी हिमवतो गृहे ॥ शिवध्यानरता नित्यं तत्प्रिया तत्परायणा ॥ २७ ॥ तां च प्रोचुः सुरगणा ईशार्थे तप आविश ॥ ततो हिमवतः पृष्ठे गौरी तेपे तपो महत् ॥ २८ ॥ पुनः संमन्त्रयामासुरीशो ध्यायति तां कथम् ॥ आत्मानं वा तथाऽन्यद्वा न जानीमः कथं भवः ॥ २९ ॥ मेनकायाः सुतायां तु चित्तं दध्यात्सुरेश्वरः ॥ तत्र नीतिर्विधातव्या ततः श्रैष्ठ्यमवाप्स्यथ ॥ ततः प्राह महाबुद्धिर्वाचस्पतिरुदारधीः ॥ ३० ॥ ॥ बृहस्पतिरुवाच ॥ यस्त्वसौ मदनो धीमान्कन्दर्पः पुष्पचापधृक् ॥ स विध्यतु शिवं शान्तं बाणैः पुष्पमयैः शुभैः ॥ ३१ ॥ तेन विद्धस्त्रिनेत्रोऽपि ईशायां बुद्धिमादधेत् ॥ परिणेष्यत्यसौ नूनं तदा तां गिरिजां हरः ॥ ३२ ॥ जयिनः पञ्चबाणस्य न बाणाः क्वापि कुण्ठिताः ॥ तथोढायां जगद्धात्र्यां शंभोः पुत्रो भविष्यति ॥ ३३ ॥ जातः पुत्रस्त्रिनेत्रस्य तारकं स हनिष्यति ॥ वसन्तं च सहायार्थं शोभिष्ठं कुसुमाकरम् ॥ ३४ ॥ आह्लादनं च मनसा कामायैनं प्रयच्छथ ॥ ३५ ॥ ॥ ब्रह्मोवाच ॥ तथेत्युक्त्वा सुरगणा मदनं कुसुमाकरम् ॥ प्रेषयामासुरव्यग्राः शिवान्तिकमरिंदमाः ॥ ३६ ॥ स जगाम त्वरा कामो धृतचापो समाधवः ॥ रत्या च सहितः कामः कर्तुं कर्म सुदुष्करम् ॥ ३७ ॥ गृहीत्वा सशरं चापमीश्वरस्य पुरोभवत् ॥ मया वेध्यस्त्ववेध्यो वै शंभुर्लोकगुरुः प्रभुः ॥ ३८ ॥ त्रैलोक्यजयिनो बाणाः शंभौ मे किं दृढा न वा ॥ तेनासौ चाग्निनेत्रेण भस्मशेषस्तदा कृतः ॥ ३९ ॥ तदेव कर्म सुदृढमीक्षितुं सुरसत्तमाः ॥ आजग्मुस्तत्र यद्वृत्तं शृणु विस्मयकारकम् ॥ ४० ॥



शंभुं दृष्ट्वा सुरगणा यावत्पश्यन्ति मन्मथम् ॥ तावच्च भस्मसाद्भूतं कामं दृष्ट्वा भयातुराः ॥ तुष्टुवुस्त्रिदशेशानं कृताञ्जलिपुटाः सुराः ॥ ४१ ॥ ॥ देवा ऊचुः ॥ तारकाद्भयमापन्नं कुरु पत्नीं गिरेः सुताम् ॥ ॥ ब्रह्मोवाच ॥ विद्धचित्तो हरोऽप्याशु मेने वाक्यं सुरोदितम् ॥४२॥ गणयन्ति महात्मानः परार्थे न हिताहितम् ॥ अरुन्धतीं वसिष्ठं च मां तु चक्रधरं तथा ॥ ४३ ॥ प्रेषयामासुरमरा विवाहाय परस्परम् ॥ संबन्धोऽपि तथाऽप्यासीद्धिमवल्लोकनाथयोः ॥४४॥ इति श्रीब्रह्मपुराणगतगौतमीमाहात्म्ये स्वयंभुनारदसंवादे गंगोत्पत्तौ शंभुविवाहसंभवो नाम द्वितीयोऽध्यायः ॥ २ ॥

ब्रह्मोवाच ॥ हिमवत्पर्वते श्रेष्ठे नानारत्नविचित्रिते ॥ नानावृक्षलताकीर्णे नानाद्विजनिषेविते ॥ १ ॥ नदीनदसरःकूपतडागादिभिरावृते ॥ देवगन्धर्वयक्षादिसिद्धचारणसेविते ॥ २ ॥ शुभमारुतसंपन्ने हर्षोत्कर्षैककारणे ॥ मेरुमन्दरकैलासमैनाकादिनगैर्वृते ॥ ३ ॥ वसिष्ठागस्त्यपौलस्त्यलोमशादिभिरावृते ॥ महोत्सवे वर्तमाने विवाहः समजायत ॥ ४ ॥ तत्र वेदी रत्नमयी सून्नता स्वर्णभूषिता ॥ रचिता मण्डपे दिव्ये मनोज्ञा विश्वकर्मणा ॥ वज्रमाणिक्यवैदूर्यतन्मयस्तम्भशोभिता ॥ ५ ॥ जयालक्ष्मीशुभाक्षान्तिकीर्तिपुष्ट्यादिसंवृता ॥ मेरुमन्दरकैलासैरन्वतैः परिशोभितैः ॥ ॥ ६ ॥ पूजितो लोकनाथेन विष्णुना प्रभविष्णुना ॥ मैनाकः पर्वतश्रेष्ठो रेजे तत्र हिरण्मयः ॥ ७ ॥ ऋषयो लोकपालाश्च आदित्याः समरुद्गणाः ॥ विवाहे वेदिकां चक्रुर्देवदेवस्य शूलिनः ॥ ८ ॥ विश्वकर्मा स्वयं त्वष्टा वेदीं चक्रे सतोरणाम् ॥ सुरभिर्नन्दिनी नन्दा सुनन्दा कामदोहिनी ॥ ९ ॥ आभिस्तु शोभिते कान्ते विवाहः समजायत ॥ समुद्राः सरितो नागा ऋषयो लोकमातरः ॥ १० ॥ सवनस्पतिबीजाश्च सर्वे तत्र समाययुः ॥ भुवः कर्म इला चक्रे ओषध्यस्त्वन्नकर्म च ॥११॥ वरुणः पानकर्माणि दानकर्म धनाधिपः ॥ अग्निश्चकार यच्चेष्टं हिमवल्लोकनाथयोः ॥ १२ ॥ तत्र तत्र पृथक्पूजां चक्रे विष्णुः सनातनः ॥ वेदाश्च सरहस्या वै गायन्ति च वदन्ति च ॥ १३ ॥ नृत्यन्त्यप्सरसः सर्वा जगुर्गन्धर्वकिंनराः ॥ लाजाधृक्चापि मैनाको बभूव मुनिसत्तम ॥ १४ ॥ पुण्याहवाचनं वृत्तमन्तर्वेश्मनि नारद ॥ वेदिकायामुपाविष्टौ दंपती सुरसत्तमौ ॥ १५ ॥ अग्निं प्रज्वाल्य विधिवदश्मानं चापि पुत्रक ॥ हुत्वा लाजांश्च विधिवत्प्रदक्षिणमथाकरोत् ॥ १६ ॥ अश्मनः स्पर्शदेतोश्च देव्यङ्गुष्ठं करेऽस्पृशत ॥ विष्णुना प्रेरितः शंभुर्दक्षिणस्य पदस्य च ॥ १७ ॥ तामदर्शमहं तत्र होमं कुर्वन्हरान्तिके ॥ दृष्टेऽङ्गुष्ठे दुष्टबुद्ध्या वीर्यं सुस्राव मे तदा ॥ १८ ॥ विडम्बितो न कामेन कोऽप्यस्मिन्भुवनत्रये ॥ लज्जया कलुषीभूतः स्कन्नं वीर्यमचूर्णयम् ॥ १९ ॥ मद्वीर्याच्चूर्णितात्सूक्ष्माद्वालखिल्याः प्रजज्ञिरे ॥ ततो महानभूत्तत्र हाहाकारः सुरोदितः ॥ लज्जया परिभूतोऽहं निर्गतस्तु तदाऽऽसनात् ॥२०॥ पश्यत्सु देवसंघेषु तूष्णीं

भूतेषु नारद ॥ गच्छन्तं मां महादेवो दृष्ट्वा नन्दिनमब्रवीत् ॥ २१ ॥ ॥ शिव उवाच ॥ ब्रह्माणमाह्वयस्वेह गतपापं करोम्यहम् ॥ कृतापराधेऽपि जने सन्तः सकृपमानसाः ॥ मोहयन्त्यपि विद्वांसं विषयाणामियं स्थितिः ॥ २२ ॥ ॥ ब्रह्मोवाच ॥ एवमुक्त्वा स भगवानुमया सहितो हरः ॥ ममानुकम्पया चैव लोकानां हितकाम्यया ॥ २३ ॥ एतच्चकार लोकेशः शृणु नारद यत्नतः ॥ पापिनां पापमोक्षाय भूमिरापो भविष्यति ॥ २४ ॥ तयोश्च सारसर्वस्वमाहरिष्यामि पावनम् ॥ एवं निश्चित्य भगवांस्तयोः सारं समाहरत् ॥ २५ ॥ भूमिं कमण्डलुं कृत्वा तत्रापः संनिवेश्य च ॥ पावमान्यादिभिः सूक्तैरभिमंत्र्य च यत्नतः ॥ २६ ॥ त्रिजगत्पावनीं शक्तिं तत्र सस्मार पापहा ॥ मामुवाचाथ लोकेशो गृहाणेमं कमण्डलुम् ॥ ॥ २७ ॥ आपो वै मातरो देव्यो भूमिर्माता तथाऽपरा ॥ स्थित्युत्पत्तिविनाशानां हेतुत्वमुभयोः स्थितम् ॥ २८ ॥ अत्र प्रतिष्ठितो धर्मो ह्यत्र यज्ञः सनातनः ॥ अत्र भुक्तिश्च मुक्तिश्च स्थावरं जङ्गमं च यत् ॥ २९ ॥ स्मरणान्मानसं पापं वंदनाद्वाचिकं तथा ॥ स्नानपानाभिषेकाच्च विनश्यत्यपि कायिकम् ॥ ३० ॥ एतदेवामृतं लोके नैतस्मात्पावनं परम् ॥ मयाऽभिमन्त्रितं ब्रह्मन्गृहाणेमं कमण्डलुम् ॥ ३१ ॥ अत्रत्यं वारि यः कश्चित्स्मरेदपि पिबेदपि ॥ स सर्वकामानाप्नोति गृहाणेमं कमण्डलुम् ॥ ३२ ॥ भूतेभ्यश्चापि पञ्चभ्य आपो भूतं महोदयम् ॥ तासामुत्कृष्टमेतस्माद्गृहाणेमं कमण्डलुम् ॥ ३३ ॥ अत्र यद्वारि शोभिष्टं पुण्यं पावनमेव च ॥ स्पृष्ट्वा स्मृत्वा च दृष्ट्वा वा ब्रह्मन्पापाद्विमोक्ष्यसे ॥ ३४ ॥ एवमुक्त्वा महादेवः प्रादान्मम कमण्डलुम् ॥ ततः सुरगणाः सर्वे मुदा प्रोचुः सुरेश्वरम् ॥ आह्लादश्च महांस्तत्र जयशब्दो व्यवर्तत ॥ ३५ ॥ देवोत्सवे मातुरहं पदाग्रं समीक्ष्य पापात्पतितत्वमाप ॥ प्रादात्कृपालुः स्मरणात्पवित्रां गङ्गां पिता पुण्यकमण्डलुस्थाम् ॥ ३६ ॥ इति श्रीब्रह्मपुराणगतगौतमीमाहात्म्ये स्वयंभुनारदसंवादे गङ्गोत्पत्तौ ब्रह्मकमण्डलुदानं नाम तृतीयोऽध्यायः ॥ ३ ॥ ॥ नारद उवाच ॥ कमण्डलुस्थिता देवी तव पुण्यविवर्धिनी ॥ यथा मर्त्यं गता नाथ तन्मे विस्तरतो वद ॥ १ ॥ ॥ ब्रह्मोवाच ॥ बलिर्नाम महादैत्यो देवारिरपराजितः ॥ धर्मेण यशसा चैव प्रजासंरक्षणेन च ॥ २ ॥ गुरुभक्त्या च सत्येन वीर्येण च बलेन च ॥ त्यागेन क्षमया चैव त्रैलोक्ये नोपमीयते ॥ ३ ॥ तस्यर्द्धिमुन्नतां दृष्ट्वा देवाश्चिन्तापरायणाः ॥ मिथः समूचुरमरा जेष्यामो वै कथं बलिम् ॥ ४ ॥ तस्मिञ्शासति राज्यं तु त्रैलोक्यं हतकण्टकम् ॥ नारयो व्याधयो वाऽपि नाऽऽधयो वा कथंचन ॥ ५ ॥ अनावृष्टिरधर्मो वा नास्तिशब्दो न दुर्जनः ॥ ॥ स्वप्नेऽपि नैव दृश्येत बलौ राज्यं प्रशासति ॥ ६ ॥ तस्योन्नतिशरैर्भग्नाः कीर्तिखड्गद्विधाकृताः ॥ तस्याऽऽज्ञाशक्तिभिन्नाङ्गा देवाः शर्म न लेभिरे ॥ ७ ॥ ततः संमन्त्रयामासुः कृत्वा मात्सर्यमग्रतः ॥ तद्यशोग्निप्रदीप्ताङ्गा विष्णुं जग्मुः सुवि

हुलाः ॥ ८ ॥ ॥ देवा ऊचुः ॥ आर्ताः स्म जगतामीश शङ्खचक्रगदाधर ॥ अस्मदर्थे भवान्नित्यमायुधानि बिभर्ति च ॥ ९ ॥ त्वयि नाथे जगन्नाथाप्यस्माकं दुःखमीदृशम् ॥ त्वां वै प्रणमतां शीर्षं कथं दैत्यं नमस्यति ॥ १० ॥ मनसा कर्मणा वाचा त्वामेव शरणं गताः ॥ त्वदङ्घ्रिशरणाः सन्तः कथं दैत्यं नमेमहि ॥ ११ ॥ यजामस्त्वां महायज्ञैर्वदामो वाग्भिरच्युत ॥ त्वदेकशरणाः सन्तः कथं दैत्यं नमेमहि ॥ १२ ॥ त्वद्वीर्यमाश्रिता नित्यं देवाः सेन्द्रपुरोगमाः ॥ त्वया दत्तं पदं प्राप्य कथं दैत्यं नमेमहि ॥ १३ ॥ स्रष्टा त्वं ब्रह्ममूर्त्या तु विष्णुर्भूत्वा तु रक्षसि ॥ संहर्ता रुद्रशक्त्या त्वं कथं दैत्यं नमेमहि ॥ १४ ॥ ऐश्वर्यं कारणं लोके विनैश्वर्यं तु निष्फलम् ॥ हतैश्वर्याः सुरेशान कथं दैत्यं नमेमहि ॥ १५ ॥ अनादिस्त्वं जगद्धातरनन्तस्त्वं जगद्गुरुः ॥ अन्तवन्तममुं शत्रुं कथं दैत्यं नमेमहि ॥ १६ ॥ तवैश्वर्येण पुष्टाङ्गा जित्वा त्रैलोक्यमोजसा ॥ स्थिराः स्यामः सुरेशान कथं दैत्यं नमेमहि ॥ १७ ॥ ॥ ब्रह्मोवाच ॥ इत्येतद्देववचनं श्रुत्वा दैतेयसूदनः ॥ उवाच सर्वानमरान्देवानां कार्यसिद्धये ॥ १८ ॥ वासुदेव उवाच ॥ मद्भक्तोऽसौ बलिर्दैत्यो ह्यजयोऽसौ सुरासुरैः ॥ यथा भवन्तो मत्पोष्यास्तथा पोष्यो बलिर्मम ॥ १९ ॥ विना च संगरं देवा हत्वा राज्यं त्रिविष्टपम् ॥ बलिं निबध्य मन्त्रोक्त्या राज्यं वः प्रददाम्यहम् ॥ २० ॥ ॥ ब्रह्मोवाच ॥ तथेत्युक्त्वा सुरगणाः संजग्मुर्दिवमेव च ॥ भगवानपि देवेशो ह्यदित्या गर्भमाविशत् ॥ २१ ॥ तस्मिन्नुत्पद्यमाने तु उत्सवाश्च बभूविरे ॥ जातोऽसौ वामनो ब्रह्मन्यज्ञेशो यज्ञपूरुषः ॥ ॥ २२ ॥ एतस्मिन्नन्तरे ब्रह्मन्हयमेधाय दीक्षितः ॥ बलिर्बलवतां श्रेष्ठ ऋषिमुख्यैः समाहितः ॥ २३ ॥ पुरोधसा च शुक्रेण वेदवेदाङ्गवेदिना ॥ मखे तस्मिन्वर्तमाने यजमाने बलौ तथा ॥ २४ ॥ आर्त्विज्य ऋषिमुख्ये तु शुक्रे तत्र पुरोधसि ॥ हविर्भागार्थमासीने देवगन्धर्वपन्नगे ॥ २५ ॥ दीयतां भुज्यतां पूजा क्रियतां च पृथक्पृथक् ॥ परिपूर्णे पुनः पूर्णमेवं वाक्ये प्रवर्तति ॥ २६ ॥ शनैस्तद्देशमभ्यागाद्वामनः सामगायनः ॥ यज्ञवाटमनुप्राप्तो वामनश्छत्रकुण्डलः ॥ २७ ॥ प्रशंसमानस्तं यज्ञं वामनं प्रेक्ष्य भार्गवः ॥ ब्रह्मरूपधरं देवं वामनं दैत्यसूदनम् ॥ २८ ॥ दातारं यज्ञतपसां निहन्तारं च रक्षसाम् ॥ ज्ञात्वा त्वरन्नथोवाच राजानं भूरितेजसम् ॥ २९ ॥ जेतारं क्षत्रधर्मेण दातारं भक्तितो धनम् ॥ बलिं बलवतां श्रेष्ठं सभार्यं दीक्षितं मखे ॥ ३० ॥ ध्यायन्तं यज्ञपुरुषमुत्सृजन्तं हविः पृथक् ॥ तमाह भृगुशार्दूलः शुक्रः परमबुद्धिमान् ॥ ३१ ॥ ॥ शुक्र उवाच ॥ योऽसौ तव मखं प्राप्तो ब्राह्मणो वामनाकृतिः ॥ नासौ विप्रो बले सत्यं यज्ञेशो यज्ञभावनः ॥ ३२ ॥ स तु त्वां याचितुं प्राप्तो यः परः परतः पुमान् ॥ मया च सह संमन्त्र्य पश्चाद्देयं त्वया प्रभो ॥ ३३ ॥ ॥ ब्रह्मोवाच ॥ बलिस्तु भार्गवं प्राह पुरोधसमरिंदमः ॥ ३४ ॥

॥ बलिरुवाच ॥ धन्योऽहं मम यज्ञेशो गृहमायात्यचिन्तितः ॥ आगत्य याचते किंचित्किं विचार्यं ममाधुना ॥ ३५ ॥ ॥ ब्रह्मोवाच ॥ एवमुक्तः सभार्योऽसौ शुक्रेण च पुरोधसा ॥ जगाम यत्र विप्रेन्द्रो वामनोऽदितिनन्दनः ॥ ३६ ॥ कृताञ्जलिपुटो भूत्वा किमर्थं त्वं तु तद्वद ॥ वामनोऽपि तदा प्राह पदत्रयमितां भुवम् ॥ ३७ ॥ निवेशनाय संदेया नान्यदिच्छामि किंचन ॥ तथेत्युक्त्वा तु कलशान्नानारत्नविभूषितात् ॥ ३८ ॥ वारिधारां पुरस्कृत्य वामनाय भुवं ददौ ॥ पश्यत्सु ऋषिमुख्येषु शुक्रे चैव पुरोध ि ॥ ३९ ॥ पश्यत्सु देवमुख्येषु वामनाय भुवं ददौ ॥ पश्यत्सु दैत्यसंघेषु जयशब्दो व्यवर्तत ॥ ४० ॥ शनैस्तु वामनः प्राह स्वस्ति राजन्सुखी भव ॥ देहि मे संमितां भूमिं त्रिपदं यत्प्रतिश्रुतम् ॥ ४१ ॥ गृह्यतामुक्तमात्रे तु यद्वृत्तं तन्निशामय ॥ तथेत्युवाच दैत्येशो यावत्पश्यति वामनम् ॥ ४२ ॥ ववृधे यज्ञपुरुषश्चन्द्रादित्यौ स्तनान्तरे ॥ यथा स्यातां सुरा मूर्ध्नि ववृधे विक्रमाकृतिः ॥४३॥ अनन्तश्चाच्युतो देवो लोककर्ता जगन्मयः ॥ तं दृष्ट्वा दैत्यराट् प्राह सभार्यो विनयान्वितः ॥ ४४ ॥ ॥ बलिरुवाच ॥ क्रमस्व विष्णो लोकेश यावच्छक्ति जगन्मय ॥ जितं मया सुरेशान सर्वभावेन विश्वकृत् ॥ ४५ ॥ तद्वाक्यसमकालं च शुक्रो प्याह भृशं तदा ॥ निर्वापितोसि राजेन्द्र मया बुध्या यतः पुरा ॥ तद्वाक्यसमकालं तु विष्णुः प्राह महाक्रतुः ॥ ४६ ॥ ॥ विष्णुरुवाच ॥ दैत्येश्वर महाबाहो क्रमिष्ये पश्य दैत्यराट् ॥ एवं वदन्तं स प्राह क्रम विष्णो पुनः पुनः ॥ ४७ ॥ ॥ ब्रह्मोवाच ॥ कूर्मपृष्ठे पदं न्यस्य बलियज्ञे पदं न्यसत् ॥ द्वितीयं तु पदं प्रादान्मम लोके सनातनम् ॥ ४८ ॥ तृतीयस्य पदस्यात्र स्थानं नास्त्यसुरेश्वर ॥ क्व क्रमिष्ये भुवं देहि बलिं तं हरिरब्रवीत् ॥ विहस्य बलिरप्याह सभार्यः स कृताञ्जलिः ॥ ४९ ॥ ॥ बलिरुवाच ॥ त्वया सृष्टं जगत्सर्वं न स्रष्टाऽहं सुरेश्वर ॥ त्वद्दोषादल्पमभवत्किं करोमि जगन्मय ॥ ५० ॥ तथाऽपि नानृतं पूर्वं कदाचिद्वच्मि केशव ॥ सत्यवाक्यं च मां कुर्वन्मत्पृष्ठे हि पदं न्यस ॥ ५१ ॥ ततः प्रसन्नो भगवांस्त्रयीमूर्तिः सुरार्चितः ॥ वरं वृणीष्व भद्रं ते भक्त्या प्रीतोऽस्मि दैत्यराट् ॥ ५२ ॥ ॥ ब्रह्मोवाच ॥ स तु प्राह जगन्नाथं न याचे त्वां त्रिविक्रम ॥ स तु प्रादात्स्वयं विष्णुः प्रीतः सन्मनसेप्सितम् ॥५३॥ रसातलपतित्वं च भावि चेन्द्रपदं पुनः ॥ आत्माधिपत्यं च हरिरविनाशि यशो बहु ॥५४॥ एवं दत्त्वा बलेः सर्वं ससुतं भार्ययाऽन्वितम् ॥ रसातले हरिः स्थाप्य बलिं त्वमरवैरिणम् ॥५५ ॥ शतक्रतोस्तथा प्रादात्सुरराज्यं यथाभवम् ॥ एतस्मिन्नन्तरे तत्र पदं प्रागात्सुरार्चितम् ॥५६॥ द्वितीयं तत्पदं विष्णोः पितुर्मम महामते ॥ यत्पदं समनुप्राप्तं गृहं दृष्ट्वाऽप्यचिन्तयम् ॥ ५७ ॥ किं कृत्यं यच्छुभं मे स्यात्पदे विष्णोः समागते ॥ सर्वस्वं च समालोक्य श्रेष्ठो मे स्यात्कमण्डलुः ॥५८॥ तद्वारि यत्पुण्यतमं दत्तं च त्रिपुरारिणा ॥ वरं वरेण्यं

वरदं शान्तं शान्तिकरं परम् ॥ ५९ ॥ शुभं च शुभदं नित्यं भुक्तिमुक्तिप्रदायकम् ॥ मातृस्वरूपं लोकानाममृतं भेषजं शुचि ॥ ६० ॥ पवित्रं पावनं पूज्यं ज्येष्ठं श्रेष्ठं शुभावहम् ॥ स्मरणादेव लोकानां पावनं किं नु दर्शनात् ॥ ६१ ॥ तादृग्वारि शुचिर्भूत्वा कल्पयेऽर्घाय मे पितुः ॥ इति संचिन्त्य तद्वारि गृहीत्वाऽर्घाय कल्पितम्॥६२॥विष्णोः पादे तु पतितमर्घवारि सुमन्त्रितम् ॥ तद्वारि पतितं मेरौ चतुर्धा व्यगमद्भुवम्॥६३॥पूर्वे तु दक्षिणे चैव पश्चिमे चोत्तरे तथा ॥ दक्षिणे यत्तु पतितं जटाभिः शंकरो मुने ॥६४॥ जग्राह पश्चिमे यत्तु पुनः प्रायात्कमण्डलुम् ॥ उत्तरे पतितं यत्तु विष्णुर्जग्राह तज्जलम्॥६५॥पूर्वस्मिनृषयो देवाः पितरो लोकपालकाः ॥ जगृहुः शुभदं वारि तस्माच्छ्रेष्ठं तदुच्यते॥६६॥या दक्षिणां दिशं प्राप्ता आपो वै लोकमातरः ॥ विष्णुपादप्रसूतास्ता ब्रह्मण्या लोकमातरः॥६७॥ महेश्वरजटासंस्था एवं जाताः शुभोदयाः ॥ तासां प्रभावस्मरणात्सर्वकामानवाप्नुयात् ॥ ॥६८॥ इति श्रीब्रह्मपुराणगतगौतमीमाहात्म्ये स्वयंभुनारदसंवादे तीर्थमाहात्म्ये गंगाया महेश्वरजटागमननिरूपणं नाम चतुर्थोऽध्यायः ॥४॥ ॥ नारद उवाच ॥ कमण्डलुस्थिता देवी महेश्वरजटागता ॥ श्रुता देव यथा मर्त्यमागता तद्ब्रवीतु मे ॥१॥ ॥ ब्रह्मोवाच ॥ ॥ महेश्वरजटास्था या आपो देव्यो महामते ॥ तासां च द्विविधो भेद आहर्तुर्द्वयकारणात् ॥ २ ॥ एकांशो ब्राह्मणेनात्र व्रतदानसमाधिना ॥ गौतमेन शिवं पूज्य आहृतो लोकविश्रुतः ॥ ॥ ३ ॥ अपरस्तु महाप्राज्ञ क्षत्रियेण बलीयसा ॥ आराध्य शंकरं देवं तपोभिर्नियमैस्तथा ॥ ४ ॥ भगीरथेन भूपेन आहृतोंऽशोऽपरस्तथा ॥ एवं द्वैरूप्यमभवद्गङ्गाया मुनिसत्तम ॥ ५ ॥ ॥ नारद उवाच ॥ महेश्वरजटास्थाया हेतुना केन गौतमः ॥ आहर्ता क्षत्रियेणापि आहृता केन तद्वद ॥ ॥ ६ ॥ ॥ ब्रह्मोवाच ॥ यथाऽऽनीता पुरा वत्स ब्राह्मणेनेतरेण वा ॥ तत्सर्वं विस्तरेणाहं वदिष्ये प्रीतये तव ॥ ७ ॥ यस्मिन्काले सुरेशस्य उमा पत्न्यभवत्प्रिया ॥ तस्मिन्नेवाभवद्गङ्गा प्रिया शंभोर्महाद्युते ॥ ८ ॥ मम दोषापनुत्त्यर्थं चिन्तयानः शिवस्तदा ॥ उमया सहितः श्रीमान्देवीं प्रेक्ष्य विशेषतः ॥ ९ ॥ रसवृत्तौ स्थितो यस्मान्निर्ममे रसमुत्तमम् ॥ रसिकत्वात्प्रियत्वाच्च स्त्रैणत्वात्पावनत्वतः ॥ १० ॥ सर्वाभ्यो ह्यधिकप्रीतिर्गङ्गाऽभूद्द्विजसत्तम ॥ आत्मनो मस्तके गङ्गां जानात्येव उमेति वै ॥ तामेव चिन्तयानोऽ[illegible] सर्वदाऽऽस्ते महेश्वरः ॥ ११ ॥ सैवोद्धृता जटामार्गात्कस्मिंश्चित्कारणान्तरे ॥ स तु संगोपयामास गङ्गां शंभुर्जटागताम् ॥ १२ ॥ शिरसा विधृतां ज्ञात्वा न शशाक उमा तदा ॥ सोढुं बह्वञ्जटाजूटे स्थितां दृष्ट्वा पुनः पुनः ॥ १३ ॥ अमर्षेण भवं गौरी प्राहिणस्वेत्यभाषत ॥ नैवासौ प्राहिणोच्छंभू रसिको रसमुत्तमम् ॥ १४ ॥ उमा उवाच तद्दुःखाद नाथास्मीति वै तदा ॥ जटास्वेव तदा देवीं गोपायन्तं विमृश्य सा ॥ विनायकं जयां स्कन्दं रहो वचनमब्रवीत् ॥ १५ ॥ नैवायं त्रिदशेशानो गङ्गां

त्यजति कामुकः ॥१६॥ साऽपि प्रिया शिवस्याद्य कथं त्यजति तां प्रियाम् ॥ एवं विमृश्य बहुशो गौरी चाऽऽह विनायकम् ॥१७॥ पार्वत्युवाच ॥ न दैवैर्नासुरैर्यक्षैर्न सिद्धैर्भवताऽपि च ॥ न च भूपैरथान्यैर्वा स गङ्गां त्यजति प्रभुः ॥ १८ ॥ पुनस्तपस्यामि वा गत्वा हिमवन्तं नगोत्तमम् ॥ अथवा ब्राह्मणैः पुण्यैस्तपोभिर्हतकल्मषैः ॥ १९ ॥ तैर्वा जटास्थिता गङ्गा प्रार्थिता भुवमाप्नुयात् ॥ २० ॥ ॥ ब्रह्मोवाच ॥ एतच्छ्रुत्वा मातृवाक्यं मातरं प्राह विघ्नराट् ॥ भ्रात्रा स्कन्देन जयया संमन्त्र्येह च युज्यते ॥ २१ ॥ तत्कुर्मो मस्तकाद्गङ्गां यथा त्यजति मे पिता ॥ एतस्मिन्नन्तरे ब्रह्मन्ननावृष्टिरजायत ॥ २२ ॥ द्विर्द्वादश समा मर्त्ये सर्वप्राणिभयावहा ॥ ततो विनष्टमभवज्जगत्स्थावरजङ्गमम् ॥ २३ ॥ विना तु गौतमं पुण्यमाश्रमं सर्वकामदम् ॥ स्रष्टुकामः पुरा पुत्र स्थावरं जङ्गमं तथा ॥ २४ ॥ कृतो यज्ञो मया पूर्वं स देवयजनो गिरिः ॥ मन्नामा तत्र विख्यातस्ततो ब्रह्मगिरिः सदा ॥ २५ ॥ तमाश्रित्य नगश्रेष्ठं सर्वदाऽऽस्ते स गौतमः ॥ तस्याऽऽश्रमे महापुण्ये श्रेष्ठे ब्रह्मगिरौ शुभे ॥ २६ ॥ आधयो व्याधयो वाऽपि दुर्भिक्षं चाऽप्यवर्षणम् ॥ भयशोकौ च दारिद्र्यं न श्रूयन्ते कदाचन ॥ २७ ॥ तदाश्रमं विनाऽन्यत्र हव्यं वा कव्यमेव वा ॥ नास्ति पुत्र तथा दाता होता यष्टा तथैव च ॥ २८ ॥ यदैव गौतमो विप्रो ददाति च जुहोति च ॥ तदैवाप्यायनं स्वर्गे सुराणामपि नान्यथा ॥ २९ ॥ देवलोकेऽपि मर्त्ये वा श्रूयते गौतमो मुनिः ॥ स एव दाता भोक्ता च स एवेति विदुर्जनाः ॥ ३० ॥ तच्छ्रुत्वा मुनयः सर्वे नानाश्रमनिवासिनः ॥ गौतमाश्रममापृच्छन्नागच्छन्ति तपोधनाः ॥ ३१ ॥ तथा मुनीनां सर्वेषामागतानां स गौतमः ॥ शिष्यवत्पुत्रवद्भक्त्या पितृवत्पोषकोऽभवत् ॥ ३२ ॥ यस्य यच्चेप्सितं कामं यथायोग्यं यथाक्रमम् ॥ यथानुरूपं सर्वेषां शुश्रूषामकरोन्मुनिः ॥ ३३ ॥ आज्ञया गौतमस्याऽऽसन्नोषध्यो लोकमातरः ॥ आराधिताः पुनस्तेन ब्रह्मविष्णुमहेश्वराः ॥ ३४ ॥ अजायन्त तदोषध्यो भुज्यन्ते च तदैव हि ॥ संकल्प्यन्ते तदोप्यन्ते गौतमस्य तपोबलात् ॥ ३५ ॥ सर्वाः समृद्धयस्तस्य संसिध्यन्ते मनोगताः ॥ प्रत्यहं वक्ति विनयाद्गौतमस्त्वागतान्मुनीन् ॥ ३६ ॥ पुत्रवच्छिष्यवच्चैव प्रेष्यवत्करवाणि किम् ॥ पितृवत्पोषयामास संवत्सरगणान्बहून् ॥ ३७ ॥ एवं स गौतमः पुत्र ख्यातिं प्राप्तो महत्तराम् ॥ ततो विनायकः प्राह मातरं भ्रातरं जयाम् ॥ ३८ ॥ ॥ विनायक उवाच ॥ देवानां सदने मातर्गीयते गौतमो द्विजः ॥ यत्नसाध्यं सुरगणैर्गौतमः कृतवानिति ॥ ॥ ३९ ॥ एवं श्रुतं मया देवि ब्राह्मणस्य तपोबलम् ॥ स विप्रश्चालयेदेनां मातर्गङ्गां जटागताम् ॥ ४० ॥ तपसा वाऽन्यतो वाऽपि पूजयित्वा त्रिलोचनम् ॥ स एव याचयेदेनां जटास्थां मे पितृप्रियाम् ॥ ४१ ॥ तत्र नीतिर्विधातव्या तां विप्रो याचयेद्यथा ॥ तत्प्रभावात्सरिच्छ्रेष्ठा

शिरसोऽवतरिष्यति ॥ ४२ ॥ ॥ ब्रह्मोवाच ॥ इत्युक्त्वा मातरं भ्रात्रा जयया सह विघ्नराट् ॥ जगाम गौतमो यत्र ब्रह्मसूत्रधरः कृशः ॥ ४३ ॥ वसन्कतिपयाहःसु गौतमाश्रममण्डले ॥ उवाच ब्राह्मणान्सर्वान्नात्र स्थेयं च विघ्नराट् ॥ ४४ ॥ गच्छामः स्वमधिष्ठानमाश्रमाणि शुचीनि च ॥ पुष्टाः स्म गौतमान्नेन पृच्छामो गौतमं मुनिम् ॥ ४५ ॥ इति संमन्त्र्य पृच्छन्ति मुनयो मुनिसत्तमाः ॥ स तान्निवारयामास स्नेहबुद्ध्या मुनीन्पृथक् ॥ ४६ ॥ ॥ गौतम उवाच ॥ कृताञ्जलिः सविनयमासध्वमिह चैव हि ॥ युष्मच्चरणशुश्रूषां करोमि मुनिपुंगवाः ॥ ४७ ॥ शुश्रूषौ पुत्रवन्नित्यं मयि तिष्ठति नोचितम् ॥ भवतां भूमिदेवानामाश्रमान्तरसेवनम् ॥ ४८ ॥ अयमेवाऽऽश्रमः पुण्यः सर्वेषामिति मे मतिः ॥ अलमन्येन मुनय आश्रमेण गतेन वा ॥ ४९ ॥ ॥ ब्रह्मोवाच ॥ इति श्रुत्वा मुनेर्वाक्यं विघ्नकृत्यमनुस्मरन् ॥ उवाच प्राञ्जलिर्भूत्वा ब्राह्मणान्स गणाधिपः ॥ ५० ॥ ॥ गणाधिप उवाच ॥ अन्नक्रीता वयं किं नो निवारयति गौतमः ॥ साम्ना नैव वयं शक्ता गन्तुं स्वं स्वं निवेशनम् ॥ ५१ ॥ नायमर्हति दण्डं वा उपकारी द्विजोत्तमः ॥ तस्माद् बुद्ध्या व्यवस्यामि तत्सर्वैरनुमन्यताम् ॥ ५२ ॥ ॥ ब्रह्मोवाच ॥ ततः सर्वे द्विजश्रेष्ठाः क्रियतामित्यनुब्रुवन् ॥ एतस्य तूपकाराय लोकानां हितकाम्यया ॥ ५३ ॥ ब्राह्मणानां च सर्वेषां श्रेयो यत्स्यात्तथा कुरु॥ ब्राह्मणानां वचः श्रुत्वा मेने वाक्यं गणाधिपः ॥ ॥ ५४ ॥ विनायक उवाच ॥ क्रियते गुणरूपं यद्गौतमस्य विशेषतः ॥५५॥ ब्रह्मोवाच ॥ अनुमान्य द्विजान्सर्वान्पुनः पुनरुदारधीः ॥ स्वयं च ब्राह्मणो भूत्वा प्रणम्य ब्राह्मणान्पुनः ॥ मातुर्मते स्थितो विद्माज्जयां प्राह गणेश्वरः ॥ ५६ ॥ ॥ विनायक उवाच ॥ यथा नान्यो विजानीते तथा कुरु शुभानने ॥ गोरूपधारिणी गच्छ गौतमो यत्र तिष्ठति ॥ ५७ ॥ शालीन्खाद विनाश्याथ विकारं कुरु भामिनि ॥ कृते प्रहारे हुंकारे प्रेक्षिते चापि किंचन ॥ उच्चैस्तत्र स्वनं कृत्वा न म्रियस्व न जीव च ॥ ५८ ॥ ॥ ब्रह्मोवाच ॥ तथा चकार विजया विघ्नेश्वरमते स्थिता ॥ यत्राऽऽसीद्गौतमो विप्रो जया गोरूपधारिणी ॥ ५९ ॥ जगाम शालीन्खादन्ती तां ददर्श स गौतमः ॥ गां दृष्ट्वा विकृतां विप्रस्तां तृणेन न्यवारयत् ॥ ६० ॥ निवार्यमाणा सा तेन स्वनं कृत्वा पपात गौः ॥ तस्यां तु पतितायां च हाहाकारो महानभूत् ॥ ६१ ॥ स्वनं श्रुत्वा च दृष्ट्वा च गौतमस्य विचेष्टितम् ॥ व्यथिता ब्राह्मणाः प्राहुर्विघ्नराजपुरस्कृताः ॥ ६२ ॥ ॥ ब्राह्मणा ऊचुः ॥ इतो गच्छामहे सर्वे न स्थातव्यं तवाऽऽश्रमे ॥ पुत्रवत्पोषिताः सर्वे पृष्टोऽसि मुनिपुंगव ॥ ६३ ॥ ॥ ब्रह्मोवाच ॥ इति श्रुत्वा मुनिर्वाक्यं विप्राणां गच्छतां तदा॥ वज्राहत इवाऽऽसीत्स विप्राणां पुरतोऽपतत् ॥६४॥ तमूचुर्ब्राह्मणाः सर्वे पश्येमां पतितां भुवि ॥ रुद्राणां मातरं देवीं जगतां पावनीं प्रियाम् ॥ ६५ ॥ तीर्थदेवस्वरूपिण्यामस्यां गवि विधेर्बलात् ॥

पतितायां मुनिश्रेष्ठ गन्तव्यमवशिष्यते ॥ ६६ ॥ चीर्णं व्रतं क्षयं याति यथा वासस्त्वदाश्रमे ॥ वयं नान्यधना ब्रह्मन्केवळं तु तपोधनाः ॥ ६७ ॥
॥ ब्रह्मोवाच ॥ विप्राणां पुरतः स्थित्वा विनीतः प्राह गौतमः ॥ ६८ ॥ ॥ गौतम उवाच ॥ भवन्त एव शरणं पूतं मां कर्तुमर्हथ ॥ ६९ ॥
॥ ब्रह्मोवाच ॥ ततः प्रोवाच भगवान्विघ्नकृद्ब्राह्मणैर्वृतः ॥ ७० ॥ ॥ विघ्नराज उवाच ॥ नैवेयं म्रियते तत्र नैव जीवति तत्र किम् ॥ वदामोऽस्मिन्सु
संदिग्धे निष्कृतिं गतिमेव वा ॥७१॥ ॥ गौतम उवाच ॥ न च मूर्च्छिष्यतीयं गौर्मरिष्यति न संशयः ॥ कथमुत्थास्यतीयं गौरथ चास्मिश्च निष्कृ
तिम् ॥ वक्तुमर्हथ तत्सर्वं करिष्येऽहमसंशयम् ॥ ७२ ॥ ब्राह्मणा ऊचुः ॥ सर्वेषां च मतेनायं वदिष्यति च बुद्धिमान् ॥ एतद्वाक्यमथास्माकं प्रमाणं
तव गौतम ॥ ७३ ॥ ॥ ब्रह्मोवाच ॥ ब्राह्मणैः प्रेर्यमाणोऽसौ गौतमेन बलीयसा ॥ विघ्नकृद्ब्रह्मवपुषा प्राह सर्वानिदं वचः ॥ ७४ ॥ ॥ विघ्नराज
उवाच ॥ सर्वेषां च मतेनाहं वदिष्यामि यथार्थवत् ॥ अनुमन्यन्तु मुनयो मद्वाक्यं गौतमोऽपि च ॥ ७५ ॥ महेश्वरजटाजूटे ब्रह्मणोऽव्यक्तजन्मनः ॥
कमण्डलुस्थितं वारि तिष्ठतीति हि शुश्रुम ॥ ७६ ॥ तदानयस्व तरसा तपसा नियमेन च ॥ तेनाभिषिञ्च गामेतां भगवन्भुवमाश्रिताम् ॥ ततो
वत्स्यामहे सर्वे पूर्ववत्तव वेश्मनि ॥ ७७ ॥ ॥ ब्रह्मोवाच ॥ इत्युक्तवति विप्रेन्द्रे ब्राह्मणानां च संसदि ॥ तत्रापतत्पुष्पवृष्टिर्जयशब्दो व्यवर्धत॥ततः
कृताञ्जलिर्नम्रो गौतमो वाक्यमब्रवीत्॥७८॥गौतम उवाच॥तपसाऽग्निप्रसादेन देवब्रह्मप्रसादतः॥भवतां च प्रसादेन मत्संकल्पोऽनुसिध्यताम् ॥ ७९ ॥
॥ब्रह्मोवाच॥ एवमस्त्विति तं विप्रा आपृच्छ्य मुनिपुंगवम् ॥ स्वानि स्थानानि ते जग्मुः समृद्धान्यन्नवारिभिः॥८०॥गतेषु तेषु विप्रेषु भ्रात्रा सह गणे
श्वरः ॥ जयया सह सुप्रीतः कृतकृत्यो न्यवर्तत ॥ ८१ ॥ गतेषु ब्रह्मवृन्देषु गणेशे च गते तथा ॥ गौतमोऽपि मुनिश्रेष्ठस्तपसा हतकल्मषः ॥ ८२ ॥
ध्यायंस्तदर्थं स मुनिः किमिदं मम संस्थितम् ॥ इत्येवं बहुशो ध्यायञ्ज्ञानेन ज्ञातवान्द्विजः ॥ ८३ ॥ निश्चित्य देवकार्यार्थमात्मनः किल्बिषां
गतिम् ॥ लोकानामुपकारं च शंभोः प्रीणनमेव च ॥ ८४ ॥ उमायाः प्रीणनं चापि गङ्गानयनमेव च ॥ सर्वं श्रेयस्करं मन्ये मयि नैव च किल्बि
षम् ॥ ८५ ॥ इत्येवं मनसा ध्यायन्सुप्रीतोऽभूद्द्विजोत्तमः ॥ भार्यया सह संमन्त्र्य इदमाह द्विजोत्तमः ॥ आराध्य जगतामीशं त्रिनेत्रं वृषभध्व
जम् ॥ ८६ ॥ आनयिष्ये सरिच्छ्रेष्ठां प्रीणयिष्ये गिरेः सुताम् ॥ सपत्नी जगदम्बाया महेश्वरजटास्थिता ॥ ८७ ॥ एवं हि संकल्प्य मुनिप्रवीरः
स गौतमो ब्रह्मगिरेर्जगाम ॥ कैलासमाधिष्ठितमुग्रवर्चसं सुरार्चितं प्रीणयितुं हि शंभुम् ॥ ८८ ॥ इति श्रीब्रह्मपुराणगतगौतमीमाहात्म्ये स्वयंभुनारद
संवादे तीर्थमाहात्म्ये विनायकगौतमव्यापारनिरूपणं नाम पञ्चमोऽध्यायः ॥ ५ ॥ ॥ नारद उवाच ॥ कैलासशिखरे गत्वा गौतमो भगवानृषिः ॥

किं चकार तपो वाऽपि कां चक्रे स्तुतिमुत्तमाम् ॥ १ ॥ ॥ ब्रह्मोवाच ॥ गिरिं गत्वा ततो वत्स वाचं संयम्य गौतमः ॥ आस्तीर्य स कुशान्प्राज्ञः
कैलासे पर्वतोत्तमे ॥ २ ॥ उपविश्य शुचिर्भूत्वा स्तोत्रं चेदं ततो जगौ ॥ अपतत्पुष्पवृष्टिश्च स्तूयमाने महेश्वरे ॥ ३ ॥ ॥ गौतम उवाच ॥ भोगा
र्थिनां भोगमभीप्सितं च दातुं महान्त्यष्टवपूंषि धत्ते ॥ सोमो जनानां गुणवन्ति नित्यं देवं महादेवमिति स्तुवन्ति ॥ ४ ॥ कर्तुं स्वकीयैर्विषयैः
सुखानि भर्तुं समस्तं सचराचरं च ॥ संपत्तये ह्यस्य विवृद्धये च महीमयं रूपमितीश्वरस्य ॥ ५ ॥ सृष्टेः स्थितेः संहरणाय भूमेराधारमाधातुमपां
स्वरूपम् ॥ भेजे शिवः शान्ततनुर्जनानां सुखाय धर्माय जगत्प्रतिष्ठितम् ॥ ६ ॥ कालप्रतिष्ठाममृतस्रवं च जीवस्थितिं सृष्टिमथो विनाशनम् ॥
मुदं प्रजानां सुखमुन्नतिं च चक्रेऽर्कचन्द्राग्निमयं शरीरम् ॥ ७ ॥ वृद्धिं गतिं शक्तिमथाक्षराणि जीवव्यवस्थां मुदमप्यनेकाम् ॥ स्रष्टुं कृतं वायुरि
तीशरूपं त्वं वेत्सि नूनं भगवन्भवन्तम् ॥ ८ ॥ भेदैर्विना नैव कृतिर्न धर्मो नाऽऽत्मीयमन्यत्र दिशोऽन्तरिक्षम् ॥ द्यावापृथिव्यौ न च भुक्तिमुक्ती
तस्मादिदं व्योमवपुस्तवेश ॥ ९ ॥ धर्मं व्यवस्थापयितुं विभज्य ऋक्सामशास्त्राणि यजुश्च शाखाः ॥ लोके च गाथाः स्मृतयः पुराणमित्यादिशब्दा
त्मकतामुपैति ॥ १० ॥ यष्टा क्रतुर्यान्यपि साधनानि ऋत्विस्वरूपं फलदेशकालाः ॥ त्वमेव शंभो परमार्थतत्त्वं वदन्ति यज्ञाङ्गमयं वपुस्ते ॥११॥
कर्ता प्रदाता प्रतिभूः प्रदानं सर्वज्ञसाक्षी पुरुषः परश्च ॥ प्रत्यात्मभूतः परमार्थरूपस्त्वमेवं सर्वं किंतु वाग्विलासैः ॥ १२ ॥ न वेदशास्त्रैर्गुरुभिः
प्रदिष्टो न नासि बुद्ध्यादिभिरप्रधृष्यः ॥ अजोऽप्रमेयः शिवशब्दवाच्यस्त्व मेव सत्यं भगवन्नमस्ते ॥ १३ ॥ ( शिवस्तुतिःसं० ) आत्मैकतां स्वप्र
कृतिं कदाचिदैक्षच्छिवः संपदियं ममेति ॥ पृथक्तदैवाभवदप्रतर्क्याचिन्त्यप्रभावो बहुविश्वमूर्तिः ॥ १४ ॥ भावेऽभिवृद्धा च भवे भवे च स्वकारणं
कारणमास्थिता च ॥ नित्या शिवा सर्वसुलक्षणा वा विलक्षणा विश्वकरस्य शक्तिः ॥ १५ ॥ उत्पादनं संस्थितिरन्नवृद्धिलयाः सतां यत्र सनात
नोर्थः ॥ एषैव भूमिर्न समास्ति किंचिदसाध्यमस्या दयिता हरस्य ॥ १६ ॥ यदर्थमन्नानि धनानि जीवा यच्छन्ति कुर्वन्ति तपांसि धर्मान् ॥
साऽपीयमम्बा जगतो जनित्री प्रिया तु सोमस्य महासुकीर्तिः ॥ १७ ॥ यदीक्षितं काङ्क्षति वासवोऽपि यन्नामतो मङ्गलमाप्नुयाच्च ॥ या व्याप्य
विश्वं विमलीकरोति सोमा सदा सोमसमानरूपा ॥ १८ ॥ ब्रह्मादिजीवस्य चराचरस्य बुद्ध्यक्षिचैतन्यमनःसुखानि ॥ यस्याः प्रसादात्फलवन्ति
नित्यं वागीश्वरी लोकगुरोः सुरम्या ॥ १९ ॥ चतुर्मुखस्यापि मनो मलीनं किमन्यजन्तोरिति चिन्त्यमाना ॥ गंगाऽवतारं विविधैरुपायैः सर्वं
जगत्पावयितुं चकार ॥ २० ॥ श्रुतीः समालक्ष्य हरप्रभुत्वं विश्वस्य लोकः सकलैः प्रमाणैः ॥ कृत्वा च धर्मान्बुभुजे च भोगान्विभूतिरेषा तु सदा

शिवस्य ॥ २१ ॥ कार्यक्रियाकारकसाधनानां वेदोदितानामथ लौकिकानाम् ॥ यत्साध्यमुत्कृष्टतमं प्रियं च प्रोक्ता. च सा सिद्धिरनादिकर्तुः ॥
॥ २२ ॥ ध्यात्वा वरं ब्रह्म परं प्रधानं यत्सारभूतं यदुपासितव्यम् ॥ यत्प्राप्य मुक्ता न पुनर्भवन्ति सद्योगिनो मुक्तिरुमापतिः सः ॥ २३ ॥
यथा यथा शंभुरमेयमायारूपाणि धत्ते जगतो हिताय ॥ तद्योगयोग्यानि तथैव धत्से पतिव्रतात्वं त्वयि मातरेवम् ॥ ( देवीस्तुतिःसं० ) ॥
॥ २४ ॥ ॥ ब्रह्मोवाच ॥ ॥ इत्येवं स्तुवतस्तस्य पुरस्ताद्वृषभध्वजः ॥ उमया सहितः श्रीमान्गणेशादिगणैर्वृतः ॥ २५ ॥ साक्षादा
गत्य तं शंभुः प्रसन्नो वाक्यमब्रवीत् ॥ २६ ॥ ॥ शिव उवाच ॥ किं ते गौतम दास्यामि भक्तिस्तोत्रव्रतैः शुभैः ॥ परितुष्टोऽस्मि याचस्व
देवानामपि दुर्लभम् ॥ २७ ॥ ॥ ब्रह्मोवाच ॥ इति श्रुत्वा जगन्मूर्तेर्वाक्यं वाक्यविशारदः ॥ हर्षबाष्पपरीताङ्गो गौतमः पर्यचिन्तयत् ॥ २८ ॥
अहो दैवमहो धर्मो ह्यहो वै विप्रपूजनम् ॥ अहो लोकगतिश्चित्रा अहो धातर्नमोऽस्तु ते ॥ २९ ॥ ॥ गौतम उवाच ॥ जटास्थितां शुभां गंगां
देहि मे त्रिदशार्चित ॥ यदि तुष्टोऽसि देवेश त्रयीधाम नमोऽस्तु ते ॥ ३० ॥ ॥ ईश्वर उवाच ॥ त्रयाणामुपकारार्थं लोकानां याचितं त्वया ॥
आत्मनस्तूपकाराय तद्याचस्वाकुतोभयः ॥ ३१ ॥ ॥ गौतम उवाच ॥ स्तोत्रेणानेन ये भक्तास्त्वां च देवीं स्तुवन्ति वै ॥ सर्वकामसमृद्धाः स्युरे
तद्धि वरयाम्यहम् ॥ ३२ ॥ ॥ ब्रह्मोवाच ॥ एवमस्त्विति देवेशः परितुष्टोऽब्रवीद्वचः ॥ अन्यानपि वरान्मत्तो याचस्व विगतज्वरः ॥ ३३ ॥ एवमुक्त
स्तु हर्षेण गौतमः प्राह शङ्करम् ॥ ३४ ॥ ॥ गौतम उवाच ॥ इमां देवीं जटासंस्थां पावनीं लोकमातरम् ॥ तव प्रियां जगन्नाथ उत्सृज ब्रह्मणो
गिरौ ॥ ३५ ॥ सर्वासां तीर्थभूता तु यावद्गच्छति सागरम् ॥ ब्रह्महत्यादिपापानि मनोवाक्कायिकानि तु ॥ ३६ ॥ स्नानमात्रेण सर्वाणि विलयं
यान्तु शङ्कर ॥ चन्द्रसूर्योपरागे च अयने विषुवे तथा ॥३७॥ संक्रान्तौ वैधृतौ पुण्यतीर्थेष्वन्येषु यत्फलम् ॥ अस्यास्तु स्मरणादेव तत्पुण्यं जायतां
हर ॥ ३८ ॥ श्लाघ्यं कृते तपः प्रोक्तं त्रेतायां यज्ञकर्म च ॥ द्वापरे यज्ञदाने च दानमेव कलौ युगे ॥ ३९ ॥ युगधर्माश्च ये सर्वे देशधर्मास्तथैव
च ॥ देशकालादिसंयोगे यो धर्मो यत्र शस्यते ॥ ४० ॥ यदन्यत्र कृतं पुण्यं स्नानदानादिसंयमैः ॥ अस्यास्तु स्मरणादेव तत्पुण्यं जायतां हर ॥
॥ ४१ ॥ यत्र यत्र त्वियं याति यावत्सागरगामिनी ॥ तत्र तत्र त्वया भाव्यमेष चास्तु वरो वरः ॥ ४२ ॥ योजनानां तूपरि तु दश यावच्च संख्य
या ॥ तदन्तरप्रविष्टानां महापातकिनामपि ॥ ४३ ॥ तत्पितॄणां च तेषां च स्नानायाऽऽगच्छतां शिव ॥ स्नानेनापीतरे मर्त्या मुक्तिभाजो भवन्तु
वै ॥ ४४ ॥ एकतः सर्वतीर्थानि स्वर्गमर्त्यरसातले ॥ एषा तेभ्यो विशिष्टा तु अलं शंभो नमोऽस्तु ते ॥ ४५ ॥ ॥ ब्रह्मोवाच ॥ तद्गौतमवचः

श्रुत्वा तथाऽस्त्वित्यब्रवीच्छिवः॥ अस्याः परतरं तीर्थं न भूतं न भविष्यति ॥४६॥ सत्यं सत्यं पुनः सत्यं वेदे च परिनिष्ठितम् ॥ सर्वेषां गौतमी पुण्या इत्युक्त्वाऽन्तरधीयत ॥४७॥ ततो गते भगवति लोकपूजिते तदाज्ञया पूर्णबलः स गौतमः॥ जटां समादाय सरिद्वरां तां सुरैर्वृतो ब्रह्मगिरिं विवेश॥४८॥ ततस्तु गौतमे प्राप्ते जटामादाय नारद ॥ पुष्पवृष्टिरभूत्तत्र समाजग्मुः सुरेश्वराः ॥ ४९ ॥ ऋषयश्च महाभागा ब्राह्मणाः क्षत्रियास्त था ॥ जयशब्देन तं विप्रं पूजयन्तो मुदान्विताः ॥ ५० ॥ इति श्रीब्रह्मपुराणगंत गौतमीमाहात्म्ये स्वयंभुनारदसंवादे तीर्थमाहात्म्ये गौतम्यानयनं नाम षष्ठोऽध्यायः॥६॥ नारद उवाच ॥ महेश्वरजटाजूटाद्गंगामादाय गौतमः॥ आगत्य ब्रह्मणः पुण्ये ततः किमकरोद्गिरौ ॥१॥ ब्रह्मोवाच ॥ आदाय गौतमो गंगां शुचिः प्रयत मानसः ॥ पूजितो देवगन्धर्वैस्तथा गिरिनिवासिभिः ॥२॥ गिरेर्मूर्ध्नि जटां स्थाप्य स्मरन्देवं त्रिलोचनम् ॥ उवाच प्राञ्जलिर्भूत्वा गंगां स द्विजसत्तमः ॥ ३ ॥ गौतम उवाच ॥ त्रिलोचनजटोद्भूते सर्वकामप्रदायिनी ॥ क्षमस्व मातः शान्ताऽसि सुखं याहि हितं कुरु ॥ ४ ॥ ॥ ब्रह्मोवाच ॥ एवमुक्ता गौतमेन गङ्गा प्रोवाच गौतमम् ॥ दिव्यरूपधरा देवी दिव्यस्रगनुलेपना ॥ ५ ॥ ॥ गङ्गोवाच ॥ गच्छेयं देवसदनमथवाऽपि कमण्डलुम् ॥ रसातलं वा गच्छेयं जातस्त्वं सत्यवागसि ॥ ६ ॥ ॥ गौतम उवाच ॥ त्रयाणामुपकारार्थं लोकानां याचिता मया ॥ शंभुना च तथा दत्ता देवि तन्नान्यथा भवेत् ॥ ७ ॥ ॥ ब्रह्मोवाच ॥ तद्गौतमवचः श्रुत्वा गङ्गा मेने द्विजेरितम् ॥ त्रेधाऽऽत्मानं विभज्याथ स्वर्गमर्त्यरसातले ॥ ८ ॥ स्वर्गे चतुर्धा व्यग मत्सप्तधा मर्त्यमण्डले ॥ रसातले चतुर्धैव सैवं पञ्चदशाकृतिः ॥ ९ ॥ सर्वत्र सर्वभूतैव सर्वपापविनाशिनी ॥ सर्वकामप्रदा नित्यं सैव वेदे प्रगी यते ॥ १० ॥ मर्त्या मर्त्यगतामेव पश्यन्ति न तलं गताम् ॥ नैव स्वर्गगतां मर्त्याः पश्यन्त्यज्ञानबुद्धयः ॥ ११ ॥ यावत्सागरगा देवी तावद्देवमयी स्मृता ॥ उत्सृष्टा गौतमेनैव प्रायात्पूर्वार्णवं प्रति ॥ १२ ॥ ततो देवर्षिभिर्जुष्टां मातरं जगतः शुभाम् ॥ गौतमो मुनिशार्दूलः प्रदक्षिणमथाकरोत् ॥ ॥ १३ ॥ त्रिलोचनं सुरेशानं प्रथमं पूज्य गौतमः ॥ उभयोस्तीरयोः स्नानं करोमीति दधे मतिम् ॥ १४ ॥ स्मृतमात्रस्तदा तत्राऽऽविरासीत्करुणार्णवः ॥ कृताञ्जलिपुटो भूत्वा भक्तिनम्रस्त्रिलोचनम् ॥ १५ ॥ तत्र स्नानं कथं सिध्येदित्येवं शर्वमब्रवीत् ॥ ॥ १६ ॥ ॥ गौतम उवाच ॥ देवदेव महेशान तीर्थस्नानविधिं मम ॥ ब्रूहि सम्यङ्महेशान लोकानां हितकाम्यया ॥ १७ ॥ शिव उवाच ॥ महर्षे शृणु सर्वं च विधिं गोदावरीभवम् ॥ पूर्वं नान्दीमुखं कृत्वा देहशुद्धिं विधाय च ॥ १८ ॥ ब्राह्मणान्भोजयित्वा च तेषामाज्ञां प्रगृह्य च ॥ ब्रह्मचर्येण गच्छन्ति पतितालापवर्जिताः ॥ १९ ॥ यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ॥ विद्या तपश्च कीर्तिश्च स

तीर्थफलमश्नुते ॥ २० ॥ दुष्टभावं परित्यज्य स्वधर्मपरिनिष्ठितः ॥ श्रान्तसंवाहनं कुर्वन्दद्यादन्नं यथोचितम् ॥ २१ ॥ अकिंचनेभ्यः साधुभ्यो दद्याद्वस्त्राणि कम्बलान् ॥ शृण्वन्हरिकथां दिव्यां तथा गङ्गासमुद्भवाम् ॥ २२ ॥ अनेन विधिना गच्छन्सम्यक्तीर्थफलं लभेत् ॥ त्र्यम्बकश्चापरं प्राह गौतमं मुनिभिर्वृतम् ॥ २३ ॥ द्विहस्तमात्रे तीर्थानि संभविष्यन्ति गौतम ॥ सर्वत्राहं संनिहितः सर्वकामप्रदस्तथा ॥ २४ ॥ गंगाद्वारे प्रयागे च तथा सागरसंगमे ॥ एतेषु पुण्यदा पुंसां मुक्तिदा सा भगीरथी ॥ २५ ॥ नर्मदा तु सरिच्छ्रेष्ठा पर्वतेऽमरकण्टके ॥ यमुना संगता तत्र प्रभासे तु सरस्वती ॥ २६ ॥ कृष्णा भीमरथी चैव तुङ्गभद्रा तु नारद ॥ तिसृणां संगमो यत्र तत्तीर्थं मुक्तिदं नृणाम् ॥ २७ ॥ पयोष्णी संगता यत्र तत्रत्या तच्च मुक्तिदम् ॥ इयं तु गौतमी वत्स यत्र कापि ममाऽऽज्ञया ॥ २८ ॥ सर्वेषां सर्वदा नृणां स्नानान्मुक्तिं प्रदास्यति ॥ किंचित्काले पुण्यतमं किंचित्तीर्थं सुरागमे ॥ सर्वेषां सर्वदा तीर्थं गौतमी नात्र संशयः ॥ २९ ॥ षष्टिवर्षसहस्राणि भागीरथ्यवगाहनम् ॥ सकृद्गोदावरीस्नानं सिंहस्थे च बृहस्पतौ ॥ ३० ॥ विशेषाद्रामचरणप्रदानात्तीर्थसंश्रयात् ॥ सिंहस्थितें सुरगुरौ दुर्लभा गौतमी नृणाम् ॥ ३१ ॥ भागीरथी नर्मदा च यमुना च सरस्वती ॥ आयान्ति भीमरथ्याद्याः स्नातुं सिंहगते रवौ ॥ ३२ ॥ विहाय गौतमीं गङ्गां तीर्थान्यन्यानि सेवितुम् ॥ ये यान्ति मूढास्ते यान्ति निरयं सिंहगे गुरौ ॥ ३३ ॥ तिस्रः कोट्योऽर्द्धकोटी च योजनानां शतद्वये ॥ तीर्थानि मुनिशार्दूल संभविष्यन्ति गौतम ॥ इयं माहेश्वरी गङ्गा गौतमी वैष्णवीति च ॥ ३४ ॥ ब्राह्मी गोदावरी नन्दा सुनन्दा कामदायिनी ॥ ब्रह्मतेजःसमानीता सर्वपापप्रणाशिनी ॥ ३५ ॥ स्मरणादेव पापौघहन्त्री मम सदा प्रिया ॥ पञ्चानामपि भूतानामापः श्रेष्ठत्वमागताः ॥ ३६ ॥ तत्रापि तीर्थभूतास्तु तस्मादापः पराः स्मृताः ॥ तासां भागीरथी श्रेष्ठा ताभ्यो या गौतमी त्वया ॥ ३७ ॥ आनीता सजटा गङ्गा अस्या नान्यच्छुभावहम् ॥ स्वर्गे भुवि तले वाऽपि तीर्थं सर्वार्थदं मुने ॥३८॥ ब्रह्मोवाच ॥ इत्येतत्कथितं पुत्र गौतमाय महात्मने ॥ साक्षाद्धरेण तुष्टेन मया तव निवेदितम् ॥३९॥ एवं सा गौतमी गङ्गा सर्वेभ्योऽप्यधिका मता ॥ तत्स्वरूपं च कथितं कुतोऽन्या श्रवणस्पृहा ॥ ४० ॥ इति श्रीब्रह्मपुराणगतगौतमीमाहात्म्ये तीर्थमाहात्म्ये सप्तमोऽध्यायः ॥ ७ ॥

नारद उवाच ॥ द्विविधा सैव गदिता एकाऽपि सुरसत्तम ॥ एको भेदस्तु कथितो ब्राह्मणेनाऽऽहृतो यतः ॥ १ ॥ क्षत्रियेणापरोऽप्यंशो जटास्वेव व्यवस्थितः ॥ भवस्य देवदेवस्य आहृतस्तद्वदस्व मे ॥ २ ॥ ब्रह्मोवाच ॥ वैवस्वतान्वये जात इक्ष्वाकुकुलसंभवः ॥ सगरो नाम राजाऽऽसीद्यन्नाम्ना सागरो मुने ॥ ३ ॥ यज्वा दानपरो नित्यं धर्माचारविचारवान् ॥ तस्य भार्याद्वयं चाऽऽसीत्पतिभक्तिपरायणम् ॥ ४ ॥ तस्य वै संततिर्नाभूदिति

त्रैलोक्यराज्येऽपि कैवल्ये वा सुखं मनाक् ॥ तदूर्ध्वमपि वा यत्तु निर्वैरत्वादवाप्यते ॥ ७ ॥ ॥ ब्रह्मोवाच ॥ एवं परस्परं प्रीताः सन्तो देवाश्च दानवाः ॥ एकीभूताश्च सुप्रीता निर्मथ्य वरुणालयम् ॥ ८ ॥ मन्थानं मन्दरं कृत्वा रज्जुं कृत्वा तु वासुकिम् ॥ देवाश्च दानवाः सर्वे ममन्थुर्वरुणालयम् ॥ ९ ॥ उत्पन्नं च ततः पुण्यममृतं सुरवल्लभम् ॥ निष्पन्ने चामृते पुण्ये ते च प्रोचुः परस्परम् ॥ १० ॥ यामः स्वं स्वमधिष्ठानं कृतकार्याः श्रमं गताः ॥ सर्वे समं च सर्वेभ्यो यथायोग्यं विभज्यताम् ॥ ११ ॥ यदा सर्वागमो यत्र यस्मिंल्लँग्ने शुभावहे ॥ विभज्यतामिदं पुण्यममृतं सुरसत्तमाः ॥ ॥ १२ ॥ इत्युक्त्वा ते ययुः सर्वे दैत्यदानवराक्षसाः ॥ गतेषु दैत्यसंघेषु देवाः सर्वेऽन्वमन्त्रयन् ॥ १३ ॥ ॥ देवा ऊचुः ॥ गतास्ते रिपवोऽस्माकं विश्वस्यास्मास्वरिंदमाः ॥ रिपूणाममृतं नैव देयं भवति सर्वथा ॥ १४ ॥ ॥ ब्रह्मोवाच ॥ बृहस्पतिरस्तथेत्याह पुनराह सुरानिदम् ॥ १५ ॥ ॥ बृहस्पतिरुवाच ॥ न जानन्ति यथा पापाः पिबध्वं च तथाऽमृतम् ॥ अयमेवोचितो मन्त्रो यच्छत्रूणां पराभवः ॥ १६ ॥ द्वेष्याः सर्वात्मना द्वेष्या इति नीतिविदो विदुः ॥ न विश्वास्या न चाऽऽख्येया नैव मन्त्र्याश्च शत्रवः ॥ १७ ॥ तेभ्यो न देयममृतं भवेयुरमरास्ततः ॥ अमरेषु च जातेषु तेषु दैत्येषु शत्रुषु ॥ ताञ्जेतुं नैव शक्ष्यामो न देयममृतं ततः ॥ १८ ॥ ॥ ब्रह्मोवाच ॥ इति संमन्त्र्य ते देवा वाचस्पतिमथाब्रुवन् ॥ १९ ॥ ॥ देवा ऊचुः ॥ क्व यामः कुत्र मन्त्रः स्यात्क्व पिबामः क्व संस्थितिः ॥ कुर्मस्तदेव प्रथमं वद वाचस्पते तथा ॥ २० ॥ ॥ बृहस्पतिरुवाच ॥ यान्तु ब्रह्माणममराः पृच्छन्त्वत्र गतिं पराम् ॥ स तु ज्ञाता च वक्ता च दाता चैव पितामहः ॥ २१ ॥ ॥ ब्रह्मोवाच ॥ बृहस्पतेर्वचः श्रुत्वा मदन्तिकमथाऽगमन् ॥ नमस्य मां सुराः सर्वे यद्वृत्तं तन्न्यवेदयन् ॥ २२ ॥ तद्देववचनात्पुत्र तैः सुरैरगमं हरिम् ॥ विष्णवे कथितं सर्वं शंभवे विषहारिणे ॥ २३ ॥ अहं विष्णुश्च शंभुश्च देवगन्धर्वकिंनरैः ॥ मेरुकंदरमागत्य न जानन्ति यथाऽसुराः ॥ २४ ॥ रक्षकं च हरिं कृत्वा सोमपानाय तस्थिरे ॥ आदित्यस्तत्र विज्ञाता सोमभोज्यानथेतरान् ॥ २५ ॥ सोमो दाताऽमृतं भागं चक्रधृग्रक्षकस्त्वभूत् ॥ नैव जानन्ति तद्दैत्या दनुजा राक्षसास्तथा ॥ २६ ॥ विना राहुं महाप्राज्ञं सैंहिकेयं च सोमपम् ॥ कामरूपधरो राहुर्मरुतां मध्यमाविशत् ॥ २७ ॥ मरुद्रूपं समास्थाय पानपात्रधरस्तदा ॥ ज्ञात्वा दिवाकरो दैत्यं तं सोमाय न्यवेदयत् ॥ २८ ॥ तदा तदमृतं तस्मै दैत्यायादित्यरूपिणे ॥ दत्त्वा सोमं तदा सोमो विष्णवे तन्न्यवेदयत् ॥ २९ ॥ विष्णुः पीतामृतं दैत्यं चक्रेणोद्यम्य तच्छिरः ॥ चिच्छेद तरसा वत्स तच्छिरस्त्वमरं त्वभूत् ॥ ॥ ३० ॥ शिरोमात्रविहीनं यद्देहं तदपतद्भुवि ॥ देहं तदमृतस्पृष्टं पतितं दक्षिणे तटे ॥ ३१ ॥ गौतम्या मुनिशार्दूलाकम्पयद्वसुधातलम् ॥ देहं

चाप्यमरं पुत्र तदद्भुतमिवाभवत ॥ ३२ ॥ देहं च शिरसोऽपेक्षि शिरो देहमपेक्षते ॥ उभयं चामरं जातं दैत्यश्चायं महाबलः ॥ ३३ ॥ शिरः काये समाविष्टं सर्वान्भक्षयते सुरान् ॥ तस्माद्देहमिदं पूर्वं नाशयामो महीगतम् ॥ ततस्ते शंकरं प्राहुर्देवाः सर्वे ससंभ्रमाः ॥ ३४ ॥ ॥ देवा ऊचुः ॥ महीगतं दैत्यदेहं नाशयस्व सुरोत्तम ॥ त्वं देव करुणासिन्धुः शरणागतरक्षकः ॥ ३५ ॥ शिरसा नैव युज्येत दैत्यदेहं तथा कुरु ॥ ३६ ॥ ब्रह्मोवाच ॥ प्रेषयामास चेशोऽपि श्रेष्ठां शक्तिं तदाऽऽत्मनः ॥ मातृभिः सहितां देवीं मातरं लोकपालिनीम् ॥ ३७ ॥ ईशायुधधरा देवी ईशशक्तिसमन्विता ॥ महीगतं यत्र देहं तत्रागाद्भक्ष्यकाङ्क्षिणी ॥ ३८ ॥ शिरोमात्रं सुराः सर्वे मेरौ तत्रैव सान्त्वयन् ॥ देहो देव्या पुनस्तत्र युयुधे बहवः समाः ॥ ३९ ॥ राहुस्तत्र सुरानाह भित्त्वा देहं पुरा मम ॥ अत्राऽऽस्ते रसमुत्कृष्टं तदाकृष्य शरीरतः ॥ ४० ॥ पृथक्भूते रसे देहं प्रवरेऽमृतमुत्तमम् ॥ भस्मीभूयात्क्षणेनैव तस्मात्कुर्वन्तु तत्पुरा ॥ ४१ ॥ ब्रह्मोवाच ॥ एतद्राहुवचः श्रुत्वा प्रीताः सर्वेऽसुरारयः ॥ अभ्यषिञ्चन्ग्रहाणां त्वं ग्रहो भूया मुदाऽन्वितः ॥ ४२ ॥ तद्देववचनाच्छक्तिरीश्वरी या निगद्यते ॥ देहं भित्त्वा दैत्यपतेः सुरशक्तिसमन्विता ॥ ४३ ॥ आकृष्य शीघ्रमुत्कृष्टं प्रवरं चामृतं बहिः ॥ स्थापयित्वा तु तद्देहं भक्षयामास चाम्बिका ॥ ४४ ॥ कालरात्रिर्भद्रकाली प्रोच्यते या महाबला ॥ स्थापितं रसमुत्कृष्टं रसानां प्रवरं रसम् ॥ ४५ ॥ व्यस्नवत्स्थापितं तत्तु प्रवरा साऽभवन्नदी ॥ आकृष्टममृतं चैव स्थापितं साऽप्यभक्षयत् ॥ ४६ ॥ ततः श्रेष्ठा नदी जाता प्रवरा चामृता शुभा ॥ राहुदेहसमुद्भूता रुद्रशक्तिसमन्विता ॥ ४७ ॥ नदीनां प्रवरा रम्या चामृता प्रेरिता तथा ॥ तत्र पञ्च सहस्राणि तीर्थानि गुणवन्ति च ॥ ४८ ॥ तत्र शंभुः स्वयं तस्थौ सर्वदा सुरपूजितः ॥ तस्यै तुष्टाः सुराः सर्वे देव्यै नद्यै पृथक्पृथक् ॥ ४९ ॥ वरान्ददुर्मुदा युक्ता यथा पूजामवाप्स्याति ॥ शंभुः सुरपातिर्लोके तथा पूजामवाप्स्यसि ॥ ५० ॥ निवासं कुरु देवि त्वं लोकानां हितकाम्यया ॥ सदा तिष्ठ रसेशानि सर्वेषां सर्वसिद्धिदा ॥ ५१ ॥ स्तवनात्कीर्तनाद्ध्यानात्सर्वकामप्रदायिनी ॥ त्वां नमस्यन्ति ये भक्त्या किंचिदापेक्ष्य सर्वदा ॥ ५२ ॥ तेषां सर्वाणि कार्याणि भवेयुर्देवताज्ञया ॥ शिवशक्त्योर्यतस्तस्मिन्निवासोऽभूत्सनातनः ॥ ५३ ॥ अतो वदन्ति मुनयो निवासपुरमित्यदः ॥ प्रवरायाः पुरा देवाः सुप्रीतास्ते वरान्ददुः ॥ ५४ ॥ गङ्गायाः संगमो यस्ते विख्यातः सुरवल्लभः ॥ तत्राऽऽप्लुतानां सर्वेषां भुक्तिर्वा मुक्तिरेव च ॥ ५५ ॥ यद्यद्वाऽपि मनसः काम्यं देवानामपि दुर्लभम् ॥ स्यात्तेषां सर्वमेवेह एवं दत्त्वा सुरा ययुः ॥ ५६ ॥ ततः प्रभृति तत्तीर्थं प्रवरासंगमं विदुः ॥ प्रेरिता देवदेवेन शक्तिर्या प्रेरिता तु सा ॥ ५७ ॥ अमृता सैव विख्याता प्रवरैवं महानदी ॥ प्रवरासंगमे तस्मिन्स्नानदानादिकञ्च यत् ॥ सर्वं तदक्षयं विद्या

तिपतॄणां प्रीतिदायकम् ॥ ५८ ॥ इति श्रीब्रह्मपुराणगतगौतमीमाहात्म्ये स्वयंभुनारदसंवादे शिवप्रेरितामृतासंगमादितीर्थवर्णनं नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥ ॥ ब्रह्मोवाच ॥वृद्धासंगममाख्यातं यत्र वृद्धेश्वरः शिवः ॥ तस्याऽऽख्यानं प्रवक्ष्यामि शृणु पापप्रणाशनम् ॥ १ ॥ गौतमो वृद्ध इत्युक्तो मुनिरासीन्महातपाः ॥ यदा पुराऽभवद्बालो गौतमस्य सुतो द्विजः ॥ २ ॥ अनासः स पुरोत्पन्नस्तस्माद्विकृतरूपधृक् ॥ स वैराग्यान्जगामाथ देशं तीर्थमितस्ततः ॥ ३ ॥ उपाध्यायेन नैवाऽऽसीह्लज्जितस्य समागमः ॥ शिष्यैरन्यैः सहाध्यायो लज्जितस्य च नाभवत् ॥ ४ ॥ उपनीतः कथंचिच्च पित्रा वै गौतमेन सः ॥ एतावता गौतमोऽपि व्यगमच्चारितुं बहिः ॥ ५ ॥ एवं बहुतिथे काले ब्रह्ममात्रा धृते द्विजे ॥ नैव चाध्ययनं तस्य संजातं गौतमस्य हि ॥ ६ ॥ नैव शास्त्रस्य चाभ्यासो गौतमस्याभवत्तदा ॥ अग्निकार्यं ततश्चक्रे नित्यमेव यतव्रतः ॥ ७ ॥ गायत्र्यभ्यासमात्रेण ब्राह्मणो नामधारकः ॥ अग्न्युपासनमात्रं च गायत्र्यभ्यसनं तथा ॥ ८ ॥ एतावता ब्राह्मणत्वं गौतमस्याभवन्मुने ॥ उपासतोऽग्निं विधिवद्गायत्रीं च महात्मनः ॥ ९ ॥ तस्याऽऽयुर्ववृधे पुत्र गौतमस्य चिरायुषः ॥ न दारसंग्रहं लेभे नैव दाताऽस्ति कन्यकाम् ॥ १० ॥ तथा चरंस्तीर्थदेशे वनेषु विविधेषु च ॥ आश्रमेषु च पुण्येषु अटन्नास्ते स गौतमः ॥ ११ ॥ एवं भ्रमञ्शीतागिरिमाश्रित्याऽऽस्ते स गौतमः ॥ तत्रापश्यद्गुहां रम्यां वल्लीविटपमालिनीम् ॥ १२ ॥ तत्रोपविश्य विप्रेन्द्रो वस्तुं समकरोन्मतिम् ॥ तदन्तस्तु प्रविष्टोऽसावपश्यत्स्त्रियमुत्तमाम् ॥ १३ ॥ शिथिलाङ्गीमथ कृशां वृद्धां च तपसि स्थिताम् ॥ ब्रह्मचर्येण वर्तन्तीं कुमारीं रहसि स्थिताम् ॥ १४ ॥ स तां दृष्ट्वा मुनिश्रेष्ठो नमस्काराय तस्थिवान् ॥ नमस्यन्तं मुनिश्रेष्ठं तं गौतममवारयत् ॥ १५ ॥ ॥ वृद्धोवाच ॥ गुरुस्त्वं भविता मह्यं न मां वन्दितुमर्हसि ॥ आयुर्विद्या धनं कीर्तिर्धर्मः स्वर्गादिकं च यत् ॥ तस्य नश्यति वै सर्वं यं नमस्यति वै गुरुः ॥ १६ ॥ ॥ ब्रह्मोवाच ॥ कृताञ्जलिपुटस्तां वै गौतमः प्राह विस्मितः ॥ १७ ॥ ॥ गौतम उवाच ॥ तपस्विनी त्वं वृद्धा च गुणज्येष्ठा च भामिनी ॥ अल्पविद्यस्त्वल्पवया अहं तव गुरुः कथम् ॥ १८ ॥ ॥ वृद्धोवाच ॥ अस्मिन्नर्थे पुरावृत्तं वदामि तव सुव्रत ॥ आर्ष्टिषेणस्य पुत्रस्तु ऋतध्वज इति श्रुतः ॥ गुणवान्मतिमाञ्छूरः क्षत्रधर्मपरायणः ॥ १९ ॥ स कदाचिद्वनं प्रायान्मृगयाकृष्टचेतनः ॥ विश्राममकरोदस्यां गुहायां स ऋतध्वजः ॥ २० ॥ युवा स मतिमान्दक्षो बलेन महता वृतः ॥ तं विश्रान्तं नृपवरमप्सरा ददृशे ततः ॥ २१ ॥ गन्धर्वराजस्य सुतां सुश्यामा इति विश्रुता ॥ तां दृष्ट्वा चकमे राजा राजानं चकमे च सा ॥ २२ ॥ रतिक्रीडा समभवत्तया राज्ञो महामते ॥ निवृत्तकामो राजेन्द्रस्तामापृच्छ्याऽऽगमद्गृहम् ॥ २३ ॥ उत्पन्नाऽहं ततस्तस्यां सुश्यामायां महामते ॥ गच्छन्ती मां

तदा माता इदमाह तपोधन ॥ २४ ॥ ॥ सुश्यामोवाच ॥ यस्त्वस्यां प्रविशेद्भद्रे स ते भर्ता भविष्यति ॥ २५ ॥ वृद्धोवाच ॥ इत्युक्त्वा सा जगामाथ माता मम महामते ॥ तस्मादत्र प्रविष्टस्त्वं पुमान्नान्यः कदाचन ॥ २६ ॥ सहस्राणि तथाऽशीतिं कृत्वा राज्यं पिता मम ॥ अत्रैव च तपस्तप्त्वा ततः स्वर्गमुपेयिवान् ॥ २७ ॥ स्वर्गं यातेऽपि पितरि सहस्राणि तथा दश ॥ वर्षाणि मुनिशार्दूल राज्यं कृत्वा तथा परः ॥ २८ ॥ स्वर्गं यातो मम भ्राता अहमत्रैव संस्थिता ॥ अहं ब्रह्मन्नान्यवृता न माता न पिता मम ॥ २९ ॥ अह मात्मेश्वरी ब्रह्मन्निविष्टा क्षत्रकन्यका ॥ तस्माद्भजस्व मां ब्रह्मन्व्रतस्थां पुरुषार्थिनीम् ॥ ३० ॥ ॥ गौतम उवाच ॥ सहस्रायुरहं भद्रे मत्तस्त्वं वयसाऽधिका ॥ अहं बालस्त्वं तु वृद्धा नैवायं घटते मिथः ॥ ३१ ॥ ॥ वृद्धोवाच ॥ त्वं भर्ता मे पुरा दिष्टो नान्यो भर्ता मतो मम ॥ धात्रा दत्तस्ततस्त्वं मां न निराकर्तुमर्हसि ॥ ३२ ॥ अथवा नेच्छसीमां त्वममदुष्टामनुव्रताम् ॥ ततस्त्यक्ष्यामि जीवं मे इदानीं तव पश्यतः ॥ ३३ ॥ अपेक्षिताप्राप्तितो हि देहिनां मरणं वरम् ॥ अनुरक्तजनत्यागे पातकान्तो न विद्यते ॥ ३४ ॥ ॥ ब्रह्मोवाच ॥ वृद्धायास्तद्वचः श्रुत्वा गौतमो वाक्यमब्रवीत् ॥ ३५ ॥ ॥ गौतम उवाच ॥ अहं तपोविरहितो विद्याहीनो ह्यकिंचनः ॥ नाहं वरो हि योग्यस्ते कुरूपो भोगवर्जितः ॥ ३६ ॥ अनासोऽहं किं करोमि अतपोविद्य एव च ॥ तस्मात्सुरूपं सद्विद्यामापाद्य प्रथमं शुभे ॥ पश्चात्ते वचनं कार्यं ततो वृद्धाऽब्रवीद्द्विजम् ॥ ३७ ॥ ॥ वृद्धोवाच ॥ मया सरस्वती देवी तोषिता तपसा द्विज ॥ तथैवाऽऽपो रूपवत्यो रूपदाताऽग्निरेव च ॥ ३८ ॥ तस्माद्वागीश्वरी देवी सा ते विद्यां प्रदास्यति ॥ अग्निश्च रूपवान्देवस्तव रूपं प्रदास्याति ॥ ३९ ॥ ॥ ब्रह्मोवाच ॥ एवमुक्त्वा गौतमं तं वृद्धोवाच विभावसुम् ॥ प्रार्थयित्वा सुविद्यं तं सुरूपं चाकरोन्मुनिम् ॥ ४० ॥ ततः सुविद्यः सुभगः सुकान्तो वृद्धां स पत्नीमकरोत्प्रीतियुक्तः ॥ तया स रेमे बहुला मनोज्ञया समाः सुखं प्रीतमना गुहायाम् ॥ ४१ ॥ कदाचित्तत्र वसतोर्दंपत्योर्मुदतोर्गिरौ ॥ गुहायां मुनिशार्दूल आजग्मुर्मुनयोऽमलाः ॥ ४२ ॥ वसिष्ठवामदेवाद्या ये चान्ये च महर्षयः ॥ भ्रमन्तः पुण्यतीर्थानि प्राप्नुवंस्तस्य तां गुहाम् ॥४३॥ आगतांस्तानृषीञ्ज्ञात्वा गौतमः सह भार्यया ॥ सत्कारमकरोत्तेषां जहसुस्तं च केचन ॥४४॥ ये बाला यौवनोन्मत्ता वयसा ये च मध्यमाः ॥ वृद्धां च गौतमं प्रेक्ष्य जहसुस्तत्र केचन ॥ ४५ ॥ कृशां विशालां लंबोष्ठीं सलोमां शूर्पकर्णकाम् ॥ दीर्घदन्तां दीर्घनसां दीर्घकेशान्तु जर्जराम् ॥४६॥ रूपलावण्यसौभाग्यविद्यायुक्तं च गौतमम् ॥ संप्रेक्ष्य जहसुः केचित् बालिशा ऋषिपुत्रकाः ॥४७॥ शिष्यास्तथाऽल्पमतयस्तां दृष्ट्वा प्रोचुरुत्स्मिताः ॥ ४८ ॥ ॥ ऋषय ऊचुः ॥ पुत्रोऽयं तव पौत्रो वा वृद्धे को गौतमीऽभवत् ॥ सत्यं वदस्व कल्याणि

इत्येवं जहसुर्द्विजाः ॥ ४९ ॥ तपस्विनि फलं प्रोक्तं तपसः सत्यमुत्कटम् ॥ तपसा शममन्वेति श्रममेव ह्यशक्तितः ॥ ५० ॥ सकृत्तस्यैव तु शमं समं पश्य सुशोभने ॥ बहुजन्मार्जितस्येह रक्षणं सत्यभाषणम् ॥ ५१ ॥ किमत्र बहुनोक्तेन फल्गुप्रायेण सांप्रतम् ॥ त्वमेव धन्या लोकेऽस्मिन्वद सौभाग्यसंयुते ॥ ५२ ॥ तपसा दग्धपापा त्वं तपःश्रमसुकीर्तिता ॥ स्वयं कृशा तु लोकेऽस्मिन्तपसा च दमेन च ॥ ५३ ॥ आतिथ्यपूजनेनापि पुत्रपालनकेन च ॥ मा पुष्टमस्तु लोकेऽस्मिञ्छरीरं पापसंचयात् ॥ ५४ ॥ दया दानं तपः सत्यं शौचमिन्द्रियनिग्रहः ॥ आतिथ्यपूजनं शान्तिः पुत्रादिपरिपालनम् ॥ ५५ ॥ स्वधर्मवर्तनं सर्वमित्यादि परिपालनात् ॥ यदात्मोदरप्राप्त्यर्थं व्यापारो यस्य केवलम् ॥ ५६ ॥ स्फुटं स नरकायैव शरीरे केवलं मतः ॥ सर्वदुःखसहा नारी का लोके वद भामिनि ॥५७॥ श्वतुल्या विद्यते सुभ्रूः सर्वदाऽतिथिपूजनम् ॥ अपवित्रासु सा ज्ञेया भर्तृपुत्र विवर्जिता॥५८॥ संभोज्यान्ना द्विजैर्नूनं धर्मयुक्तासि शोभने ॥ तस्माद्वृद्धतमा हि त्वं पतिहीनाप्यसंशयम् ॥५९॥ कुरूपिणी सुरूपा त्वमधनापि धनान्विता ॥ तप्तं तपस्त्वयैवोग्रमेकांगुष्ठादि दुष्कृतम् ॥६०॥ लक्ष्मीपतिस्त्वया भक्त्या स्वर्चितः पूर्वजन्मनि ॥ सद्दानानि सुदत्तानि यज्ञाः स्विष्टाः सुदक्षिणाः ॥ ६१ ॥ तीर्थसेवा कृता सम्यक् प्रदत्तं च हुतं बहु ॥ तस्मात्पुत्रस्त्वया लब्धो गौतमो वेदपारगः ॥ ६२ ॥ वेदवेदाङ्गतत्त्वज्ञः सर्वशास्त्रबहुश्रुतः ॥ त्रैलोक्यसुकृतेनापि दुर्लभो गौतमः सुतः ॥ ६३ ॥ नप्ता वा पुत्रपौत्रो वा दुहितापुत्र एव वा ॥ पुत्रतृप्तिकराः शश्वद्दौहित्रकुतुपास्तिलाः ॥ ६४ ॥ कुलं समानं विमलं याति विष्णोः परं पदम् ॥ अनेन च तपोवृद्धे नात्र कार्या विचारणा ॥ ६५ ॥ केचिदूचुस्ततश्चैव ऋषिशिष्याः सविस्मयाः ॥ विषं वृद्धस्य युवनिर्वृद्धाया अमृतं युवा ॥ इष्टानिष्टसमायोगो दृष्टोऽस्याभिरद्दो चिरात् ॥ ६६ ॥ ॥ ब्रह्मोवाच ॥ इत्येवमूचिरे केचिद्दंपत्योः शृण्वतोस्तदा ॥ एवमुक्त्वा कृतातिथ्या ययुः सर्वे महर्षयः ॥ ६७ ॥ ऋषीणां वचनं श्रुत्वा उभावपि सुदुःखितौ ॥ लज्जितो च महाप्राज्ञो गौतमो भार्यया सह ॥ पप्रच्छ मुनिशार्दूलमगस्त्यमृषिसत्तमम् ॥ ६८ ॥ ॥ गौतम उवाच ॥ को देशः किमु तीर्थं वा यत्र श्रेयः समाप्यते ॥ शीघ्रमेव महाप्राज्ञ भुक्तिमुक्तिप्रदायकम् ॥ ६९ ॥ ॥ अगस्त्य उवाच ॥ वदद्भिर्मुनिभिर्ब्रह्मन्मया श्रुतमिदं वचः ॥ सर्वे कामास्तत्र पूर्णा गौतम्यां नात्र संशयः ॥ ७० ॥ तस्माद्गच्छ महाबुद्धे गौतमीं पापनाशिनीम् ॥ अहं त्वामनुयास्यामि यथेच्छासि तथा कुरु ॥ ७१ ॥ ॥ ब्रह्मोवाच ॥ एतच्छ्रुत्वाऽगस्त्यवाक्यं वृद्धया गौतमोऽभ्यगात् ॥ तत्र तेपे तपस्तीव्रं पत्न्या स भगवानृषिः ॥ ७२ ॥ स्तुतिं चकार देवस्य शंभोर्विष्णोस्तथैव च ॥ गङ्गां च तोषयामास भार्यार्थं भगवानृषिः ॥७३॥ गौतम उवाच ॥ खिन्नात्मनामत्र भवे त्वमेव शरणं शिवः ॥ मरुभूमावध्व

गानां विटपीव प्रियायुतः ॥ ७४ ॥ उच्चावचानां भूतानां सर्वथा पापनोदनः ॥ सस्यानां घनवत्कृष्ण त्वमवग्रहशोषिणाम् ॥ ७५ ॥ वैकुण्ठदुर्गानिः
श्रेणिस्त्वं पीयूषतरङ्गिणी ॥ अधोगतानां सप्तानां शरणं भव गौतमि ॥ ७६ ॥ ॥ ब्रह्मोवाच ॥ ततस्तुष्टाऽवदद्वाक्यं गौतमं वृद्धया युतम् ॥ शरणा
गतदीनार्ते शरण्या गौतमी मुदा ॥ ७७ ॥ ॥ गौतम्युवाच ॥ अभिषिञ्चस्व भार्यां त्वं मज्जलैर्मन्त्रसंयुतैः ॥ कलशैरुपचारैश्च ततः पत्नी तव
प्रिया ॥ ७८ ॥ सुरूपा चारुसर्वाङ्गी सुभगा चारुलोचना ॥ सर्वलक्षणसंपूर्णा रम्यरूपमवाप्स्यति ॥ ७९ ॥ रूपवत्या पुनस्त्वं वै भार्यया चाभिषे
चितः ॥ सर्वलक्षणसंपूर्णः कान्तं रूपमवाप्स्यसि ॥८०॥ ॥ ब्रह्मोवाच ॥ तथेति गांगवचनाद्यथोक्तं तौ च चक्रतुः ॥ सुरूपतामुभौ प्राप्तौ गौतम्याश्च
प्रसादतः ॥ ८१ ॥ अभिषेकोदकं यच्च सा नदी समजायत ॥ तस्या नाम्ना तु विख्याता वृद्धाया मुनिसत्तम ॥ ८२ ॥ वृद्धा नदीति विख्या
ता गौतमोऽपि तथोच्यते ॥ वृद्धगौतम इत्युक्त ऋषिभिः समवासिभिः ॥ वृद्धा तु गौतमीं प्राह गंगां प्रत्यक्षरूपिणीम् ॥ ८३ ॥
॥ वृद्धोवाच ॥ मन्नाम्नीयं नदी देवि वृद्धा चेत्यभिधीयताम् ॥ त्वया च संगमस्तस्यास्तस्यास्तीर्थमनुत्तमम् ॥ ८४ ॥ रूपसौभाग्यसंपत्तिपुत्रपौ
त्रप्रवर्धनम् ॥ आयुरारोग्यकल्याणं जयप्रीतिविवर्धनम् ॥ स्नानदानादिहोमैश्च पितॄणां पावनं परम् ॥ ८५ ॥ ॥ ब्रह्मोवाच ॥ अस्त्वित्याह च तां
गङ्गा सुवृद्धां गौतमप्रियाम् ॥ गौतमस्थापितं लिङ्गं वृद्धानाम्नैव कीर्तितम् ॥ ८६ ॥ तत्रैव च मुदं प्राप्तो वृद्धया मुनिसत्तमः ॥ तत्र स्नानं च
दानं च सर्वाभीष्टप्रदायकम् ॥ ८७ ॥ ततः प्रभृति तत्तीर्थं वृद्धासंगममुच्यते ॥ ८८ ॥ इति श्रीब्रह्मपुराणगतगौतमीमाहात्म्ये तीर्थमाहात्म्ये वृद्धासं
गमाद्युभयतटसप्तदशतीर्थवर्णनं नाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥ ॥ ब्रह्मोवाच ॥ इलातीर्थमिति ख्यातं सर्वसिद्धिकरं नृणाम् ॥ ब्रह्महत्यादिपापानां
पावनं सर्वकामदम् ॥ १ ॥ वैवस्वतान्वये जात इलो नाम जनेश्वरः ॥ महत्या सेनया सार्धं जगाम मृगयावनम् ॥ २ ॥ परिबभ्राम गहनं बहुव्या
लसमाकुलम् ॥ नानाकारद्विजयुतं विटपैः परिशोभितम् ॥ ३ ॥ वनेचरं नृपश्रेष्ठो मृगयागतमानसः ॥ तत्रैव मतिमाधत्त इलोऽमात्यानथाब्रवीत् ॥
॥ ४ ॥ इल उवाच ॥ गच्छन्तु नगरं सर्वे मम पुत्रेण पालितम् ॥ देशं कोशं बलं राज्यं पालयन्तु पुनश्च तम् ॥ ५ ॥ वसिष्ठोऽपि तथा यातु
आदायाग्नीन्पितेव नः ॥ पत्नीभिः सहितो धीमानरण्येऽहं वसाम्यथ ॥ ६ ॥ अरण्यभोगभुग्भिश्च वाजिवारणमानुषैः ॥ मृगयाशीलिभिः कैश्चि
द्यान्तु सर्वे इतः पुरीम् ॥ ७ ॥ ॥ ब्रह्मोवाच ॥ तथेत्युक्त्वा ययुस्तेऽपि स्वयं प्रायाच्छनैर्गिरिम् ॥ हिमवन्तं रत्नमयं वसंस्तत्र इलो नृपः ॥ ८ ॥
ददर्श कंदरं तत्र नानारत्नविचित्रितम् ॥ तत्र यक्षेश्वरः कश्चित्समन्युरिति विश्रुतः ॥ ९ ॥ तस्य भार्या समानाम्नी भर्तृव्रतपरायणा ॥ तस्मिन्वस

त्यसौ यक्षो रमणीये नगोत्तमे ॥ १० ॥ मृगरूपेण व्यचरद्भार्यया स महामतिः ॥ स्वेच्छया स्ववने यक्षः क्रीडते नृत्यगीतकैः ॥ ११ ॥ इत्थं स यक्षो जानाति मृगरूपधरोऽपि च ॥ इलस्तु तं न जानाति कंदरं यक्षपालितम् ॥ १२ ॥ यक्षस्य गेहं विपुलं नानारत्नविचित्रितम् ॥ तत्रोपविष्टो नृपतिर्महत्या सेनया वृतः ॥ १३ ॥ वासं चक्रे स तत्रैव गेहे यक्षस्य धीमतः ॥ स यक्षोऽधर्मकोपेन भार्यया मृगरूपधृक् ॥ १४ ॥ इलं जेतुं न शक्नोमि याचितो न ददाति च ॥ हृतं गेहं ममानेन किं करोमीत्यचिन्तयत् ॥ १५ ॥ युधि मत्तं कथं हन्यां चेति स्थित्वा स यक्षराट् ॥ आत्मीयान्प्रेषयामास यक्षाञ्शूरान्धनुर्धरान् ॥ १६॥ ॥ यक्ष उवाच ॥ युद्धे जित्वा च राजानमिलमुद्धतदन्तिनम् ॥ गृहाद्यथाऽन्यतो याति मम तत्कर्तुमर्हथ ॥ १७ ॥ ॥ ब्रह्मोवाच ॥ यक्षेश्वरस्य तद्वाक्याद्यक्षास्ते युद्धदुर्मदाः ॥ इलं गत्वाऽब्रुवन्सर्वे निर्गच्छास्माद्गृहालयात् ॥ १८ ॥ न चेद्युद्धात्परिभ्रष्टः पलायन्निर्गमिष्यसि ॥ तद्यक्षवचनात्कोपाद्युद्धं चक्रे स राजराट् ॥ १९ ॥ जित्वा यक्षान्बहुविधानुवास दश शर्वरीः ॥ यक्षेश्वरो मृगो भूत्वा भार्ययाऽपि वने वसन् ॥ २० ॥ हृतगेहो वनं प्राप्तो हृतभृत्यः स यक्षिणीम् ॥ प्राह चिन्तापरो भूत्वा मृगीरूपधरां प्रियाम् ॥ ॥ २१ ॥ ॥ यक्ष उवाच ॥ बलवन्तं दुराधर्षं श्रिया शौर्येण गर्वितम् ॥ मदांधं मृगयासक्तं कथं जेष्ये नृपं प्रिये ॥ २२ ॥ ॥ यक्षिण्युवाच ॥ वद कान्त उपायोऽस्ति तस्य गर्वस्य नाशने ॥ उपायो यदि मद्वाक्यात्करिष्यामि वदस्व मे ॥ २३ ॥ यक्ष उवाच ॥ अस्त्युपायो वरारोहे नृपतेर्गर्वनाशने ॥ यरेण केन नृपतेरस्य गर्वो व्यपोहति ॥ २४ ॥ तत्कुरुष्व महाभागे मम प्रियकरं शुभम् ॥ तत्र त्वं गच्छ कल्याणि यत्रास्ते नृपमंदधीः ॥ ॥ २५ ॥ तत्र त्वं दर्शयात्मानमिलस्य पुरतः शुभे ॥ आकर्षेलं च राजानमुमावनमिति श्रुतम् ॥ २६ ॥ मृगी भूत्वेव सुभगे तच्च मद्गृहवर्तिनम् ॥ मृगमासक्तमनसं स्त्रीत्वमाप्नोतु दुर्मतिः ॥ २७ ॥ राजाऽयं दुर्मनाः कान्ते व्यसनासक्तमानसः ॥ अनेनायाति विपदं तत्रोपायो विचिन्तितः ॥ ॥ २८ ॥ पापर्धिव्यसनान्तानि राज्यान्यखिलभूभुजाम् ॥ प्रापयोमावनं सुभ्रूर्मृगी भूत्वा मनोहरा ॥ २९ ॥ प्रविशेत्तत्र राजाऽयं स्त्री भविष्यत्यसंशयम् ॥ करणीयं त्वया भद्रे न चैतद्युज्यते मम ॥ अहं तु पुरुषो येन त्वं पुनः स्त्री च यक्षिणी ॥ ३० ॥ ॥ यक्षिण्युवाच ॥ कथं त्वया न गन्तव्यमुमावनमनुत्तमम् ॥ गतेऽपि त्वयि को दोषस्तन्मे कथय तत्त्वतः ॥ ३१ ॥ ॥ यक्ष उवाच ॥ हिमवत्पर्वतश्रेष्ठ उमया सहितः शिवः ॥ देवैर्गणैरनुवृतो विचचार यथासुखम् ॥ पार्वती शंकरं प्राह कदाचिद्रहसि स्थितम् ॥ ३२ ॥ ॥ पार्वत्युवाच ॥ स्त्रीणामेष स्वभावोऽस्ति रतं गोपायितं भवेत् ॥ तस्मान्मे नियतं देशमाज्ञया रक्षितं तव ॥ ३३ ॥ देहि मे त्रिदशेशान उमावनमिति श्रुतम् ॥ विना त्वया गणेशेन कार्तिके

येन नन्दिना॥३४॥यस्त्वत्र प्रविशेन्नाथ स्त्रीत्वं तस्य भवेदिति॥३५॥यक्ष उवाच ॥ इत्याज्ञोमावने दत्ता प्रसन्नेनेन्दुमौलिना ॥ करोति किं न च पुमान्कांतया प्रणयार्थितः ॥ तस्मान्मया न गन्तव्यमुमाया वनमुत्तमम् ॥ ३६ ॥ ॥ ब्रह्मोवाच ॥ तद्भर्तृवचनं श्रुत्वा यक्षिणी कामरूपिणी ॥ मृगी भूत्वा विशालाक्षी इलस्य पुरतोऽभवत् ॥ ३७ ॥ यक्षस्तु संस्थितस्तत्र ददर्शैलो मृगीं तदा ॥ मृगयासक्तचित्तो वै मृगीं दृष्ट्वा विशेषतः ॥ ३८ ॥ एक एव हयारूढो निर्ययौ तां मृगीमनु ॥ साऽऽकर्षत शनैस्तं तु राजानं मृगयाकुलम् ॥ ३९ ॥ शनैर्जगाम सा तत्र यदुमावनमुच्यते ॥ अदृश्या तु मृगी तस्मै दर्शयन्ती क्वचित्क्वचित् ॥ ४० ॥ तिष्ठन्ती चैव गच्छन्ती धावन्ती च बिभीतवत् ॥ हरिणी चपलाक्षी सा तमाकर्षदुमावनम् ॥ ४१ ॥ अनुप्राप्तो हयारूढस्तत्प्राप स उमावनम् ॥ उमावनं प्रविष्टं तं ज्ञात्वा सा यक्षिणी तदा ॥ ४२ ॥ मृगीरूपं परित्यज्य यक्षिणी कामरूपिणी ॥ दिव्यरूपं समास्थाय चाशोकतरुसंनिधौ ॥ ४३ ॥ तच्छाखालम्बितकरा दिव्यगन्धानुलेपना ॥ दिव्यरूपधरा तन्वी कृतकार्या समा तदा ॥ ४४ ॥ हसन्ती नृपतिं प्रेक्ष्य श्रान्तं हयगतं तदा ॥ मृगीमालोकयन्तं तं चपलाक्षमिलं तदा ॥ ४५ ॥ भर्तृवाक्यमशेषेण स्मरन्ती प्राह भूमिपम् ॥ ४६ ॥ समोवाच ॥ हयारूढाऽबला तन्वि क्व एकैव तु गच्छसि ॥ पुरुषस्य च वेषेण इले कमनुयास्यसि ॥ ४७ ॥ ॥ ब्रह्मोवाच ॥ इलेति वचनं श्रुत्वा राजाऽसौ क्रोधमूर्छितः ॥ यक्षिणीं भर्त्सयित्वाऽसौ तामपृच्छन्मृगीं पुनः ॥ ४८ ॥ तथाऽपि यक्षिणी प्राह इले किमनुवीक्षसे ॥ इलेति वचनं श्रुत्वा धृतचापो हयस्थितः ॥ ४९ ॥ कुपितो दर्शयामास त्रैलोक्यविजयी धनुः ॥ पुनः सा प्राह नृपतिं माहात्मानमिले स्वयम् ॥ ५० ॥ प्रेक्षस्व पश्चान्मां ब्रूहि असत्यां सत्यवादिनीम् ॥ तदा चाऽऽलोकयद्राजा स्तनौ तुंगौ भुजान्तरे ॥ किमिदं मम संजातमित्येवं चकितोऽभवत् ॥ ५१ ॥ ॥ इलोवाच ॥ किमिदं मम संजातं जानीते भवती स्फुटम् ॥ वद सर्वं यथातथ्यं त्वं का वा वद सुव्रते ॥ ५२ ॥ ॥ यक्षिण्युवाच ॥ हिमवत्कंदरश्रेष्ठे समन्युर्वसते पतिः ॥ यक्षाणामधिपः श्रीमांस्तद्भार्याऽहं तु यक्षिणी ॥ ५३ ॥ यत्कंदरे भवान्राजा तूपविष्टः सुशीतले ॥ यस्य यक्षा हता मोहात्त्वया हि संगरं विना ॥ ५४ ॥ ततोऽहं निर्गमार्थं ते मृगी भूत्वा उमावनम् ॥ प्रविष्टा त्वं प्रविष्टोऽसि पुरा प्राह महेश्वरः ॥ ५५ ॥ यस्त्वत्र प्रविशेन्मंन्दः पुमान्स्त्रीत्वमवाप्स्यति ॥ तस्मात्स्त्रीत्वमवाप्तोऽसि न त्वं दुःखितुमर्हसि ॥ प्रौढोऽपि कोऽत्र जानाति विचित्रभवितव्यताम् ॥ ५६ ॥ ॥ ब्रह्मोवाच ॥ यक्षिणीवचनं श्रुत्वा हयारूढस्तदाऽपतत् ॥ तमाश्वास्य पुनः सैव यक्षिणी वाक्यमब्रवीत् ॥ ५७ ॥ ॥ यक्षिण्युवाच ॥ स्त्रीत्वं जातं जातमेव न पुंस्त्वं कर्तुमर्हसि ॥ गृहाण विद्यां स्त्रीयोग्यां नृत्यं गीतमलंकृतिम् ॥ स्त्रीलालित्यं स्त्रीविलासं स्त्रीकृत्यं सर्वमेव तत् ॥ ५८ ॥ ॥

ब्रह्मोवाच ॥ इला सर्वमथावाप्य यक्षिणी वाक्यमब्रवीत ॥ ५९ ॥ ॥ इलोवाच ॥ को वा भर्ता किं तु कृत्यं पुनः पुंस्त्वं कथं भवेत् ॥ एतद्वदस्व कल्याणी दुःखार्ताया विशेषतः ॥ आर्तानामार्तिशमनाच्छ्रेयो नाभ्यधिकं क्वचित् ॥ ६० ॥ ॥ यक्षिण्युवाच ॥ बुधः सोमसुतो नाम वनादस्माच्च पूर्वतः ॥ आश्रमस्तस्य सुभगे रूपयौवनशालिनः ॥ ६१ ॥ अनेनैव पथा सोमं पितरं स बुधो ग्रहः ॥ द्रष्टुं याति ततो नित्यं नमस्कर्तुं तथैव च ॥ ॥ ६२ ॥ यदा याति बुधः शान्तस्तदाऽऽत्मानं च दर्शय ॥ तं दृष्ट्वा त्वं तु सुभगे सर्वकामानवाप्स्यसि ॥ ६३ ॥ ॥ ब्रह्मोवाच ॥ तामाश्वास्य ततः सुभ्रूर्यक्षिण्यन्तरधीयत ॥ यक्षिणी सा तमाचष्ट यक्षोऽपि सुखमाप्तवान् ॥ ६४ ॥ इलसैन्यं च तत्राऽऽसीत्तद्गतं च यथासुखम् ॥ उमावनस्थिता चेला गायन्ती नृत्यती पुनः ॥ ६५ ॥ स्त्रीभावमनुचेष्टन्ती स्मरन्ती कर्मणो गतिम् ॥ कदाचित्क्रियमाणे तु इलया नृत्यकर्मणि ॥ ६६ ॥ तामपश्यद् बुधो धीमान्पितरं गन्तुमुद्यतः ॥ इलां दृष्ट्वा गतिं त्यक्त्वा तामागत्याब्रवीद्बुधः ॥ ६७ ॥ ॥ बुध उवाच ॥ भार्या भव मम स्वस्था सर्वाभ्यस्त्वं प्रिया भव ॥ ६८ ॥ ॥ ब्रह्मोवाच ॥ बुधवाक्यमिला भक्त्या त्वभिनन्द्य तथाऽकरोत् ॥ स्मृत्वा च यक्षिणीवाक्यं ततस्तुष्टाऽभवन्मुने ॥ ६९ ॥ बुधो रेमे तया प्रीत्या नीत्वा स्वस्थानमुत्तमम् ॥ सा चापि सर्वभावेन तोषयामास तं पतिम् ॥ ततो बहुतिथे काले बुधस्तुष्टोऽवदत्प्रियाम् ॥ ॥ ७० ॥ ॥ बुध उवाच ॥ किं ते देयं मया भद्रे प्रियं यन्मनसि स्थितम् ॥ ७१ ॥ ॥ ब्रह्मोवाच ॥ तद्वाक्यसमकालं तु पुत्रं देहीत्यभाषत ॥ इला बुधं सोमसुतं प्रीतिमन्तं प्रियं तथा ॥ ७२ ॥ ॥ बुध उवाच ॥ अमोघमेतन्मद्वीर्यं तथा प्रीतिसमुद्भवम् ॥ पुत्रस्ते भविता तस्मात्क्षत्रियो लोकविश्रुतः ॥ ७३ ॥ सोमवंशकरः श्रीमानादित्य इव तेजसा ॥ बुद्ध्या बृहस्पतिसमः क्षमया पृथिवीसमः ॥ ७४ ॥ वीर्येणाऽऽजौ हरिरिव कोपेन हुतभुग्यथा ॥ ७५ ॥ ॥ ब्रह्मोवाच ॥ तस्मिनुत्पद्यमाने तु बुधपुत्रे महात्मनि ॥ जयशब्दश्च सर्वत्र त्वासीच्च सुरवेश्मनि ॥ ७६ ॥ बुधपुत्रे समुत्पन्ने तत्राऽऽजग्मुः सुरेश्वराः ॥ अहमप्यागमं तत्र मुदा युक्तो महामते ॥ ७७ ॥ जातमात्रः सुतो रावमकरोत्स पृथुस्वरम् ॥ तेन सर्वेऽप्यवोचन्वै संगता ऋषयः सुराः ॥ ७८ ॥ यस्मात्पुरू रवोऽस्येति तस्मादेष पुरूरवाः ॥ स्यादित्येवं नाम चक्रुः सर्वे संतुष्टमानसाः ॥ ७९ ॥ बुधोऽप्यध्यापयामास क्षात्रविद्यां सुतं शुभाम् ॥ धनुर्वेदं सप्रयोगं बुधः प्रादात्तदाऽऽत्मजे ॥ ८० ॥ स शीघ्रं वृद्धिमगमच्छुक्लपक्षे यथा शशी ॥ स मातरं दुःखयुतां समीक्ष्येलां महामतिः ॥ नमस्याथ विनीतात्मा इलामैलोऽब्रवीदिदम् ॥ ८१ ॥ ॥ ऐल उवाच ॥ बुधो मातर्मम पिता तव भर्ता प्रियस्तथा ॥ अहं च पुत्रः कर्मण्यः कस्मात्ते मानसो ज्वरः ॥ ८२ ॥ ॥ इलोवाच ॥ सत्यं पुत्र बुधो भर्ता त्वं च पुत्रो गुणाकरः ॥ भर्तृपुत्रकृता चिन्ता न ममास्ति कदाचन॥

॥८३॥ तथाऽपि पूर्वजं किंचिद्दुःखं स्मृत्वा पुनः पुनः ॥ चिन्तयेयं महाबुद्धे ततो मातरमब्रवीत् ॥८४॥ ऐल उवाच ॥ निवेदयस्व मे मातस्तदेव प्रथमं मम॥ ॥८५॥ ब्रह्मोवाच ॥ इला चैनमुवाचेदं रहोवाचं कथं वदे ॥ तथाऽपि पुत्र ते वच्मि पित्रोः पुत्रो यतो गतिः॥मग्नानां दुःखपाथोऽब्धौ पुत्रः प्रवहणं परम् ॥८६॥ ॥ ब्रह्मोवाच ॥ तन्मातृवचनं श्रुत्वा विनीतः प्राह मातरम् ॥ पादौ निधाय शिरसि साश्रुनेत्रः सगद्गदः ॥ सर्वैरुपायैः पित्रोर्यः पुत्रो न हरति श्रमम् ॥ ८७ ॥ जीवन्मृतस्य तस्याहो निष्फले जन्मजीविते ॥ तीर्थसेवादानयज्ञतपःप्रभृतिकान्यपि ॥ कृतानि तेन पुण्यानि पितरौ येन तोषितौ ॥ ८८ ॥ सर्वं मनोगतं सत्यं वद मातर्यथा तथा ॥ साऽवदत्तनयं सोष्णनिश्वासश्लथिताधरा ॥ यथावृत्तं हि दुःखाब्धौ मज्जमानेव विह्वला ॥ ॥ ८९ ॥ सूर्यवंशप्रसूतानामिक्ष्वाकूणां तथा कुलम् ॥ तत्रोत्पत्तिं स्वस्य नाम राज्यप्राप्तिं प्रियान्सुतान् ॥ ९० ॥ पुरोधसं वसिष्ठं च प्रियां भार्यां स्वकं पदम् ॥ वननिर्याणमेवाथ. अमात्यानां पुरोधसः ॥ ९१ ॥ प्रेषणं च नगर्यां तां मृगयासक्तिमेव च ॥ हिमवत्कंदरगतिं यक्षेश्वरगृहे गतिम् ॥ ॥ ९२ ॥ उमावनप्रवेशं च स्त्रीत्वप्राप्तिमशेषतः ॥ महेश्वराज्ञया तत्र चाप्रवेशं नरस्य तु ॥ ९३ ॥ यक्षिणीवाक्यमप्यस्य वरदानं तथैव च ॥ बुधप्राप्तिं तथा प्रीतिं पुत्रोत्पत्त्याद्यशेषतः ॥ ९४ ॥ कथयामास तत्सर्वं श्रुत्वा मातरमब्रवीत् ॥ पुरूरवाः किं करोमि किं कृत्वा सुकृतं भवेत् ॥ ॥ ९५ ॥ एतावता ते तृप्तिश्चेदलमेतेन चाम्बिके ॥ यदप्यन्यन्मनोवर्ति तदप्याज्ञापयस्व मे ॥ ९६ ॥ ॥ इलोवाच ॥ इच्छेयं पुंस्त्वमुत्कृष्टमिच्छेयं राज्यमुत्तमम् ॥ अभिषेकं च पुत्राणां तव चापि विशेषतः ॥ ९७ ॥ दानं दातुं च यष्टुं च मुक्तिमार्गस्य वीक्षणम् ॥ सर्वं च कर्तुमिच्छामि तव पुत्र प्रसादतः ॥ ९८ ॥ ॥ पुत्र उवाच ॥ उपायं त्वा तु पृच्छामि येन पुंस्त्वमवाप्स्यसि ॥ तपसो वाऽन्यतो वाऽपि वदस्व मम तत्त्वतः ॥९९॥ ॥ इलोवाच ॥ बुधं त्वं पितरं पृच्छ गत्वा पुत्र यथार्थवत् ॥ स तु सर्वं तु जानाति उपदेक्ष्यति ते हितम् ॥ १०० ॥ ॥ ब्रह्मोवाच ॥ तन्मातृवचनादैलो गत्वा पितरमञ्जसा ॥ उवाच प्रणतो भूत्वा मातुः कृत्यं तथाऽऽत्मनः ॥ १०१ ॥ ॥ बुध उवाच ॥ इलं जाने महाप्राज्ञ इलां जातां पुनस्तथा ॥ उमावनप्रवेशं च शंभोराज्ञां तथैव च ॥ १०२ ॥ तस्माच्छंभुप्रसादेन उमायाश्च प्रसादतः ॥ विशापो भविता पुत्र तावाराध्य न चान्यथा ॥ १०३ ॥ ॥ पुरूरवा उवाच ॥ पश्येयं तं कथं देवं कथं वा मातरं शिवाम् ॥ तीर्थाद्वा तपसो वाऽपि तत्पितः प्रथमं वद ॥ १०४ ॥ ॥ बुध उवाच ॥ गौतमीं गच्छ पुत्र त्वं तत्राऽऽस्ते सर्वदा शिवः ॥ उमया सहितः श्रीमाञ्छापहन्ता वरप्रदः ॥ १०५ ॥ ॥ ब्रह्मोवाच ॥ पुरूरवा पितुर्वाक्यं श्रुत्वा तु मुदितोऽभवत् ॥ गौतमीं तपसे धीमान्गङ्गां त्रैलोक्यपावनीम् ॥ १०६ ॥ पुंस्त्वमिच्छंस्तथा मातुर्जगाम तपसे त्वरन् ॥ हिम

वन्तं गिरिं नत्वा मातरं पितरं गुरुम् ॥ १०७ ॥ गच्छन्तमन्वगात्पुत्रमिला सोमसुतस्तथा ॥ ते सर्वे गौतमीं प्राप्ता हिमवत्पर्वतोत्तमात् ॥ १०८ ॥ तत्र स्नात्वा तपः किंचित्कृत्वा चक्रुः स्तुतिं पराम् ॥ भवस्य देवदेवस्य स्तुतिक्रममिमं शृणु ॥ १०९ ॥ बुधस्तुष्टाव प्रथममिला च तदनन्तरम् ॥ ततः पुरूरवाः पुत्रो गौरीं देवीं च शंकरम् ॥ ११० ॥ ॥ बुध उवाच ॥ यौ तौ रमेते रशनारवेण स्वभावहेमप्रतिमौ सुरूपौ ॥ यावर्चितौ स्कन्द गणेश्वराभ्यां तौ मे शरण्यौ शरणं भवेताम् ॥ १११ ॥ ॥ इलोवाच ॥ संसारतापत्रयदावदग्धाः शरीरिणो यौ परिचिन्तयन्तः ॥ सद्यः परां निर्वृतिमाप्नुवन्ति तौ शंकरौ मे शरणं भवेताम् ॥ ११२ ॥ आर्ता ह्यहं पीडितमानसा ते क्लेशादिगोप्ता न परोऽस्ति कश्चित् ॥ देव त्वदीयौ चरणौ सुपुण्यौ तौ मे शरण्यौ शरणं भवेताम् ॥ ११३ ॥ ॥ पुरूरवा उवाच ॥ ययोः सकाशादिदमभ्युदेति प्रयाति चान्ते लयमेव सर्वम् ॥ जगच्छ रण्यौ जगदात्मकौ तु गौरीहरौ मे शरणं भवेताम् ॥ ११४ ॥ यौ देववृन्देषु महोत्सवे तु पादौ गृहाणेश गिरीशपुत्र्याः ॥ प्रोक्ते धृतौ प्रीतिवशाच्छि वेन तौ मे शरण्यौ शरणं भवेताम् ॥ ११५ ॥ ॥ श्रीदेव्युवाच ॥ किमभीष्टं प्रदास्यामि युष्मभ्यं तद्वदन्तु ते ॥ कृतकृत्याः स्थ भद्रं वो देवाना मपि दुष्करम् ॥ ११६ ॥ ॥ पुरूरवा उवाच ॥ इलो राजा तवाज्ञात्वा वनं प्राविशदम्बिके ॥ तत्क्षमस्व सुरेशानि पुंस्त्वं दातुं त्वमर्हसि ॥ ११७ ॥ ब्रह्मोवाच ॥ ॥ तथेत्युवाच तान्सर्वान्भवस्य तु मते स्थिता ॥ ततः स भगवानाह देवीवाक्यरतः सदा ॥ ११८ ॥ ॥ शिव उवाच ॥ अत्राभिषेक मात्रेण पुंस्त्वं प्राप्नोत्वयं नृपः ॥ ११९ ॥ ॥ ब्रह्मोवाच ॥ स्नाताया बुधभार्यायाः शरीराद्वारि सुस्रुवे ॥ नृत्यं गीतं च लावण्यं यक्षिण्या यदुपार्जि तम् ॥ १२० ॥ तत्सर्वं वारिधाराभिर्गङ्गाम्भसि समाविशत् ॥ ॥ नृत्या गीता च सौभाग्या इमा नद्यो बभूविरे ॥ १२१ ॥ ताश्चापि संगता गङ्गा ते पुण्याः संगमास्त्रयः ॥ तेषु स्नानं च दानं च सुरराज्यफलप्रदम् ॥ १२२ ॥ इला पुंस्त्वमवाप्याथ गौरीशंभोः प्रसादतः ॥ महाभ्युदयसिद्ध्यर्थं वाज पेयमथाकरोत् ॥ १२३ ॥ पुरोधसं वसिष्ठं च भार्याः पुत्रांस्तथैव च ॥ अमात्यांश्च बलं कोशमानीय स नृपोत्तमः ॥ १२४ ॥ चतुरङ्गं बलं राज्यं दण्डकेऽस्थापयत्तदा ॥ इलस्य नाम्ना विख्यातं तत्र तत्पुरमुच्यते ॥ १२५ ॥ सह्यद्रोण्यां मनोहारि महेन्द्रपुरतोऽधिकम् ॥ भोगोपभोगनिर्विण्णस्त स्मिन्पुरवरोत्तमे ॥ २२६ ॥ पूर्वजातानथो पुत्रान्सूर्यवंशक्रमागते ॥ राज्येऽभिषिच्य पश्चात्तमेलं स्नेहादसिञ्चयत् ॥ १२७ ॥ सोमवंशकरः श्रीमानयं राजा भवेदिति ॥ सर्वेभ्यो मतिमानेभ्यो ज्येष्ठः श्रेष्ठोऽभवन्मुने ॥ १२८ ॥ यत्र च क्रतवो वृत्ता इलस्य नृपतेः शुभाः ॥ यत्र पुंस्त्व मवाप्याथ यत्र पुत्राः समागताः ॥ १२९ ॥ यक्षिणीदत्तनृत्यादिगीतसौभाग्यमङ्गलाः ॥ नद्यो भूत्वा यत्र गङ्गां संगतास्तानि नारद ॥ १३० ॥

तीर्थानि शुभदान्यासन्सहस्राण्यथ षोडश ॥ उभयोस्तीरयोस्तात तत्र शंभुरिलेश्वरः ॥ तेषु स्नानं च दानं च सर्वक्रतुफलप्रदम् ॥१३१॥ इति श्रीब्रह्मपुराणगतगौतमीमाहात्म्ये स्वयंभुनारदसंवादे तीर्थमाहात्म्ये बुधेलापुरूरवोवसिष्ठनृत्यगीतसौभाग्येलेश्वरादिषोडशसहस्रतीर्थवर्णनं नामाष्टत्रिंशोऽध्यायः॥३८॥ ॥ ब्रह्मोवाच ॥ चक्रतीर्थमिति ख्यातं ब्रह्महत्यादिनाशनम् ॥ यत्र चक्रेश्वरो देवश्चक्रमाप यतो हरिः ॥१॥ यत्र विष्णुः स्वयं स्थित्वा चक्रार्थं शंकरं प्रभुः ॥ पूजयामास तत्तीर्थं चक्रतीर्थमुदाहृतम् ॥ २ ॥ यस्य श्रवणमात्रेण सर्वपापैः प्रमुच्यते ॥ दक्षक्रतौ प्रवृत्ते तु देवानां च समागमे ॥ ३ ॥ दक्षेण दूषिते देवे शिवे शर्वे महेश्वरे ॥ अनाह्वाने सुरेशस्य दक्षचित्ते मलीमसे ॥ ४ ॥ दाक्षायण्या श्रुते वाक्ये अनाह्वानस्य कारणे ॥ अहल्यायां चोक्तवत्यां कुपिताऽभूत्सुरेश्वरी ॥ ५ ॥ पितरं नाशये पापं क्षमेयं न कथंचन ॥ शृण्वती दोषवाक्यानि पित्रा चोक्तानि भर्तरि ॥ ६ ॥ पत्युः शृण्वन्ति या निन्दां तासां पापावधिः कुतः ॥ यादृशस्तादृशो वाऽपि पतिः स्त्रीणां परा गतिः ॥ ७ ॥ किं पुनः सकलाधीशो महादेवो जगद्गुरुः ॥ श्रुतं तन्निन्दनं तर्हि धारयामि न देहकम् ॥ ८ ॥ तस्मात्त्यक्ष्य इमं देहमित्युक्त्वा सा महासती ॥ कोपेन महताऽऽविष्टा प्रजज्वाल सुरेश्वरी ॥ ९ ॥ शिवैकचेतना देहं बलाद्योगाच्च तत्यजे ॥ महेश्वरोऽपि सकलं वृत्तमाकर्ण्य नारदात् ॥ १० ॥ दृष्ट्वा चुकोप पप्रच्छ जयां च विजयां तथा ॥ ते ऊचतुरुभे देवं दक्षक्रतुविनाशनम् ॥ ११॥ दाक्षायण्या इति श्रुत्वा मखं प्रायान्महेश्वरः ॥ भीमैर्गणैः परिवृतो भूतनाथैः समं ययौ ॥१२॥ मखस्तैर्वेष्टितः सर्वो देवब्रह्मपुरस्कृतः ॥ दक्षेण यजमानेन शुद्धभावेन रक्षितः ॥ १३ ॥ वसिष्ठादिभिरत्युग्रैर्मुनिभिः परिवारितः ॥ इन्द्रादित्याद्यैर्वसुभिः सर्वतः परिपालितः ॥१४॥ ऋग्यजुःसामवेदैश्च स्वाहाशब्दैरलंकृतः ॥ श्रद्धा पुष्टिस्तथा तुष्टिः शान्तिर्लज्जा सरस्वती ॥१५॥ भूमिर्द्यौः शर्वरी क्षान्तिरुषा आशा जया मतिः ॥ एताभिश्च तथाऽन्याभिः सर्वतः समलंकृतः ॥१६॥ त्वष्ट्रा महात्मना चापि कारितो विश्वकर्मणा ॥ सुरभिर्नन्दिनी धेनुः कामधुक्कामदोहिनी ॥ १७ ॥ एताभिः कामवर्षाभिः सर्वकामसमृद्धिमान् ॥ कल्पवृक्षः पारिजातो लताः कल्पलतादिकाः ॥१८॥ यद्यदिष्टतमं किंचित्तत्र तस्मिन्मखे स्थितम् ॥ स्वयं मघवता पूष्णा हरिणा परिरक्षितः ॥ १९ ॥ दीयतां भुज्यतां वाऽपि क्रियतां स्थीयतां सुखम् ॥ एतैश्च सर्वतो वाक्यैर्दक्षस्य पूजितं मखम् ॥२०॥ आदौ तु वीरभद्रोऽसा भद्रकाल्या युतो ययौ ॥ शोककोपपरीतात्मा पश्चाच्छूलपिनाकधृक् ॥२१॥ अभ्याययौ महादेवो महाभूतैरलंकृतः ॥ तानि भूतानि परितो मखे वेष्ट्य महेश्वरम् ॥ २२ ॥ क्रतुं विध्वंसयामासुस्तत्र क्षोभो महानभूत् ॥ पलायन्त ततः केचित्केचिद्धत्वा ततः शिवम् ॥ २३ ॥ केचित्स्तुवन्ति देवेशं केचित्कुप्यन्ति शंकरम् ॥ एवं विध्वंसितं यज्ञं दृष्ट्वा पूषा समभ्यगात् ॥ २४ ॥ पूष्णो

दन्तानथोत्पाव्य इन्द्रं व्यद्रावयत्क्षणात् ॥ भगस्य चक्षुषी विप्र वीरभद्रो व्यपाटयत् ॥ २५ ॥ दिवाकरं पुनर्दोर्भ्यां परिभ्राम्य समाक्षिपत् ॥ ततः सुरगणाः सर्वे विष्णुं ते शरणं ययुः ॥ २६ ॥ ॥ देवा ऊचुः ॥ त्राहि त्राहि गदापाणे भूतनाथकृताद्भयात् ॥ महेश्वरगणः कश्चित्प्रमथानां तु नायकः तेन दग्धो मखः सर्वो वैष्णवः पश्यतो हरेः ॥ २७ ॥ ॥ ब्रह्मोवाच ॥ हरिणा चक्रमुत्सृष्टं भूतनाथवधं प्रति ॥ भूतनाथोऽपि तच्चक्रमापतच्च तदाऽग्रसत् ॥ २८ ॥ ग्रस्ते चक्रे ततो विष्णोर्लोकपाला भयाद्ययुः ॥ तथा स्थितानवेक्ष्याथ दक्षो यज्ञं सुरानपि ॥ तुष्टाव शंकरं देवं दक्षो भक्त्या प्रजापतिः ॥ २९ ॥ ॥ दक्ष उवाच ॥ जय शंकर सोमेश जय सर्वज्ञ शंभवे ॥ जय कल्याणभृच्छंभो जय कालात्मने नमः ॥ ३० ॥ आदिकर्तर्नमस्तेऽस्तु नीलकण्ठ नमोस्तु ते ॥ ब्रह्मप्रिय नमस्तेऽस्तु ब्रह्मरूप नमोऽस्तु ते ॥ ३१ ॥ त्रिमूर्तये नमो देव त्रिधाम परमेश्वर ॥ सर्वमूर्ते नमस्तेऽस्तु त्रैलोक्याधार कामद ॥ ३२ ॥ नमो वेदान्तवेद्याय नमस्ते परमात्मने ॥ यज्ञरूप नमस्तेऽस्तु यज्ञधाम नमोऽस्तु ते ॥३३॥ यज्ञदान नमस्तेऽस्तु हव्यवाह नमोऽस्तु ते ॥ यज्ञहर्त्रे नमस्तेऽस्तु फलदाय नमोऽस्तु ते ॥ ३४ ॥ त्राहि त्राहि जगन्नाथ शरणागतवत्सल ॥ भक्तानामप्यभक्तानां त्वमेव शरणं प्रभो ॥ ३५ ॥ ॥ ब्रह्मोवाच ॥ एवं तु स्तुवतस्तस्य प्रसन्नोऽभून्महेश्वरः ॥ किं ददामीति तं प्राह क्रतुः पूर्णोऽस्तु मे प्रभो ॥ ३६ ॥ तथेत्युवाच भगवान्देवदेवो महेश्वरः ॥ शंकरः सर्वभूतात्मा करुणावरुणालयः ॥ ३७ ॥ क्रतुं कृत्वा ततः पूर्णं तस्य दक्षस्य वै मुने ॥ एवमुक्त्वा स भगवान्भूतैरन्तरधीयत ॥ ३८ ॥ यथागतं सुरा जग्मुः स्वमेव सदनं प्रति ॥ ततः कदाचिद्देवानां दैत्यानां विग्रहो महान् ॥ ३९ ॥ बभूव तत्र दैत्येभ्यो भीता देवाः श्रियः पतिम् ॥ तुष्टुवुः सर्वभावेन वचोभिस्तं जनार्दनम् ॥ ४० ॥ ॥ देवा ऊचुः ॥ शक्रादयोऽपि त्रिदशाः कटाक्षमवेक्ष्य यस्यास्तप आचरन्ति ॥ सा चापि यत्पादरता च लक्ष्मीस्तं ब्रह्मभूतं शरणं प्रपद्ये ॥४१॥ यस्मात्त्रिलोक्यां न परः समानो न चाधिकस्तार्क्ष्यरथान्नृसिंहात् स देवदेवोऽवतु नः समस्तान्महाभयेभ्यः कृपया प्रपन्नान् ॥ ४२ ॥ ॥ ब्रह्मोवाच ॥ ततः प्रसन्नो भगवाञ्छङ्खचक्रगदाधरः ॥ किमर्थमागताः सर्वे तत्कर्ताऽस्मीत्युवाच तान् ॥ ४३ ॥ देवा ऊचुः ॥ भयं च तीव्रं दैत्येभ्यो देवानां मधुसूदन ॥ ततस्त्राणाय देवानां मतिं कुरु जनार्दन ॥ ४४ ॥ ॥ ब्रह्मोवाच ॥ तानागतान्हरिः प्राह ग्रस्तं चक्रं हरेण मे ॥ किं करोमि गतं चक्रं भवन्तश्चार्तिमागताः ॥ ४५ ॥ यान्तु सर्वे देवगणा रक्षा वः क्रियते मया ॥ ४६ ॥ ॥ ब्रह्मोवाच ॥ ततो गतेषु देवेषु विष्णुश्चक्रार्थमुद्यतः ॥ गोदावरीं ततो गत्वा शंभोः पूजां प्रचक्रमे ॥ ४७ ॥ सुवर्णकमलैर्दिव्यैः सुगन्धैर्दशभिः शतैः ॥ भक्तितो नित्यवत्पूजां चक्रे विष्णुरुमापतेः ॥ ४८ ॥ नमः संसारकान्तारमहाभयनिवारिणे ॥ पिनाकिने महेशाय सर्वाभीष्ट

प्रदायिने ॥ ४९ ॥ मंत्रेणानेन भगवान्भक्तियुक्तेन चेतसा ॥ पूजयामास विधिवद्भवानीवल्लभं शिवम् ॥ ५० ॥ एवं संपूज्यमाने तु तयोस्तत्त्व मिदं शृणु ॥ कमलानां सहस्रे तु यदेकं नैव पूर्यते ॥ ५१ ॥ तदाऽसुरारिः स्वं नेत्रमुत्पाट्याघ्यर्मकल्पयत् ॥ अर्घ्यपात्रं करे गृह्य सहस्रकमला न्वितम् ॥ ध्यात्वा शंभुं ददावर्घ्यमनन्यशरणो हरिः ॥ ५२ ॥ ॥ विष्णुरुवाच ॥ त्वमेव देव जानीषे भावमन्तर्गतं नृणाम् ॥ त्वमेव शरणोऽ धीशोऽत्र भवेत्का विचारणा ॥ ५३ ॥ ॥ ब्रह्मोवाच ॥ वदन्नुदश्रुनयनो निलिल्येऽसावितीश्वरे ॥ भवानीसहितः शंभुः पुरस्तादभवत्तदा ॥ ५४ ॥ गाढमालिङ्ग्य विविधैर्वरैरापूरयद्धरिम् ॥ तदेव चक्रमभवन्नेत्रं चापि यथा पुरा ॥ ५५ ॥ ततः सुरगणाः सर्वे तुष्टुवुर्हरिशंकरौ ॥ गङ्गां चापि सरि च्छ्रेष्ठां देवं च वृषभध्वजम् ॥ ५६ ॥ ततः प्रभृति तत्तीर्थं चक्रतीर्थमिति स्मृतम् ॥ यस्यानुश्रवणेनैव मुच्यते सर्वकिल्बिषैः ॥ ५७ ॥ तत्र स्नानं च दानं च यः कुर्यात्पितृतर्पणम् ॥ सर्वपापविनिर्मुक्तः पितृभिः स्वर्गभाग्भवेत् ॥ तत्तु चक्राङ्कितं तीर्थमद्यापि परिदृश्यते ॥ ५८ ॥ इति श्रीब्रह्मपुरा णगतगोतमीमाहात्म्ये चक्रतीर्थवर्णनं नामैकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ ॥ ब्रह्मोवाच ॥ पिप्पलं तीर्थमाख्यातं चक्रतीर्थादनन्तरम् ॥ यत्र चक्रे श्वरो देवश्चक्रमाप यतो हरिः ॥ १ ॥ यत्र विष्णुः स्वयं स्थित्वा चक्रार्थे शंकरं विभुम् ॥ पूजयामास तत्तीर्थं चक्रतीर्थमुदाहृतम् ॥ २ ॥ यत्र प्रीतोऽ भवद्विष्णोः शंभुस्तत्पिप्पलं विदुः ॥ महिमानं यस्य वक्तुं न क्षमोऽप्यहिनायकः ॥ ३ ॥ चक्रेश्वरे पिप्पलेशे नामधेयस्य कारणम् ॥ शृणु नारद तद्भक्त्या साक्षाद्वेदोदितं मया ॥ ४ ॥ दधीचिरिति विख्यातो मुनिरासीद्गुणान्वितः ॥ तस्य भार्या महाप्राज्ञा कुलीना च पतिव्रता ॥ ५ ॥ लोपामुद्रेति या ख्याता स्वसा तस्या गभस्तिनी ॥ इति नाम्ना च विख्याता वडवेति प्रकीर्तिता ॥ ६ ॥ दधीचेः सा प्रिया नित्यं तपस्तेपे तथा महत् ॥ दधीचिरग्निमान्नित्यं गृहधर्मपरायणः ॥ ७ ॥ भागीरथीं समाश्रित्य देवातिथिपरायणः ॥ स्वकलत्ररतः शान्तः कुम्भयोनिरिवापरः ॥ ८ ॥ तस्य प्रभावात्तं देशं नारयो दैत्यदानवाः ॥ आजग्मुर्मुनिशार्दूल यत्रागस्त्यस्य चाऽऽश्रमः ॥ ९ ॥ तत्र देवाः समाजग्मू रुद्रादित्यास्तथाऽश्विनौ ॥ इन्द्रो विष्णुर्यमोऽग्निश्च जित्वा दैत्यानुपागतान् ॥ १० ॥ जयेन जातसंहर्षाः स्तुताश्चैव मरुद्गणैः ॥ दधीचिं मुनिशार्दूलं दृष्ट्वा नेमुः सुरेश्वराः ॥ ॥ ११ ॥ दधीचिर्जातसंहर्षः सुरान्पूज्य पृथक्पृथक् ॥ गृहकृत्यं ततश्चक्रे सुरेभ्यो भार्यया सह ॥ १२ ॥ पृष्टाश्च कुशलं तेन कथाश्चक्रुः सुरा अपि ॥ दधीचिमब्रुवन्देवा भार्यया सुखितं पुनः ॥ १३ ॥ आसीनं हृष्टमनस ऋषिं नत्वा पुनः पुनः ॥ १४ ॥ देवा ऊचुः ॥ किमद्य दुर्लभं लोके ऋषेऽस्माकं भविष्यति ॥ त्वादृशः सकृपो येषु मुनिर्भूकल्पपादपः ॥ १५ ॥ एतदेव फलं पुंसां जीवतां मुनिसत्तम ॥ तीर्थाप्लुतिर्भूतदया दर्शनं च

भवादृशाम् ॥ १६ ॥ यत्स्नेहादुच्यतेऽस्माभिरवधारय तन्मुने ॥ जित्वा दैत्यानिह प्राप्ता हत्वा राक्षसपुंगवान् ॥ १७ ॥ वयं च सुखिनो ब्रह्मंस्त्वयि दृष्टे विशेषतः ॥ नाऽऽयुधैः फलमस्माकं वोढुं नैव क्षमा वयम् ॥ १८ ॥ स्थाप्यदेशं न पश्याम आयुधानां मुनीश्वर ॥ स्वर्गे सुरद्विषो ज्ञात्वा स्थापितानि हरन्ति च ॥ १९ ॥ नयेयुरायुधानीति तथैव च रसातले ॥ तस्मात्तवाश्रमे पुण्ये स्थाप्यन्तेऽस्त्राणि मानद ॥ २० ॥ नैवात्र किंचिद्भयमस्ति विप्र न दानवेभ्यो राक्षसेभ्यश्च घोरम् ॥ त्वदाज्ञया रक्षितपुण्यदेशो न विद्यते तपसा ते समानः ॥ २१ ॥ जितारयो ब्रह्मविदां वरिष्ठं वयं च पूर्वं निहता दैत्यसंघाः ॥ अस्त्रैरलं भारभूतैः कृतार्थैः स्थाप्यं स्थानं ते समीपे मुनीश ॥ २२ ॥ दिव्यान्भोगान्कामिनीभिः समेतान्देवोद्याने नन्दने संभजामः ॥ ततो यामः कृतकार्याः सहेन्द्राः स्वं स्वं स्थानं चाऽऽयुधानां च रक्षा ॥ २३ ॥ त्वया कृता जायतां तत्प्रशाधि समर्थस्त्वं रक्षणे धारणे च ॥ २४ ॥ ॥ ब्रह्मोवाच ॥ तद्वाक्यमाकर्ण्य दधीचिरेवं वाक्यं जगौ विबुधानेवमस्तु ॥ निवार्यमाणः प्रियशीलया स्त्रिया किं देवकार्येण विरुद्धकारिणा ॥ २५ ॥ ये ज्ञातशास्त्राः परमार्थनिष्ठाः संसारचेष्टासु गतानुरागाः ॥ तेषां परार्थव्यसनेन किं मुने येनात्र वाऽमुत्र सुखं न किंचित् ॥ ॥ २६ ॥ देवद्विषो द्वेषमनुप्रयान्ति दत्ते स्थाने विप्रवर्य शृणुष्व ॥ नष्टे हृते चाऽऽयुधानां मुनीश कुप्यन्ति देवा रिपवस्ते भवन्ति ॥ २७ ॥ तस्मान्नेदं वेदविदां वरिष्ठ युक्तं द्रव्ये परकीये ममत्वम् ॥ तावच्च मैत्री द्रव्यभावश्च तावन्नष्टे हृते रिपवस्ते भवन्तिं ॥ २८ ॥ चेदस्ति शक्तिर्द्रव्यदाने ततस्ते दातव्यमेवार्थिने किं विचार्यम् ॥ नो चेत्सन्तः परकार्याणि कुर्युर्वाग्भिर्मनोभिः कृतिभिस्तथैव ॥ २९ ॥ परस्वसंधारणमेतदेव सद्भिर्निरस्तं त्यज कान्त सद्यः ॥ ३० ॥ ॥ ब्रह्मोवाच ॥ एवं प्रियाया वचनं स विप्रो निशम्य भार्यामिदमाह सुभ्रूम् ॥ ३१ ॥ दधीचिरुवाच ॥ पुरा सुराणामनुमान्य भद्रे नेतीति वाणी न सुखं ममैति ॥ ३२ ॥ ॥ ब्रह्मोवाच ॥ श्रुत्वेरितं पत्युरिति प्रियायां दैवं विनाऽन्यत्र नृणां समर्थम् ॥ तूष्णीं स्थितायां सुरसत्तमास्ते संस्थाप्य चास्त्राण्यतिदीप्तिमन्ति ॥ ३३ ॥ नत्वा मुनीन्द्रं ययुरेव लोकान्दैत्यद्विषो न्यस्तशस्त्राः कृतार्थाः ॥ गतेषु देवेषु मुनिप्रवर्यो हृष्टोऽवसद्भार्यया धर्मयुक्तः ॥ ३४ ॥ गते च काले ह्यतिविप्रयुक्ते दैवे वर्षे संख्यया वै सहस्रे ॥ न ते सुरा आयुधानां मुनीश वाचं मनश्चापि तथैव चक्रुः ॥ ३५ ॥ दधीचिरप्याह गभस्तिमोजसा देवारयो मां द्विषंतीह भद्रे ॥ न ते सुरा नेतुकामा भवन्ति संस्थापितान्यत्र वदस्व युक्तम् ॥ ३६ ॥ सा चाऽऽह कान्तं विनयादुक्तमेव त्वं जानीषे नाथ यदत्र युक्तम् ॥ दैत्या हरिष्यन्ति महाप्रवृद्धास्तपोयुक्ता बलिनः स्वायुधानि ॥ ३७ ॥ तदस्त्ररक्षार्थमिदं स चक्रे मन्त्रैस्तु संक्षाल्य जलैश्च पुण्यैः ॥ तद्वारि सर्वास्त्रमयं सुपुण्यं तेजोयुक्तं तच्च

पपौ दधीचिः ॥ ३८ ॥ निर्वीर्यरूपाणि तदायुधानि क्षयं जग्मुः क्रमशः कालयोगात् ॥ सुराः समागत्य दधीचिमूचुर्महाभयं ह्यागतं शात्रवं नः ॥ ३९ ॥ ददस्व चास्त्राणि मुनिप्रवीर यानि त्वदन्ते निहितानि देवैः ॥ दधीचिरप्याह सुरारिभीत्या अनागत्या भवतां चाचिरेण ॥ ४० ॥ अस्त्राणि पीतानि शरीरसंस्थान्युक्तानि युक्तं मम तद्ददन्तु ॥ श्रुत्वा तदुक्तं वचनं तु देवाः प्रोचुस्तमित्थं विनयावनम्राः ॥ ४१ ॥ अस्त्राणि देहीति च वक्तुमेतच्छक्यं न वाऽन्यत्प्रतिवक्तुं मुनीन्द्र ॥ विना च तैः परिभूयेम नित्यं पुष्टारयः क्व प्रयामो मनीश ॥ ४२ ॥ न मर्त्यलोके न तले न नाके वासः सुराणां भविताऽद्य तात ॥ त्वं विप्रवर्यस्तपसा चैव युक्तो नान्यद्वक्तुं युज्यते ते पुरस्तात् ॥ ४३ ॥ विप्रस्तदोवाच मदस्थिसंस्थान्यस्त्राणि हरन्तु न संशयोऽत्र ॥ देवास्तमप्याहुरनेन किं नो ह्यस्त्रैर्हीनाः स्त्रीत्वमाप्ताः सुरेन्द्राः ॥ ४४ ॥ पुनस्तदा चाऽऽह मुनिप्रवीरस्त्यक्ष्ये जीवान्दैहिकान्योगयुक्तः ॥ अस्त्राणि कुर्वन्तु मदस्थिभूतान्यनुत्तमान्युत्तमरूपवन्ति ॥ ४५ ॥ कुरुष्व चेत्याहुरदीनसत्त्वं दधीचिमित्युत्तरमग्निकल्पम् ॥ तदा तु तस्य प्रियमीरयन्ती न सांनिध्ये प्रातिथेयी मुनीश ॥ ४६ ॥ ते चापि देवास्तामदृष्ट्वैव शीघ्रं तस्या भीता विप्रमूचुः कुरुष्व ॥ तत्याज जीवान्दुस्त्यजान्प्रीतियुक्तो यथा सुखं देहमिमं जुषध्वम् ॥ ४७ ॥ मदस्थिभिः प्रीतिमन्तो भवन्तु सुराः सर्वे किंतु देहेन कार्यम् ॥ ४८ ॥ ॥ ब्रह्मोवाच ॥ इत्युक्त्वाऽसौ बद्धपद्मासनस्थो नासाग्रदत्ताक्षिप्रकाशप्रसन्नः ॥ वायुं सर्वाङ्गं मध्यमोद्घाटयोगान्नीत्वा शनैर्दहराकाशगर्भम् ॥ ४९ ॥ यदप्रमेयं परमं पदं यद्ब्रह्मरूपं यदुपासितव्यम् ॥ तत्रैव विन्यस्य धियं महात्मा सायुज्यतां ब्रह्मणोऽसौ जगाम ॥ ५० ॥ निर्जीवतां प्राप्तमभीक्ष्य देवाः कलेवरं तस्य सुराश्च सम्यक् ॥ त्वष्टारमप्यूचुरतित्वरन्तः कुरुष्व चास्त्राणि बहूनि सद्यः ॥ ५१ ॥ स चापि तानाह कथं नु कार्यं कलेवरं ब्राह्मणस्येह देवाः ॥ बिभेमि कर्तुं दारुणं चाक्षमोऽहं विदारितान्यायुधान्युत्तमानि ॥ ५२ ॥ तदस्थिभूतानि करोमि सद्यस्ततो देवा गाः समूचुस्त्वरन्तः ॥५३॥ ॥ देवा ऊचुः ॥ वज्रं मुखं वः क्रियते हितार्थं गावो देवैरायुधार्थं क्षणेन ॥ दधीचिदेहं तु विदार्य यूयमस्थीनि शुद्धानि प्रयच्छताद्य ॥ ५४ ॥ ॥ ब्रह्मोवाच ॥ ता देववाक्याच्च तथैव चक्रुः संलिह्य चास्थीनि ददुः सुराणाम् ॥ सुरास्त्वरा जग्मुरदीनसत्त्वाः स्वमालयं चापि तथैव गावः ॥ ५५ ॥ कृत्वा तथाऽस्त्राणि च देवतानां त्वष्टा जगामाथ महांस्त्वरंस्तदा ॥ ततश्चिराच्छीलवती सुभद्रा भर्तुः प्रिया बालगर्भा त्वरन्ती ॥ ५६ ॥ करे गृहीत्वा कलशं वारिपूर्णं सुमां नत्वा फलपुष्पैः समेत्य ॥ अग्निं च भर्तारमथाऽऽश्रमं च संद्रष्टुकामा ह्याजगामाथ शीघ्रम् ॥ ५७ ॥ संतप्तचित्ता पथि वीक्ष्य कंठाद्भ्रष्टां विभूषां पतितां धरायाम् ॥ पपात हस्तात्करभूषणश्च नेत्रं तथा दक्षिणमुच्छलास ॥ ५८ ॥ हा किं भविष्यद्य चिरेण कष्टमित्यंतरेणैव विचिन्तयन्ती ॥

आगच्छन्तीं तां प्रातिथेयीं तदानीं निवारयामास तदोल्कपातः ॥ सा संभ्रमादागता चाऽऽश्रमं स्वं नैवापश्यत्तत्र भर्तारमग्रे ॥ ५९ ॥ क्व वा गतश्चेति सविस्मया सा पप्रच्छ चाग्निं प्रातिथेयी तदानीम् ॥ अग्निस्तदोवाच सविस्तरं तां देवागमं याचनं वै शरीरे ॥ ६० ॥ अस्थ्नामुपादानमथ प्रयाणं श्रुत्वा सर्वं दुःखिता सा बभूव ॥ दुःखोद्वेगात्सा पपाताथ पृथ्व्यां मन्दं मन्दं वह्निनाऽऽश्वासिता च ॥ ६१ ॥ ॥ प्रातिथेय्युवाच ॥ शापेऽमराणां तु नाहं समर्था अग्निं प्राप्स्ये किं नु कार्यं भवेन्मे ॥ ६२ ॥ ॥ ब्रह्मोवाच ॥ कोपं च दुःखं च नियम्य साध्वी तदाऽवादीद्धर्मयुक्तं च भर्तुः ॥ ६३ ॥ ॥ प्रातिथेय्युवाच ॥ उत्पद्यते यत्तु विनाशि सर्वं न शोच्यमस्तीति मनुष्यलोके ॥ गोविप्रदेवार्थमिह त्यजन्ति प्राणान्प्रियान्पुण्यभाजो मनुष्याः ॥ ६४ ॥ संसारचक्रे परिवर्तमाने देहं समर्थं धर्मयुक्तं त्ववाप्य ॥ प्रियान्प्राणान्देवविप्रार्थहेतोस्ते वै धन्याः प्राणिनो ये त्यजन्ति ॥ ६५ ॥ प्राणाः सर्वेऽस्यापि देहान्वितस्य यातारो वै नात्र संदेहलेशः ॥ एवं ज्ञात्वा विप्रगोदेवदीनाद्यर्थं चैनानुत्सृजन्तीश्वरास्ते ॥ ६६ ॥ निवार्यमाणोऽपि मया प्रपन्नया चकार देवास्त्रपरिग्रहं सः ॥ मनोगतं वेत्त्यथवा विधातुः को मर्त्यलोकातिगचेष्टितस्य ॥ ६७ ॥ ॥ ब्रह्मोवाच ॥ इत्येवमुक्त्वाऽऽपूज्य चाग्नीन्यथावद्भर्तुस्त्वचालोमभिः सा विवेश ॥ गर्भस्थितं बालकं प्रातिथेयी कुक्षिं विदार्याथ करे गृहीत्वा ॥ ६८ ॥ नत्वा च गङ्गां भुवमाश्रमं च वनस्पतीनोषधीराश्रमस्थान् ॥ ६९ ॥ ॥ प्रातिथेय्युवाच ॥ पित्रा हीनो बन्धुभिर्गोत्रजैश्च मात्रा हीनो बालकः सर्व एव ॥ रक्षन्तु सर्वेऽपि च भूतसंघास्तथौषध्यो बालकं लोकपालाः ॥ ७० ॥ ये बालकं मातृपितृप्रहीणं सनिर्विशेषं स्वतनुप्ररूढैः ॥ पश्यन्ति रक्षन्ति त एव नूनं ब्रह्मादिकानामपि वन्दनीयाः ॥ ७१ ॥ ॥ ब्रह्मोवाच ॥ इत्युक्त्वा चात्यजद्बालं भर्तृचित्तपरायणा ॥ पिप्पलानां समीपे तु न्यस्य बालं नमस्य तु ॥ ७२ ॥ अग्निं प्रदक्षिणीकृत्य यज्ञपात्रसमन्विता ॥ विवेशाग्निं प्रातिथेयी भर्त्रा सह दिवं ययौ ॥ ७३ ॥ रुरुदुश्चाऽऽश्रमस्था ये वृक्षाश्च वनवासिनः ॥ पुत्रवत्पोषिता येन ऋषिणा च दधीचिना ॥ ७४ ॥ विना तेन न जीवामस्तया मात्रा विना तथा ॥ मृगाश्च पक्षिणः सर्वे वृक्षाः प्रोचुः परस्परम् ॥ ७५ ॥ वृक्षा ऊचुः ॥ स्वर्गमासेदुषोः पित्रोस्तदपत्येष्वकृत्रिमम् ॥ ये कुर्वन्त्यनिशं स्नेहं त एव कृतिनो नराः ॥ ७६ ॥ दधीचिः प्रातिथेयी वा वीक्षतेऽस्मान्यथा पुरा ॥ तथा पिता न माता वा धिगस्मान्पापिनो वयम् ॥ ७७ ॥ अस्माकमपि सर्वेषामतः प्रभृति निश्चितम् ॥ बालो दधीचिः प्रातिथेयी बालो धर्मः सनातनः ॥ ७८ ॥ ॥ ब्रह्मोवाच ॥ एवमुक्त्वा तदौषध्यो वनस्पतिसमन्विताः ॥ सोमं राजानमभ्येत्य याचिरेऽमृतमुत्तमम् ॥ ७९ ॥ स चापि दत्तवांस्तेभ्यः सोमोऽमृतमनुत्तमम् ॥ ददुर्बालाय ते चापि अमृतं सुरवल्लभम् ॥ ८० ॥ स तेन तृप्तो ववृधे

शुक्लपक्षे यथा शशी ॥ पिप्पलैः पालितो यस्मात्पिप्पलादः स बालकः ॥ प्रवृद्धः पिप्पलानेवमुवाच स्वतिविस्मितः ॥ ८१ ॥ ॥ पिप्पलाद उवाच ॥ मानुषेभ्यो मानुषास्तु जायन्ते पक्षिभिः खगाः ॥ बीजेभ्यो वीरुधो लोके वैषम्यं नैव दृश्यते ॥ वार्क्षस्त्वहं कथं जातो हस्तपादादिजीववान् ॥ ८२ ॥ ॥ ब्रह्मोवाच ॥ वृक्षास्तद्वचनं श्रुत्वा सर्वमूचुर्यथाक्रमम् ॥ दधीचेर्मरणं साध्व्यास्तथा चाग्निप्रवेशनम् ॥ ८३ ॥ अस्थ्नां संहरणं देवैरेतत्सर्वं सविस्तरम् ॥ श्रुत्वा दुःखसमाविष्टो निपपात तदा भुवि ॥ ८४ ॥ आश्वासितः पुनर्वृक्षैर्वाक्यैर्धर्मार्थसंहितैः ॥ आश्वस्तः स पुनः प्राह तदौषधिवनस्पतीन् ॥८५॥ पिप्पलाद उवाच ॥ पितृहन्तॄन्हनिष्येऽहं नान्यथा जीवितुं क्षमः ॥ पितुर्मित्राणि शत्रूंश्च तथा पुत्रोऽनुवर्तते ॥८६॥ स एव पुत्रो योऽन्यस्तु पुत्ररूपो रिपुः स्मृतः ॥ वदन्ति पितृमित्राणि तारयन्त्यहितानपि ॥८७॥ ब्रह्मोवाच ॥ वृक्षास्तं बालमादायसोमान्तिकमथाऽऽययुः ॥ बालवाक्यं तु ते वृक्षाः सोमायाथ न्यवेदन् ॥ श्रुत्वा सोमोऽपि तं बालं पिप्पलादमभाषत ॥ ८८ ॥ सोम उवाच ॥ गृहाण विद्यां विधिवत्समग्रां तपः समृद्धिं च शुभां च वाचम् ॥ शौर्यं च रूपं च बलं च बुद्धिं संप्राप्स्यसे पुत्र मदाज्ञया त्वम् ॥ ८९ ॥ ॥ ब्रह्मोवाच ॥ पिप्पलादस्तमप्याह ओषधीशं विनीतवत् ॥ ९० ॥ ॥ पिप्पलाद उवाच ॥ सर्वमेतद्वृथा मन्ये पितृहन्तृविनिष्कृतिम् ॥ न करोम्यत्र यावच्च तस्मात्तत्प्रथमं वद ॥९१॥ यस्मिन्देशे यत्र काले यस्मिन्देवे च मन्त्रके ॥ यत्र तीर्थे च सिध्येत मत्संकल्पः सुरोत्तम ॥ ९२ ॥ ॥ ब्रह्मोवाच ॥ चन्द्रः प्राह चिरं ध्यात्वा भुक्तिर्वा मुक्तिरेव वा ॥ सर्वं महेश्वराद्देवाज्जायते नात्र संशयः ॥ ९३ ॥ स सोमं पुनरप्याह कथं द्रक्ष्ये महेश्वरम् ॥ बालोऽहं बालबुद्धिश्च न सामर्थ्यं तपस्तथा ॥ ९४ ॥ चन्द्र उवाच ॥ गौतमीं गच्छ भद्र त्वं स्तुहि चक्रेश्वरं हरम् ॥ प्रसन्नस्तु तवेशानो ह्यल्पायासेन वत्सक ॥ ९५॥ प्रीतो भवेन्महादेवः साक्षात्कारुणिकः शिवः ॥ आस्ते साक्षात्कृतः शंभुर्विष्णुना प्रभविष्णुना ॥ ९६ ॥ वरं च दत्तवान्विष्णोश्चक्रं च त्रिदशार्चितम् ॥ गच्छ तत्र महाबुद्धे दण्डके गौतमीं नदीम् ॥ ९७ ॥ चक्रेश्वरं नाम तीर्थं जानन्त्योषधयस्तु तत् ॥ तं गत्वा स्तुहि देवेशं सर्वभावेन शंकरम् ॥ स ते प्रीतमनास्तात सर्वान्कामान्प्रदास्यति ॥ ९८ ॥ ॥ ब्रह्मोवाच ॥ तद्राजवचनाद्ब्रह्मन्पिप्पलादो महामुनिः ॥ आजगाम जगन्नाथो यत्र रुद्रः स चक्रदः ॥ ९९ ॥ तं बालं कृपयाऽऽविष्टाः पिप्पलाः स्वाश्रमान्ययुः ॥ गोदावर्यां ततः स्नात्वा नत्वा त्रिभुवनेश्वरम् ॥ तुष्टाव सर्वभावेन पिप्पलादः शिवं शुचिः ॥ १०० ॥ ॥ पिप्पलाद उवाच ॥ सर्वाणि कर्माणि विहाय धीरास्त्यक्तैषणा निर्जितचित्तवाताः ॥ यं यान्ति मुक्त्यै शरणं प्रयत्नात्तमादिदेवं प्रणमामि शंभुम् ॥ १०१ ॥ यः सर्वसाक्षी सकलान्तरात्मा सर्वेश्वरः सर्वकलानिधानम् ॥ विज्ञाय मच्चित्तगतं समस्तं स मे स्मरारिः करुणां करोतु ॥ १०२ ॥ दिगीश्वराञ्जित्य

सुरार्चितस्य कैलासमान्दोलयतः पुरारेः ॥ अङ्गुष्ठकृत्यैव रसातलादधोगतस्य तस्यैव दशाननस्य ॥ १०३ ॥ आलूनकायस्य गिरं निशम्य विह
स्य देव्या सह दत्तमिष्टम् ॥ तस्मै प्रसन्नः कुपितोऽपि तद्वदयुक्तदाताऽसि महेश्वर त्वम् ॥ १०४॥ सौत्रामणीमृद्धिमधः स चक्रे योऽर्चां हरे नित्यमती
व कृत्वा ॥ वाणः प्रशस्यः कृतवानुच्चपूजां रम्यां मनोज्ञां शशिखण्डमौलेः ॥ १०५ ॥ जित्वा रिपून्देवगणान्प्रपूज्य गुरुं नमस्कर्तुमगाद्दिशाखः ॥
चुकोप दृष्ट्वा गणनाथमूढमङ्के तमारोप्य जहास सोमः ॥ १०६ ॥ ईशाङ्करूढोऽपि शिशुस्वभावान्न मातुरङ्कं प्रमुमोच बालः ॥ क्रुद्धं सुतं बोधितुमप्य
शक्तस्ततोऽर्धनारित्वमवाप सोमः ॥ १०७ ॥ ॥ ब्रह्मोवाच ॥ ॥ ततः स्वयंभूः सुप्रीतः पिप्पलादमभाषत ॥ १०८ ॥ ॥ शिव उवाच ॥ वरं वरय
भद्रं ते पिप्पलाद यथेप्सितम् ॥ १०९ ॥ ॥ पिप्पलाद उवाच ॥ हतो देवैर्महादेव पिता मम महायशाः ॥ अदाम्भिकः सत्यवादी तथा माता पतिव्र
ता ॥ ११० ॥ देवेभ्यश्च तयोर्नाशं श्रुत्वा नाथ सविस्तरम् ॥ दुःखकोपसमाविष्टो नाहं जीवितुमुत्सहे ॥ १११ ॥ तस्मान्मे देहि सामर्थ्यं नाशये
यं सुरान्यथा ॥ अवध्यसेव्यस्त्रैलोक्ये त्वमेव शशिशेखर ॥ ११२ ॥ ॥ ईश्वर उवाच ॥ तार्तीयं नयनं द्रष्टुं यदि शक्नोषि मेऽनघ ॥ ततः समर्थो
भविता देवांच्छेदयितुं भवान् ॥ ११३ ॥ ॥ ब्रह्मोवाच ॥ ततो द्रष्टुं मनश्चक्रे तृतीयं लोचनं विभोः ॥ न शशाक तदोवाच न शक्तोऽस्मीति शंक
रम् ॥ ११४ ॥ ॥ ईश्वर उवाच ॥ किंचित्कुरु तपो बाल यदा द्रक्ष्यसि लोचनम् ॥ तृतीयं त्वं तदाऽभीष्टं प्राप्स्यसे नात्र संशयः ॥ ११५ ॥ ॥
ब्रह्मोवाच ॥ एतच्छ्रुत्वेशानवाक्यं तपसे कृतनिश्चयः ॥ दधीचिसूनुर्धर्मात्मा तत्रैव बहुलाः समाः ॥ ११६ ॥ शिवध्यानैकनिरतो बालोऽपि. बलवा
निव ॥ प्रत्यहं प्रातरुत्थाय स्नात्वा नत्वा गुरूनक्रमात् ॥ ११७ ॥ सुखासीनो मनः कृत्वा सुषुम्नायामनन्यधीः ॥ हस्तस्वस्तिकमारोप्य नाभौ विस्मृ
तसंसृतिः ॥ ११८ ॥ स्थानात्स्थानान्तरोत्कर्षान्विदध्यौ शांभवं महः ॥ ददर्श चक्षुर्देवस्य तृतीयं पिप्पलाशनः ॥ कृताञ्जलिपुटो भूत्वा विनीत
इदमब्रवीत् ॥ ११९ ॥ ॥ पिप्पलाद उवाच ॥ शंभुना देवदेवेन वरो दत्तः पुरा मम ॥ तार्तीयचक्षुषो ज्योतिर्यदा पश्यसि तत्क्षणात् ॥ १२० ॥
सर्वं ते प्रार्थितं सिध्येदित्याह त्रिदशेश्वरः ॥ तस्माद्रिपुविनाशाय हेतुभूतां प्रयच्छ मे ॥ १२१ ॥ तदैव पिप्पलाः प्रोचुर्वडवाऽपि महाद्युते ॥ माता
तव प्रातिथेयी वदन्त्येवं दिवं गता ॥ १२२ ॥ पराभिद्रोहनिरता विस्मृतात्महिता नराः ॥ इतस्ततो भ्रान्तचित्ताः पतन्ति नरकावटे ॥ १२३ ॥
तन्मातृवचनं श्रुत्वा कुपितः पिप्पलाशनः ॥ अभिमाने ज्वलत्यन्तः साधुवादो निरर्थकः ॥ १२४ ॥ देहि देहीति तं प्राह कृत्या नेत्रविनिर्गता ॥
वडवेति स्मरन्विप्रः कृत्याऽपि वडवाकृतिः ॥ १२५ ॥ सर्वसत्त्वविनाशाय प्रभूताऽनलगर्भिणी ॥ गभस्तिनी बालगर्भा या माता पिप्पला

शिनः ॥१२६॥ तद्ध्यानयोगात्तु जाता कृत्या साऽनलगर्भिणी ॥ उत्पन्ना सा महारौद्रा मृत्युजिह्वेव भीषणा ॥१२७॥ अवोचत्पिप्पलादं तं किं कृत्यं मे वदस्व तत् ॥ पिप्पलादोऽपि तां प्राह देवान्खाद रिपून्मम ॥ १२८ ॥ जग्राह सा तथेत्युक्त्वा पिप्पलादं पुरःस्थितम् ॥ स प्राह किमिदं कृत्ये साप्याह त्वयोदितम् ॥ १२९ ॥ देवैश्च निर्मितं देहं ततो भीतः शिवं ययौ ॥ तुष्टाव देवं स मुनिः कृत्यां प्राह तदा शिवः ॥ १३० ॥ ॥ शिव उवाच ॥ योजनान्तःस्थिताञ्जीवान्न गृहाण मदाज्ञया ॥ तस्माद्याहि ततो दूरं कृत्ये कृत्यं ततः कुरु ॥ १३१ ॥ ॥ ब्रह्मोवाच ॥ तीर्थात्तु पिप्पलात्पूर्वं यावद्योजनसंख्यया ॥ प्रातिष्ठद्वडवारूपा कृत्या सा ऋषिनिर्मिता ॥ १३२ ॥ तस्यां जातो महानग्निर्लोकसंहरणक्षमः॥ तं दृष्ट्वा विबुधाः सर्वे त्रस्ताः शंभुमुपागमन् ॥ १३३ ॥ चक्रेश्वरं पिप्पलेशं पिप्पलादेन तोषितम् ॥ स्तुवन्तो भीतमनसः शंभुमूचुर्दिवौकसः ॥ १३४ ॥ ॥ देवा ऊचुः ॥ रक्षस्व शंभो कृत्याऽस्मान्बाधते तद्भवानलः ॥ शरणं भव सर्वेश भीतानामभयप्रद ॥ १३५ ॥ सर्वतः परिभूतानामार्तानां श्रान्तचेतसाम् ॥ सर्वेषामेव जन्तूनां त्वमेव शरणं शिव ॥ १३६ ॥ ऋषिणाऽभ्यर्थिता कृत्या त्वच्चक्षुर्वह्निनिर्गता ॥ सा जिघांसति लोकांस्त्रींस्त्वं नस्त्राता न चेतरः॥१३७॥ ब्रह्मोवाच ॥ तानब्रवीज्जगन्नाथो योजनान्तर्निवासिनः ॥ न बाधते त्वसौ कृत्या तस्माद्यूयमहर्निशम् ॥१३८॥ इहैवाऽऽसध्वममरास्तस्या वो न भयं भवेत् ॥ १३९ ॥ ॥ ब्रह्मोवाच ॥ पुनरूचुः सुरेशानं त्वया दत्तं त्रिविष्टपम् ॥ तत्त्यक्त्वाऽत्र कथं नाथ वत्स्यामस्त्रिदशार्चित ॥ १४० ॥ ॥ ब्रह्मोवाच ॥ देवानां वचनं श्रुत्वा शिवो वाक्यमथाब्रवीत् ॥ १४१ ॥ ॥ शिव उवाच ॥ देवोऽसौ विश्वतश्चक्षुर्यो देवो विश्वतोमुखः ॥ यो रश्मिभिस्तु धमते नित्यं यो जनको मतः ॥ १४२ ॥ स सूर्य एक एवात्र साक्षाद्रूपेण सर्वदा ॥ स्थितिं करोतु तन्मूर्तौ भविष्यन्त्यखिलाः स्थिताः ॥ १४३ ॥ ॥ ब्रह्मोवाच ॥ तथेति शंभुवचनात्पारिजाततरोस्तदा ॥ देवा दिवाकरं चक्रुस्त्वष्टा भास्करमब्रवीत् ॥ १४४ ॥ ॥ त्वष्टोवाच ॥ इहैवाऽऽस्स्व जगत्स्वामिन्रक्षेमान्विबुधान्स्वयम् ॥ स्वांशैश्च वयमप्यत्र तिष्ठामः शंभुसंनिधौ ॥ १४५ ॥ चक्रेश्वरस्य परितो यावद्योजनसंख्यया ॥ गङ्गाया उभयं तीरमासाद्याऽऽसन्सुरोत्तमाः ॥ १४६ ॥ अङ्गुलयर्धार्धमात्रं तु गंगातीरं समाश्रिताः ॥ तिस्रः कोट्यस्तथा पञ्च शतानि मुनिसत्तम ॥ तीर्थानां तत्र व्युष्टिं च कः शृणोति ब्रवीति वा ॥ १४७ ॥ ॥ ब्रह्मोवाच ॥ ततः सुरगणाः सर्वे विनीताः शिवमब्रुवन् ॥ ॥ १४८ ॥ ॥ देवा ऊचुः ॥ पिप्पलादं सुरेशान शमं नय जगन्मय ॥ १४९ ॥ ॥ ब्रह्मोवाच ॥ ओमित्युक्त्वा जगन्नाथः पिप्पलादमवोचत ॥ ॥ १५० ॥ ॥ शिव उवाच ॥ नाशितेष्वपि देवेषु पिता ते नाऽऽगमिष्यति ॥ दत्ताः पित्रा तव प्राणा देवानां कार्यसिद्धये ॥ १५१ ॥ दीनार्तकरुणा

